॥ अर्हम् ॥

# ॥ श्रीप्रद्युम्नचरित्र—महाकाव्यम् ॥

प्रणेता—

श्रीशान्तिचन्द्रोपाध्यायान्तेवासी रत्नचन्द्रो गणी

संशोधयित्री, प्रकाशयित्री च—

वि, बि एण्ड महाशयानां मण्डली।

वीरवर्षम्—२४६२। विक्रमवर्षम्—१९७४। इसुवर्षम्—१९१८।

मूल्यम्—रूप्यकद्वयम्

आतमदृद्धैः पुरा प्रोक्त तदूयूय शृणुताऽर्भकाः ! । यस्तु साहसमासाद्य वह्निकुण्डं विशेद्यदि ॥ १३२ ॥
वह्निधौतमिव स्वर्णं रूपमाप्नोत्यनश्वरम् । अग्निष्वन्येषु न दहेद्देहस्तस्य चिरादपि ॥ १३३ ॥
इति शृण्वान एवाऽयं पतति स्म च साहसी । जले स्नानमिवाऽकार्षीद् वह्नौ तापादशङ्कितः ॥ १३४ ॥
तावदुत्तस्थिवान् देवस्तस्याऽधिष्ठायक क्रुधा । अरे ! कोऽस्ति ममर्दद योऽग्निकुण्डं नराधमः ॥ १३५ ॥
तावज्जगाद हरिभूः मां मा वद नराधमम् । नरोत्तमं वदेः किं तु सत्त्वैकगुणमन्दिरम् ॥ १३६ ॥
नरोत्तमं विना कोऽत्र प्रवेष्टुमपि शक्नुयात् । विमृश्येति सुधाहार ! पूजां कुरु ममोचिताम् ॥ १३७ ॥
इत्युक्त एव सन्तुष्टो वाससी द्वे ददौ सुरः । जाते च मलिने यत्ते वन्हौ शुद्धिं किलाप्नुतः ॥ १३८ ॥
अद्यतोऽहं त्वदीयोऽस्मि किङ्करो वश्यतामितः । इत्युक्त्वा तं गृहीत्वाशु वन्हेर्मण्डलतो बहिः ॥ १३९ ॥
चरूपं ददृशुस्तेऽथाऽसूयाश्यामलिताननाः । अग्निधौतमिव स्वर्णं जातं केशवनन्दनम् ॥ १४० ॥ (युग्मम्)
वार्तामशेषां तेषां च कथयित्वा मुदं दधत् । लाभ पञ्चममासाद्य पुनर्लाभोत्सुकोऽभवत् ॥ १४१ ॥
पुनः क्रीडापरास्ते च मेषाकारं गिरिं ययुः । दूरस्थितोऽवदत् वज्रमुखोऽमर्षणपुङ्गवः ॥ १४२ ॥
मेषाकृतिगिरेरस्य विशेत्यः शृङ्गयोर्द्वयोः । प्राप्नोत्यपूर्वं लाभं स साहसैकगुणान्वितः ॥ १४३ ॥
इति भ्रातृवचः श्रुत्वा तथैव प्रत्यपद्यत । ऋजुधीर्नैव जानाति यतो जडविचेष्टितम् ॥ १४४ ॥

१ प्रद्युम्न ।

समारूढो गिरिं यावत्स पञ्चाननसाहसः । तावत्ते मिलितुं लग्ने शृङ्गे द्वे पश्यति स्म सः ॥ १४५ ॥
ज्ञात्वा च देवमायां तां कूर्पराभ्यां विहत्य ते । विशति स्म गताशङ्कस्तावदाविरभूत् सुरः ॥ १४६ ॥
रे मां बुभुक्षितं मत्वा मांसपिण्डः क आययौ । अद्य तृप्तो भविष्यामि मांसपिण्डेन चामुना ॥ १४७ ॥
रौक्मिणेयोऽप्युवाचैवं सम्यक् प्रत्युत्तरं वचः । त्वां च बुभुक्षितं मत्वा हन्तुमेव समागतः ॥ १४८ ॥
बुभुक्षायाः कथं सोढा वेदनामिति चिन्तयन् । इत्युक्ते राक्षसः क्रुद्धः समागान्निकटे पुनः ॥ १४९ ॥
सोऽपि युद्धे जितस्तेन नवीनबलशालिना । जीर्णप्रायबलोऽभ्येत्य प्रणनाम महाबलम् ॥ १५० ॥
जितोऽस्म्यहं त्वमेकेन पुंसा नान्येन केनचित् । इत्युक्त्वा स ददौ हारं कुण्डलद्वयसंयुतम् ॥ १५१ ॥
सेवकोऽस्मि त्वदीयोऽहं त्वं मदीयः प्रभुः प्रभुः[1] । कार्याय प्रेरणीयोऽहं त्वया गण्यः पदातिवत् ॥ १५२ ॥
इत्युक्त्वोपत्यकायां स मुञ्चति स्म गिरेरमुम् । पश्यति स्म च सर्वेऽपि हारकुण्डलमण्डितम् ॥ १५३ ॥
वदन् वार्तां स तस्याऽपि गिरेः शिखरसम्भवाम् । षष्ठं लाभमवाप्याशु लाभेच्छुरभवत्पुनः ॥ १५४ ॥
दृष्ट्वा तं मदनं सर्वे लाभसर्वस्वसंयुतम् । चिन्तयामासुरनिशमसूयापरचेतसः ॥ १५५ ॥
मारणीयो ध्रुवं सद्यः पश्चाद्भावी सुदुःशकः । उत्पन्न एव दहनः शमनीयो जलादिना ॥ १५६ ॥
तदा वज्रमुखो भ्रातॄनग्रजन्माऽनुजन्मनः । प्रोचे मोचपलाः सर्वे भवन्तु किल बालकाः १५७ ॥

१ समर्थः ।

अधुनापि दशोपायाः सन्त्यस्य वधकैतवे । मारणीयो मया लोभी सुखं पश्यन्तु मे धियम् ॥ १५८ ॥
इति मन्त्रपरास्तेऽथ प्रद्युम्नेन सहान्विताः । विजयार्द्धगिरेः शोभां पश्यन्तो बभ्रमुः सुखम् ॥ १५९ ॥
चूतद्रुमभितो वृत्त शाखाशतमनोहरम् । महन्मानफलैर्व्याप्तं भ्रमद्भ्रामरसंकुलम् ॥ १६० ॥
दृष्ट्वा वज्रमुखः प्राह दृढैश्चोक्तं विदांवरैः । योऽस्मिन्भूते समारुह्य फलं भुंक्तेऽतिपक्त्रिमम् ॥ १६१ ॥
नित्ययौवनवान् भूत्वा समायाति स निश्चितम् । इत्येतद्वचनं श्रुत्वा रुरोहाऽऽम्रतरुं वरम् ॥ १६२ ॥
उच्चैःशाखां समारूढो लाव लाव फलानि सः । आदमाद क्षुरिकया कृत्वा कृत्वा च खण्डशः ॥ १६३ ॥
क्रीडापरश्चिरं तस्थौ निर्विशंकमना बली । तावत् कपिरूपधरः सुरः क्रोधात् समाययौ ॥ १६४ ॥
किमारूढोऽसि रे पाप ! सहकारतरौ मम । फलास्वादफलं तस्य प्राप्नुहीति तदाऽवदत् ॥ १६५ ॥
नरोत्तमसुतः प्रोचे रे रे मूढ ! न वेत्सि किम् । वृक्षाः परोपकारार्थमुप्ताः सन्ति फलादाभिः ॥ १६६ ॥
वव्बूलवत् त्वं भवसि फलास्वादान्तरापकृत्। कथं सुराधमो नासि नीचकृत्यं समाचरन् ॥ १६७ ॥
इत्युक्तोऽपि सुर क्रोधाद्युद्धार्थं समुपस्थितः । जिग्ये च वलिना तेन कपिरूपं जहौ पुन. ॥ १६८ ॥
प्रोवाच स नमन्नग्रे सहस्वागो मदीयकम् । गृहाण प्राभृतं दीयमानं त्वं च कृपां कुरु ॥ १६९ ॥
इत्युक्त्वाऽदात्स मुकुटं पादुके व्योमगे पुनः । किंकरोऽस्मि महाभाग ! पुनः कार्यं निवेदय ॥ १७०॥
इत्युक्त्वा स सुरोऽमुञ्चत् सहकारतरोस्तले । पूजितं भूषितं दृष्ट्वा जातास्तेऽमर्षपूरिताः १७१ ॥

वार्तां तां सकलां कुर्वन् मुमुदे कृष्णनन्दनः । लाभं सप्तममासाद्य पुनर्लाभमियेष च ॥ १७२ ॥
रममाणास्ततो जग्मुः कुमारा मारसंयुताः । ददृशुश्च कपित्थाख्यं कपित्थबहुलं वनम् ॥ १७३ ॥
दृष्ट्वा वज्रमुखोऽवोचद् वृद्धवाक्यं निशम्यताम् । वनं यः प्रविशेदेतदधिष्ठातृसुराश्रितम् ॥ १७४ ॥
प्राप्नोति सुषमां काञ्चिदकथ्यां वचनैरपि । इति श्रुत्वा हरेः सूनुराह यास्याम्यहं मुदा ॥ १७५ ॥
इत्युक्त्वा तैरनुज्ञातो विवेश वनगह्वरम् । आरुरोह कपित्थद्रुं महत्पक्वफलान्वितम् ॥ १७६ ॥
खादं खादं मुदं प्राप त्याजं त्याजं च तत्त्वचः । तावत्तत्र समायात इभरूपधरः[१] सुरः ॥ १७७ ॥
तैलाञ्जनमिव श्यामः करमुल्लालयन् भृशम् । मुशलप्रलम्बदन्तः प्रक्षरन्मदनिर्झरः ॥ १७८ ॥
यावद्गृहीतुं मदनं यतते करचालनात् । तावदेव वशीकृत्य गजशिक्षाविचक्षणः ॥ १७९ ॥
लीलयाऽऽरूढवान् सद्यः पादौ विन्यस्य दन्तयोः । चपेटाभिः प्रदत्ताभिर्विमर्दं तं चकार च ॥ १८० ॥ (युग्मम्)
वशीकृतो गजसुरः सद्यः प्रमुदितोऽवदत् । तवास्म्यहं कामगजः संस्मर्यः कार्यमिच्छता ॥ १८१ ॥
इत्युक्त्वा स ददौ हारमामलप्रभमौक्तिकम् । मुमोच च सुखं भूमौ कपित्थात्तं महातरोः १८२ ॥
क्रमतः स हसन्नुच्चैर्निःसृत्य वनगह्वरात् । समाययौ बहिर्यत्र कुमाराः सन्ति ते खलाः ॥ १८३ ॥
इर्ष्याश्यामाननास्तं च ददृशुर्हारपूजितम् । वार्तामशेषां कुर्वन् सोऽष्टमं लाभं शशंस च ॥ १८४ ॥

१ हस्तीरूपधरः ।

पुन क्रीडाजुपः सर्वे जगुस्ते दुष्टबुद्धयः । सुबुद्धिना तेन युक्ताः काकाः किं मानसौकसा ॥ १८५ ॥
एकशृङ्गोऽचलोऽथागाद् दूरे स्थित्वाऽवदत् पवि । इम गिरिं समारूढो लभते सम्पद वराम् ॥ १८६ ॥
इति वृद्धवचोऽश्रावि स्मृतिमायाच तद्वचः । दृष्ट्वा दूरे गिरिं प्रोच्चैः भूरिकौतुकसयुतम् ॥ १८७ ॥
इति श्रुत्वाऽवदत् हर्षात् प्रद्युम्नः पविमग्रजम् । अत्रापि हि मया गम्यं प्राप्याऽऽज्ञां तव लाभदाम् ॥ १८८ ॥
भ्रातस्त्वमेव याहीति प्रोक्ते तेनाऽग्रजन्मना । अयासीदेकशिखरं गच्छत्पञ्चास्यभीषणम् ॥ १८९ ॥
केसरीव समारूढो गत्वा शिखरमुच्चकैः । सिंहनाद प्रकुर्वाणो गजशाव इवाथ च ॥ १९० ॥
गजगर्जा वितन्वानोऽथवा हयकिशोरवत् । हयहेषारव चक्रे तारगंभीररावकृत् ॥ १९१ ॥
सद्यस्तत् ध्वनित श्रुत्वा प्रक्रुद्धो भुजगेश्वरः । फटाटोप वितन्वानो युद्धार्थं समुपेयिवान् ॥ १९२ ॥
जाते तेनोल्वणे युद्धेऽजैषीन्मीनध्वजोऽथ तम् । तुण्डे जग्राह भुजगाकारधारिणमुच्चकैः ॥ १९३ ॥
आस्ये गृहीत एवासौ निर्बलो मूलरूपभृत् । सद्यो नम्रतरो भूत्वा प्रोचिवान् वचनं ह्यदः ॥ १९४ ॥
साहसेनैव तुष्टोऽह वदामि हरिनन्दन । निस्पृहोऽसि तथाऽप्येतद्गृहाणाऽनुगृहाण माम् ॥ १९५ ॥
इत्युक्त्वा हयरत्नं स खड्गरत्नं तथैव च । क्षुरिका वज्रकवचं मुद्रिकां दत्तवान् मुदा ॥ १९६ ॥
त्वदीयोऽह भृत्य इव त्वया मुक्तो वसाम्यथ । मयोग्य कार्यमादेश्य समागम्य पुनर्गृहे ॥ १९७ ॥
इत्युक्त्वा मदन नीत्वा यानारूढमिवाऽमरः । तिरोधान्मदनोऽथाऽगाद् भूतलं वस्तुसंयुतः ॥ १९८ ॥

हयरत्नं समारुह्य खड्गरत्नादिभूषितः । आययौ यत्र ते सन्ति भाग्यहीनाः कुमारकाः ॥ १९९ ॥
दृष्टे तस्मिन् क्षारपातोऽभवत्तन्नेत्रयोर्भृशम् । चिन्तयामासुरन्तस्ते कुर्मः किं दैववर्जिताः ॥ २०० ॥
चिन्तितादन्यदेव स्याद्विपरीतविधेर्बलात् । तदा वज्रमुखः प्रोचे चिन्तां कुरुत माऽर्भकाः ॥ २०१ ॥
उपाया बहवः सन्ति मारणेऽस्य शिशोरथ । आगाच्चिकटवर्त्येष महाडम्बरपूर्वकम् ॥ २०२ ॥
तदा हसन् पविः प्रोचे सुखेन भ्रातरागतः । त्वत्प्रसादादिति वदन् पंक्तौ तेषामुपाविशत् ॥ २०३ ॥
दन्तांशुभिर्विशदयन् दन्तांशुकमधश्वरम् । अथोदन्तमशेषं तं यथावृत्तं तथाऽवदत् ॥ २०४ ॥
पश्यन्तु हयरत्नादि तदभिज्ञानमर्भकाः । नवमोऽयं महान् लाभो नवो युष्मत्प्रसादितः ॥ २०५ ॥
इत्युक्त्वा मुदितो रेमे ग्रहैरिव समं तु तैः । शशीव शारदः सर्वकलावान् मदनो बली ॥ २०६ ॥
ततः केलिं वितन्वानाः कपटस्नेहदर्शिनः । रावणाख्यं गिरिं जग्मुः प्रद्युम्नेन सहान्विताः ॥ २०७ ॥
तदा पापोऽग्रजोऽवोचद् वज्रो वज्रमना अथ । रावणाख्यो गिरिरसौ वृद्धैः ख्यातोऽनुभावभृत् ॥ २०८ ॥
अत्रारोहति यो धीमान् महासाहससंयुतः । सम्पदो बहुला नीत्वा स आगच्छति भाग्यवान् ॥ २०९ ॥
इति शृण्वन् स एवाऽभूद् रोमाञ्चकवचं दधत् । तदारोहाय सज्जोऽभूत् सत्त्वपाथेयसंयुतः ॥ २१० ॥
बद्ध्वा परिकरं सद्यस्तमारूढो गिरिं प्रति । शिखरं प्राप हर्यक्ष इवौजस्वी विशालहृत् ॥ २११ ॥
शुश्राव मनुजध्वानं तदधिष्ठातृनिर्जरः । आगात् कोपारुणे नेत्रे कुर्वाणो मदनं प्रति ॥ २१२ ॥

उवाच किमरे बालागतो मद्वेश्मपर्वतम् । सद्योऽवतर मूढास्माद्यथा रूढस्तथैव भोः! ॥ २१३ ॥
उवाच मदनः सत्त्वमन्दिरं गुणरत्नभूः । दन्तांशूनानयन् दन्तच्छदस्योपरि बन्धुरान् ॥ २१४ ॥
अवताराय नागा भोः किंतु वासार्थमागमम् । त्वां निर्वास्य गिरेरस्मात् करिष्ये वासवेश्म तु ॥ २१५ ॥
इत्युक्तश्चिन्तयामास साहसी कोऽपि दृश्यते । मत्तोऽधिकोऽयं बलवान् सान्धिश्चानेन युक्तिवान् ॥ २१६ ॥
अन्यथा मे गृहं लाति बलच्छलपरो ह्ययम् । इत्यन्तर्विमृशन्नाह कृपां कुरु ममोपरि ॥ २१७ ॥
अहं ते वशवर्त्यस्मि तवाज्ञापर एव हि । उपहारं क्रियमाणं पश्य त्वं सौम्यया दृशा ॥ २१८ ॥
इत्युक्त्वाऽग्रे मुमोचाशु कण्ठभूषणमुत्तमम् । अङ्गदे कटकौ चैव कटिसूत्रसमन्वितौ ॥ २१९ ॥
गृहीत्वा वररत्नानि भूषणानि गिरेस्ततः । आगतो मिलितश्चाशु वस्त्राभरणभासुरः ॥ २२० ॥
ईर्ष्याकलुषितास्तेऽथ दृक्कोणेनैव दूरतः । पश्यन्ति स्म समायान्तं निकटे भूषिताङ्गकम् ॥ २२१ ॥
अत्यासन्नागतं तं चालिलिङ्गुश्छद्महार्दतः । वार्तामशेषां कुर्वाणो लाभं दशममाह तान् ॥ २२२ ॥
ततोऽथ क्रीडया जग्मुः वराहवदनं गिरिम् । उपत्यकां समध्यास्य वृद्धवाक्यानि सोऽवदत् ॥ २२३ ॥
शृणुत भ्रातरः सर्वे वराहवदनं गिरिम् । आरोहति स्वशक्त्या यः पूजामाप्नोति तत्सुरात् ॥ २२४ ॥
शृण्वन्नेव प्रववृत्ते गन्तुं साहसशालः । आरूढो विषमं तं च शनैर्मुञ्चन् पदानि सः ॥ २२५ ॥
समायातं च तं दृष्ट्वा वदनं मीलयन्नभूत् । तदधिष्ठातृत्रिदशः प्रद्युम्नग्रहणस्पृहः ॥ २२६ ॥

कूर्पराभ्यां मुखं हत्वा दन्तान् सर्वानपातयत् । सुखं स निर्ययौ तस्माद्बलच्छलविशारदः ॥ २२७ ॥
मुदितस्तद्बलेनाऽसौ साहसेन च तादृशा । प्रणनाम समागत्य ददौ शङ्खं जयाभिधम् ॥ २२८ ॥
धनुः पुष्पमयं चान्यदुवाच च सुधागिरा । अहं ते वशवर्त्यस्मि स्मरेः कार्येषु मां पुनः ॥ २२९ ॥
स्मृत एवागमिष्यामि स्वाम्यादिष्टपदातिवत् । इति पूजाविधिं प्राप्य तस्मात् सुखमवातरत् ॥ २३० ॥
आगत्य मिलितस्तेषामीर्ष्याकलुषितात्मनाम् । वार्तामशेषां तां कृत्वाऽकरोत्तानतिदुःखिनः ॥ २३१ ॥
एकादशं तु संप्राप्य लाभं मोदभरं वहन् । स चिक्रीड पुनः सार्द्धं भ्रातृभिर्भाग्यवान् भृशम् ॥ २३२ ॥
क्रमात्ते मिलिताः सर्वे जग्मुः पद्मवने वनम् । दूरस्थितो जगादैव शठो वज्रमुखो हठी ॥ २३३ ॥
अत्र यो याति निर्भीको निर्भयां श्रियमाप्य सः । समायातीति मदनः श्रुत्वा गन्तुं मनोऽकरोत् ॥ २३४ ॥
अहं याम्यनुमन्यस्वेत्युक्तो सोऽवग् यथारुचि । तान् मुक्त्वा प्राविशत्तस्मिन् मनोभूः सत्त्वशम्बलः ॥ २३५ ॥
यावद्वनान्तः संप्राप्तस्तावदेकं ददर्श सः । खेचरं गाढबन्धेन बद्धं क्रन्दन्तमुच्चकैः ॥ २३६ ॥
पप्रच्छ तं च मदनः कोसि त्वं कथमीदृशीम् । दशां प्राप्तोऽसि हा मित्र! वद मां मित्रमुत्तमम् ॥ २३७ ॥
स प्राह हे महाभाग ! मम भाग्यात्त्वमागतः । मनोजवाऽभिधानोऽहं विद्यावान् भुवि विश्रुतः ॥ २३८ ॥
वसन्तकाऽभिधानेन च्छलं प्राप्य खचारिणा । बद्धोऽस्मि पूर्ववैरेण करुणात्यक्तचेतसा ॥ २३९ ॥
निष्कारणोऽसि बन्धुस्त्वं बन्धनात् मां विमोचय । सद्यश्चकर्त मदनः तेनेत्युक्तो महाबलः ॥ २४० ॥

यन्त्रनानि समग्राणि सितामुरिकथा त्वया । गतमन्त्रः कृतः सद्यो विद्याधर मनोजवः ॥ २४१ ॥
समानधर्मता जाने तरणेः सज्जनस्य च । उभयोर्न विचारोऽस्त्युपकारे जगतां यतः ॥ २४२ ॥
मनोजवस्तमापृच्छ्य मदनं गतवान् द्रुतम् । नश्यन्त वैरिणं यद्धुं गत्वा तं च गृहीतवान् ॥ २४३ ॥
हस्तागतेषु केशेषु तं गृहीत्वा समागतः । आगत्य मदनं प्रोचे प्राणाः सन्ति तवैव मे ॥ २४४ ॥
निष्कारणोपकारी त्वं यत्तेऽसे नास्ति तन्मम । अनृणो येन दत्तेन भवेयं वस्तुना तव ॥ २४५ ॥
परन्तु भृत्यं जानीहि प्राभृतं मे गृहाण तत् । इत्युक्त्वा स ददौ तस्मै विद्याद्वितयमुत्तमम् ॥ २४६ ॥
हारं मुक्ताफलाधारं महामूल्यं मनोहरम् । तथेन्द्रजालकृद्विद्यां तदोवाच श्रियाः सुतः ॥ २४७ ॥
तदा गृह्णामि हे मित्र ! मुञ्चसीमं यदा रिपुम् । गाढं गृहीतं केशेषु नान्यथेति प्रतिश्रवः ॥ २४८ ॥
तदा मनोजवः प्रोचे स्वामी त्वं मेऽसि निश्चितम् । स भृत्य एव न स्याद्यः स्वामिवाचां विघातकृत् ॥ २४९ ॥
त्वद्गिराऽथ मया मुक्तः इत्युक्त्वा स मुमोच तम् । उवाच स पुनर्वाचमुभयोः सुहितावहाम् ॥ २५० ॥
गाढमालिङ्गनं दत्त्वा मैत्रीं च कुरुतां मिथः । निरस्यतां पूर्ववैरं मयि पश्यति साक्षिके ॥ २५१ ॥
सत्रं तौ चक्रतुः सद्यो नागाविव वशं गतौ । मान्त्रिकस्येव तस्योक्त्या सन्तुष्टोऽलात्स ढौकनम् ॥ २५२ ॥
तदा वसन्तो विद्यावान् योग्यं मत्वा वरं च तम् । दत्तवान् कन्यकां स्वीयां नाम्ना तिलकसुन्दरीम् ॥ २५३ ॥
सर्वांगाभरणभूषां सर्वलक्षणलक्षिताम् । पुण्यैः पूर्वकृतैः प्राप्यामुपायंस्त शुभे क्षणे ॥ २५४ ॥

कालं कियन्तं तत्राऽस्थाद् रममाणस्तया समम् । तदा ते चिन्तयामासुः कुमाराश्छद्मवैरिणः ॥ २५५ ॥
अद्यास्माकं चिन्तितानि समभायन्त सार्थताम् । मृतो राज्यहरोऽस्माकं चिरमागान्न यत्ततः ॥ २५६ ॥
इति प्रमोदमापन्ना हसन्तश्च परस्परम् । कांदविकाऽट्टात्तु भक्ष्यं विभज्याद्युः प्रमोदतः ॥ २५७ ॥
अथ श्वशुरपक्षीयैर्वृतः स्वर्णविमानगः । पत्न्या तिलकसुन्दर्या वामपार्श्वे निविष्टया ॥ २५८ ॥
सद्यस्कोद्वाहसामग्रीसंयुतोऽगान्मनःसुतः । तं दृष्ट्वा चकिता जाता आगच्छन्नस्ति कः खलु ॥ २५९ ॥
क्षणात् समीपमागत्य तेजोराशीरिवाम्बरात् । स्थितं विमानं तत्पार्श्वे तस्मात् सद्यो विनिर्ययौ ॥ २६० ॥
आगच्छागच्छ रे भ्रातरिति ते छद्मतोऽवदन् । इयान विलम्बः किं जातो वद सर्वं सहोदर ! ॥ २६१ ॥
इत्युक्ते सोऽवदद्वार्तां कन्योद्वाहावसानकाम् । श्रुत्वा ते मुखसन्तुष्टा जाताश्चान्तरमर्षणाः ॥ २६२ ॥
इति स द्वादशं लाभं प्राप्य गाढप्रमोदभाक् । अग्निवन्नाप सन्तोषं भूरिकाष्ठेन्धनाप्तितः ॥ २६३ ॥
अथाऽन्येद्युः कुमारास्ते रममाणा गिरौ सुखम् । वैताढ्ये ददृशुस्तत्र वनं कालवनाभिधम् ॥ २६४ ॥
तस्माद्दूरास्थितः प्रोचे पन्याख्यो विष्णुनन्दनम् । अत्र यः सत्त्ववान् याति लभेत श्रियमुत्तमाम् ॥ २६५ ॥
एतत् श्रुत्वा गतस्तत्र प्रद्युम्नोऽधिकलोभवान् । लाभाल्लोभः प्रवर्द्धेत न्यायं सत्यापयन्निव ॥ २६६ ॥
गतस्सन् रमणं देशं शीतलच्छायसंयुतम् । प्राप्य चिक्रीड मदवान् ननर्त च जहास च ॥ २६७ ॥
उन्मादध्वनितं श्रुत्वा तदधिष्ठातृनिर्जरः । हक्कयंस्तारतारंस आययौ योद्धुमुद्धतः ॥ २६८ ॥

बाहुभ्यामिव पक्षाभ्यां मराळ इव मानसम् । ततार वाप्यां स क्रीडन् यथेच्छं कृतधावनः ॥ ११९ ॥ ( युग्मम् )
जलक्रीडाध्वनि श्रुत्वा तस्या नाथः समाययौ । अरे रे कुरुते कोऽयं मलिनां देहधावनात् ॥ १२० ॥
अकालमृत्युमासाद्य याहि त्वं दुर्मते द्रुतम् । अस्मान्मे खड्गमाणिक्याद् वदन्निति पुरोऽभवत् ॥ १२१ ॥
तदोचे रुक्मिणीपुत्रः महतानेकशात्रवः । अरे अज्ञान ! किं ब्रूषे बलं दर्शय मां पुनः ॥ १२२ ॥
इत्युक्त्वा तस्य चाच्छिद्य लाति स्म स बलादसिम् । आयुधानि हि तस्यैव यो यतो बलवान् खलु ॥ १२३ ॥
गृहीते खड्गरत्ने च स किं कुर्याद्धतायुधः । लूनपक्षो हि किं कुर्यात् पक्षी पक्षबलो यतः ॥ १२४ ॥
पराक्रमं विलोक्याऽथ चमत्कारमवाप सः । आगत्य पादनम्रः सन्नुवाच रचिताञ्जलिः ॥ १२५ ॥
अस्यामनेके पुरुषा आगता निहता मया । त्वत्समो न परः कोऽपि दृष्टः सत्यपराक्रमी ॥ १२६ ॥
यतः—अहयो बहवः सन्ति भेकभक्षणतत्पराः । एक एव स शेषाऽहिः धरित्रीधरणक्षमः ॥ १२७ ॥
एवं चिरमभिष्टुत्य ददौ मीनध्वजं वरम् । येन मीनध्वज इति ख्यातिमाप जगत्त्रये ॥ १२८ ॥
अनेकजातिपद्मैश्च पूजितो निर्ययौ ततः । हस्ते मीनध्वजं कुर्वन् कुर्वन् सुरभि दिग्व्रजम् ॥ १२९ ॥
ईर्ष्यादग्धदृशस्ते तु भवन्ति स्म विलोक्य तम् । लाभं चतुर्थं स प्राप्याऽकरोत् क्रीडा अनेकशः ॥ १३० ॥
इतस्ततो भ्रमन्तस्ते चञ्चला इव वायवः । अग्निकुण्डं समासाद्य प्रोचिवान् विदुराननः ॥ १३१ ॥

१ हस । २ वज्राना ।

अरे दुष्ट ! दुराचार ! किं मुमूर्षुरसि स्वयम् । मयि नागाधिपे यत्त्वं सदृमन्यत समागमः ॥ १०६ ॥
तदा तं मदनोऽवोचदहं बालोऽस्मि साम्प्रतम् । मुमूर्षुरस्मि नाऽहं तत् किमुत त्वं जरी यतः ॥ १०७ ॥
तेनैव त्वं मया सार्द्धं जल्पसि स्म निरङ्कुशः । सद्यो यमग्रहं नेष्ये त्वदिच्छापुरकोऽस्म्यहम् ॥ १०८ ॥
अनयैव वचोयुक्त्या सन्तोषं प्राप नागराट् । उवाच वत्स ! ज्ञातं ते सर्वं वंशादिकं मया ॥ १०९ ॥
अमुना साहसेनैव वैदग्ध्यवचसा तव । रञ्जितोऽस्मि महाभाग ! गृहाण त्वं मयाऽर्पितम् ॥ ११० ॥
इत्युक्त्वा स ददौ शय्यामिच्छास्वापप्रबोधिकाम् । स्वहस्तवल्लकीं चापि पादपीठयुगासनम् ॥ १११ ॥
तत्क्षणं गृहनिर्माण-विद्यां चादत्त हृद्भवे । आज्ञाकरोऽस्मि ते नित्यमुवाचैवं कृताञ्जलिः ॥ ११२ ॥
ततोऽपि पूजां स प्राप्य मिलति स्म च तान् प्रति । जाताऽभ्यसूया अधिकं पृच्छन्ति स्म कुतूहलात् ॥ ११३ ॥
शशंसे सोऽपि वृत्तान्तं स्वभाग्योदयसूचकम् । एवं तृतीयं संप्राप्य लाभं रेमे च तैः समम् ॥ ११४ ॥
अथ ते समेनपत्थ्याः समानवयसस्तथा । क्रीडन्तो नैककेलीभिर्वापीं ददृशुरादरात् ॥ ११५ ॥
तस्यास्तु दूरतः स्थित्वा प्रोचे वज्रमुखः खलः । य एतस्यां हि निर्भीकः स्नानं कुर्याद्यथारुचि ॥ ११६ ॥
प्राप्नोति रूपं स्वर्गस्त्रीकार्मणं सर्वसम्पदाम् । निलयश्च भवत्याशु तीर्थस्याऽस्य प्रभावतः ॥ ११७ ॥
तस्य वाचमिति श्रुत्वा साहसैकसखः सुधीः । पपात वाप्यां स्नानार्थी स्वर्गनद्यामिवेभराट् ॥ ११८ ॥

१ वीणाम । २ कामदेवाय-प्रद्युम्नाय । ३ ईर्ष्या । ४ कथयामास ।

अमीभिर्वस्तुसम्भारैः पूजयित्वा च वाक्स्रजा । पूज्य पूजयति स्मोच्चै रक्षोऽधीशो वशीकृतः ॥ ९३ ॥
किङ्करोऽस्मि सदा नाथ ! चिन्तनीयः पदातिवत् । यदादिशसि तत्कुर्वे नेद मे कृत्रिम वचः ॥ ९४ ॥
उवाच मदनस्तावन्मदीयोऽसि महाभटः । त्वमत्रैव सुखं तिष्ठ मद्गृहारक्षकः स्वयम् ॥ ९५ ॥
इत्युक्त्वाऽनुव्रजन्तं तं विसृज्य महदादरात् । आगतो बहिरभ्येत्य मिलन्ति स्म च ते खलाः ॥ ९६ ॥
कृताभ्यसूयास्ते सर्वे मुखे मधुरभाषिणः । दुष्टाश्चेतसि चणका इव पमच्छुरादरात् ॥ ९७ ॥
मुखे मिष्टश्चेक्षुरिव हृदयेऽपि हरेः सुतः । वार्ता तामकरोत् सर्वां रक्षोजयनिवेदिकाम् ॥ ९८ ॥
प्रद्युम्नोऽथ सहाऽमीभी रेमे क्रीडापरः सुहृत् । द्वितीयलाभसंयुक्तो हर्षभागधिकाधिकम् ॥ ९९ ॥
रममाणा समायाता गुहायां नागनाकिनः । तावद्वज्रमुखो मायी मायां कृत्वाऽवदत् पुनः ॥ १०० ॥
अस्यां गुहायां यो याति पूर्णकामः समेति सः । अतोऽत्राऽहं मयास्यामि यूयमत्रैव तिष्ठत ॥ १०१ ॥
इत्युक्ते मदनः माह शृणु भ्रातः ! वचो मम । आज्ञां दिश कृपां कृत्वा गमनाय महामनः ! ॥ १०२ ॥
गाढाग्रहममुं कृत्वा गमनाय तमादिशत् । अन्तर्दुष्टो मुखेमिष्टः किंपाकफलवत् पैविः ॥ १०३ ॥
प्रद्युम्नो वेगतोऽगच्छत् पुण्यमित्रेण संयुतः । भुजास्फोटं प्रकुर्वाणो मल्लवत् तत् सभागृहम् ॥ १०४ ॥
तस्माद्गाढभुजास्फोटात् प्रबुद्धो भुजगाधिपः । अरे ! त्वं कोसि कोसीति जल्पन्नेवागतो गृहात् ॥ १०५ ॥

१ वज्रानन ।

तदा वज्राननः प्रोचे याहि त्वं भाग्यसुन्दर ! । त्वया याः संपदः प्राप्तास्ताः समस्ता ममैव भोः ! ॥ ७९ ॥
इत्युक्ते मदनः तत्र साहसैकसहाययुक् । निःशङ्कः प्राविशत् तस्मिन् सद्मनीव महामनाः ॥ ८० ॥
तत्र दूरतरं गत्वा रम्यं स्थानमवाप्य च । रिक्तं सिंहासनं दृष्ट्वोपाविशत्तत्र निर्भयः ॥ ८१ ॥
सिंहनादं मुमोचाशु प्रतिश्रुतिविधायकम् । तेनाऽद्भुतेन नादेन सुप्तो जागरितः क्षणात् ॥ ८२ ॥
रक्षोनाथः समुत्तस्थौ क्रोधारुणितलोचनः । कोऽयं कोऽयं महामूर्खो मुमूर्षुर्मम मन्दिरे ॥ ८३ ॥
अनाहूतः स्वयं चागाज्जल्पन्नेव(वं) समागतः । खड्गमादाय निष्कोशं हन्तुं तं रुक्मिणीसुतम् ॥ ८४ ॥
रौक्मिणेयोऽप्यधाविष्ट क्रोधादारक्तलोचनः । हस्तमामर्द्य तस्याशु चन्द्रहासं तमग्रहीत् ॥ ८५ ॥
चन्द्रहासे गते तस्मिन् स निर्वीर्यः करोति किम् ? । कृते च दंष्ट्रापाते हि फणीव फणदुर्धरः ॥ ८६ ॥
तदा स चिन्तयामास महात्मा कोऽपि दृश्यते । ममाऽजितस्य यो जेता पूजनीयो मया स च ॥ ८७ ॥
विचारचतुरो भूत्वा स आगत्य ननाम तम् । क्षमस्व त्वं महाभाग ! ममाऽऽगः पादपूजनात् ॥ ८८ ॥
अद्य जातं गृहं पूतं तव पादरजोयुतम् । अद्य सिंहासनं सार्थं यस्मिंस्त्वं सिंह आस्थितः ॥ ८९ ॥
इत्युक्त्वा हारममलं स्थूलमुक्तामणीमयम् । कण्ठस्थं स करोति स्म प्रद्युम्नस्य महात्मनः ॥ ९० ॥
चामरे कौमुदीकान्ते चन्द्रमण्डलसन्निभम् । आतपत्रं ददौ तं च चन्द्रहासं सदन्वयम् ॥ ९१ ॥
वस्त्राणि देवयोग्यानि सर्वाङ्गाभरणानि च । अम्लानसुमनोमाल्यं मुकुटं च मणीमयम् ॥ ९२ ॥

इत्युक्त्वा स सुरो दत्त्वा कुण्डले हारमुत्तमम् । सर्वाङ्गाभरणैश्चान्यैः भूपितं सञ्चकार तम् ॥ ६६ ॥
ततः प्रोचे महाभाग ! स्वामी त्वं मे जिनोदितः । अग्रतोऽहं किङ्करोऽस्मि कर्तव्य मे समादिश ॥ ६७ ॥
ततः प्रोवाच मदनः त्वं मदीयः सुहृद्वरः । अत्रैव मद्वशस्तिष्ठ प्रमाण मद्वचः कुरु ॥ ६८ ॥
कार्ये सति समाहूतो मा विलम्ब कृथाः क्षणम् । किन्तु त्वरितमागच्छेः स्मृतः कर्तव्यमिच्छुना ॥ ६९ ॥
इत्युक्त्वा तमनुज्ञाप्य निर्ययौ गोपुराद्बहिः । उत्फुल्लगल्लनयनश्चलत्कुण्डलमण्डलः ॥ ७० ॥
अथ ते वज्रवदनप्रमुखास्तत्र च स्थिताः । अनागमाच्चिरं तस्य जानाना मृतमेव तम् ॥ ७१ ॥
प्रमोदपूर्णमापन्ना गृहाभिगमनोद्यताः । भवन्ति तावत्तेऽद्राक्षुः पूजितं कुसुमादिभिः ॥ ७२ ॥
नैकाऽलङ्कारसंभारभासुरं तत आगतम् । मायया भिमिलुर्भूयो वार्ता सर्वां च तान् प्रति ॥ ७३ ॥
कथयामास निश्छद्मः कुटिलाशयदूषितान् । एव च प्रथम लाभ प्राप्तवास्तास्थिवान् मुदा ॥ ७४ ॥
अथ ते मिलिताश्चेलुरग्रतः क्रीडनप्रियाः । आगतैका गुफा(हा) तावदवोचत् कुलिशाननः ॥ ७५ ॥
योऽस्या गुफा(हा)यां विशति त्वरितं सिद्धिसयुतः । समायाति महाभाग्यस्तेनाऽत्र प्रविशाम्यहम् ॥ ७६ ॥
तिष्ठताऽत्रैव तद्यूय मदीयागमनावधि । रौक्मिणेयस्तदाऽवादीत् पुनर्लाभाऽभिलाषुकः ॥ ७७ ॥
शृणु वज्रमुख ! भ्रातः ! आज्ञां देहि मम स्वयम् । अत्राऽहमेव यास्यामि यूयमत्रैव तिष्ठत ॥ ७८ ॥

१ मया । २ वज्रमुख । ३ प्रद्युम्न ।

नत्वा नमिजिनं प्रोचे देहि मह्यं व्रतं प्रभो ! । इति याञ्चापरं तं च विद्यामन्त्राधिपो जगौ ॥ ५२ ॥
भवोच्छेदकरीं दीक्षां त्वं चेल्लासि प्रमोदभाक् । ममाथ का गतिर्नाथ ! निर्नाथस्य भवत्यहो ? ॥ ५३ ॥
राज्यं दत्तं यथा पुत्रे तथा मह्यं प्रदाय भोः ! । कस्मिन्नपि योग्यपुंसि व्रतारोहस्तवोचितः ॥ ५४ ॥
विद्यामन्त्राधिपप्रोक्तः स जगाद जिनं प्रति । भावी कः प्रभुरेतस्य भाग्यवान् किं नवा प्रभो ! ? ॥ ५५ ॥
श्रीमान्नमिजिनोऽवोचत् शृणु त्वं कथयामि ते । नेमिनाथो जिनो भावी द्वाविंशोऽत्रैव भारते ॥ ५६ ॥
नवमोऽर्द्धचक्रवर्ती वसुदेवतनुद्भवः । रुक्मिणी भाविनी तस्य प्रियारत्नं तदात्मभूः ॥ ५७ ॥
प्रद्युम्नो नाम बलवान् प्रविष्टो गोपुरं प्रति । युद्धे यश्च विजेताऽस्य महासाहससंयुतः ॥ ५८ ॥
स एतस्य प्रभुर्भावी भाग्यवत्या(त्ता)धिकः पुमान् । इति जैनं वचः श्रुत्वा लेभे स परमां मुदम् ॥ ५९ ॥
हिरण्यनाभः प्रोवाच ततो मन्त्राधिपं प्रति । गोपुरेऽत्रैव तिष्ठ त्वं यावदागच्छति ध्रुवम् ॥ ६० ॥
युद्धे यस्त्वां विनिर्जेता स ज्ञेयः स्वामितां गतः । मान्यः सोऽहमिव स्वामीत्याख्याय व्रतमाददे ॥ ६१ ॥
पठित्वा द्वादशाङ्गानि तप्त्वा घोरं तपश्च सः । घातिकर्माणि निर्मूलमुन्मूल्य च शिवं ययौ ॥ ६२ ॥
अहं मन्त्रगणस्वामी गोपुरं तत्प्रभृत्यपि । श्रयामि मार्गमन्वेषी स्वामिनस्तेऽनिमेषदृक् ॥ ६३ ॥
अद्य मे भाग्ययोगेन चिरादीप्सितदर्शनः । समागास्त्वं नयनयोरभूदमृतपारणा ॥ ६४ ॥
ततो मन्त्रगणं स्वामिन् ! गृहाणेमं निधिं तथा । कोशं च रत्नालङ्कारसंयुतं सेवकोऽस्मि ते ॥ ६५ ॥

द्वादशाङ्गीमनूनां चाऽधीतवान् बुद्धिसागरः । तपस्तप्त्वा चिरं घोरं केवलज्ञानमाप च ॥ ३९ ॥
मुक्तौ चकार गेहं सोऽनश्वरं सुचिरादपि । हिरण्यनाभस्तद्राज्यं पालयामास नीतिवित् ॥ ४० ॥
अन्यदा च गवाक्षस्थो दैत्यराजं महर्द्धिकम् । ददर्श परया भूत्यां यान्तं विद्यासमन्वितम् ॥ ४१ ॥
तदा स चिन्तयामास धिग् मे राज्यस्य संपदम् । विद्याहीनस्य च मम जीवनान्मरणं वरम् ॥ ४२ ॥
तेनाऽनुजे निजं राज्यं न्यस्य न्यासमिव स्वयम् । वने(नं) गहनमाविश्य विद्यास्ताः साधयाम्यहम् ॥ ४३ ॥
मन्त्रानपि क्रमायातान् पितृदत्तान् मुदा मम । वशीकरोमि तान् सर्वान् यतीव विषयान् मति ॥ ४४ ॥
इत्थं मनसि सञ्चिन्त्य राज्यं न्यस्य निजाऽनुजे । गत्वा सिद्धवनं सद्यः साधयामास चिन्तितम् ॥ ४५ ॥
सोऽथ संसिद्धविद्यः सन् सिद्धमन्त्रगणोऽपि च । आजगाम परैश्वर्यैः पुरे भ्रातृकृतोत्सवे ॥ ४६ ॥
राज्यं न्यासमिवाऽलात्वानुजात् प्रमदपूरितः । चकार सुचिरं राज्यं विद्यामन्त्रगणान्वितः ॥ ४७ ॥
वृद्धत्वे जातवैराग्यो राज्यभारं न्यधात्सुते । नमिनाथं जिनं नन्तुं चचाल च व्रतोत्सुकः ॥ ४८ ॥
नमिनाथं जिनं नत्वा तस्य श्रुत्वा वचोऽमृतम् । अधिकं जातसंवेगो ययाचे त व्रतं नृपः ॥ ४९ ॥
नमिर्जिनोऽपि प्रोवाच मा विलम्बपरो भव । कल्ये यत्कर्म कर्तव्यं तदद्यैव द्रुत कुरु ॥ ५० ॥
पूर्वं व्रतेच्छुरभवत् प्रेरितोऽथ जिनेन सः । विशेषादुत्सुको जातः पीतशान्तसुधारसः ॥ ५१ ॥

१ लक्ष्म्या । २ मन्त्रान् ।

इत्युक्ते वलवान् देवो युद्धायोत्तस्थिवान् भृशम् । मल्लाविव चिरं युद्धं चक्रतुस्तौ परस्परम् ॥ २६ ॥
मदनेन जितो युद्धे साहसाऽन्वितचेतसा । चमत्कारं च स प्राप कोऽयं नरशिरोमणिः ? ॥ २७ ॥
इत्यन्तश्चिन्तयन्नेव सुरो गलितसाहसः । पादयोः प्रणतो भूत्वा प्रोवाचेति चमत्कृतः ॥ २८ ॥
सिंहासनमिदं रम्यमत्राऽऽसीनो भवाश्रमः । मत्कृतां शृणु विज्ञप्तिं चमत्कारकरीं हृदि ॥ २९ ॥
इत्युक्ते मदनो हर्षात् सिंहासनवरे स्थितः । प्रोचे कथय कोऽसि त्वं मयि प्रीतिं करोषि किम् ? ॥ ३० ॥
प्रोवाचाऽथ सुरोऽत्रैव विजयार्द्धगिरौ प्रभो ! । पुरं लङ्कापुरं नामाऽलङ्कार इव भूस्त्रियाः ॥ ३१ ॥
राजाऽस्ति कनकनाभोऽनिलेति वनिता पुनः । भुञ्जानयोस्तयोर्भोगं पञ्चेन्द्रियसमुद्भवम् ॥ ३२ ॥
एको देवः परिच्युत्य त्रिदिवादायुषः क्षये । पुत्रत्वेन समुत्पेदे ददानो हर्षसंपदम् ॥ ३३ ॥
नाम्ना हिरण्यनाभं तं चक्रतुः शुभवासरे । वर्द्धमानः क्रमात् प्राप यौवनं पावनं वर(न)म् ॥ ३४ ॥
श्रीमनोभवभूपालक्रीडायोग्यमिव स्फुटम् । कलाः समस्ता जग्राह शस्त्रशास्त्रादिकाः शुभाः ॥ ३५ ॥ (युग्मम्)
क्रमाद् राज्ञो दुहितरो वव्रिरे तं स्वयंवराः । श्रवन्त्यः[1] सरितां नाथं क्षपानाथं[2] कला इव ॥ ३६ ॥
राजा कनकनाभस्तु विरक्तोऽभूत् व्रतोत्सुकः । योग्यं ज्ञात्वा सुतं राज्ये स्थापयामास कोविदः ॥ ३७ ॥
अत्रान्तरे समागाच्च पिहिताश्रवसाधुराट् । गत्वा नत्वा च तत्पार्श्वे व्रतं जग्राह भावनात् ॥३८॥

१ नद्यः । २ चन्द्रम् ।

तथा च मायया तेन सह सख्यं प्रचक्रिरे । विजयाऽर्द्धगिरिं नीत्वा रमन्ते स्म यथेच्छया ॥ १२ ॥
वज्रदंष्ट्रमुखास्तेषु प्रद्युम्नेन सहाऽन्विताः । जिनेन्द्रभवने जग्मुः वन्दितुं जिननायकान् ॥ १३ ॥
तत्र गत्वा च ते सर्वे पूजयामासुरर्हतः । कृतद्रव्यस्तवा भावाद् भावपूजां वितेनिरे ॥ १४ ॥
ततो बहिर्विनिर्गत्य वेदिकायामुपाविशन् । तत्रस्थाः शिखरेऽद्राक्षुः गोपुरं रम्यमुच्चकैः ॥ १५ ॥
वार्तायामन्तरेऽवोचद् वृद्धो वज्रमुखस्तदा । वज्रवद् हृदयो नूनं प्रद्युम्नोपरि दुष्टधीः ॥ १६ ॥
भ्रातरो मम शृण्वन्तु वृद्धवाक्यं मया श्रुतम् । गोपुरस्याऽस्य मध्ये यः प्रवेशदविशङ्कितः ॥ १७ ॥
अपूर्वाऽर्थस्य सम्प्राप्तिः जायते तस्य निश्चितम् । यूयमत्रैव तिष्ठन्तु विशाम्येकोऽहमेव तत् ॥ १८ ॥
मदनो दशनज्योत्स्नाराशिकर्बुरिताऽधरः । ऊचे वज्रमुखं भ्रातः! एतत्कार्यं ममाऽर्पय ॥ १९ ॥
त्वमेवैतत्कुरु भ्रातः! नावयोरन्तरं यतः । सम्पदो यास्त्वया प्राप्ताः ता ममैवाऽभवन् गृहे ॥ २० ॥
तेनेत्युक्तोऽथ तान्मुक्त्वा मदनः साहसान्वितः । प्रमनाः प्राविशत्तत्र विश्वाऽद्भुतचरित्रभाक् ॥ २१ ॥
प्रविश्य तत्र हर्षेण सिंहनादं चकार सः । श्रुतेन सिंहनादेनाऽधिष्ठाता तस्य कोपभाक् ॥ २२
भुजगासुरनामागात् क्रोधारुणितलोचनः । अरे रे दुष्ट कोऽसि त्वमागतो यद्गृहे मम ॥ २३ ॥
केच्छा यमगृहे गन्तु केच्छा वा विषभक्षणे । केच्छा सर्पमणिं लातुं प्रनेशे हा तवात्र यत् ॥ २४ ॥
हसित्वा मदनः प्रोचे वृथा किञ्चित् प्रुवचसि । रिक्तः शरद्घन इव त्वं जलेन बलेन च ॥ २५ ॥

## सप्तमः सर्गः ।

अथ प्रद्युम्नकस्तत्र प्राप वृद्धिं दिने दिने । यथा पक्षे सिते चन्द्रः सूर्यो वोदयपर्वते ॥ १ ॥
अष्टवर्षवयास्तत्र जग्राह सकलाः कलाः । रूपलावण्यसंपन्नो जगल्लोचनचन्द्रमाः ॥ २ ॥
अनुक्रमं वर्द्धमानो राज्ययोग्योऽभवत् पुनः । राजाऽपि योग्यं विज्ञाय राज्यं दातुमना अभूत् ॥ ३ ॥
अथाऽऽसन् खेचरेन्द्रस्य कालसंवरभूपतेः । रूपसौन्दर्यसंयुक्ता राज्ञ्यः पञ्चशतं प्रियाः ॥ ४ ॥
तासां च पुत्रा बहवः सन्ति रूपर्द्धिसंयुताः । तथाऽपि दातुकामोऽभूद् राज्यं राजा मनोभुवे[1] ॥ ५ ॥
तदा ते मन्त्रयामासुः मिलिताश्च परस्परम् । कुतश्चिदागतो ह्येष प्राघूर्णक इवाऽऽलये ॥ ६ ॥
अज्ञातकुलशीलश्चाऽस्माकं राज्यं ग्रहीष्यति । तदा वयं हि जानीमो जीवन्तोऽपि मृता ननु ॥ ७ ॥
ततः केनाप्युपायेन मारणीयः स हि द्रुतम् । परमाऽस्मभ्यः सर्वेभ्यो बलवान् विश्रुतः खलु ॥ ८ ॥
बलेन न हि मार्योऽसौ किं तु च्छलपरै रिपुः । ततो विमृश्य सर्वेऽप्यभूवंश्छलगवेषिणः ॥ ९ ॥
चक्रुः सविषमन्नं ते तच्च तस्य सुधाऽभवत् । शयनेऽहिं चिक्षिपुश्च सोऽपि मालेव सुन्दरा ॥ १० ॥
एवं च कुर्वतां तेषां पराभूत्यै न किञ्चन । प्रत्युताऽजायत शुभं तस्य पुण्यमयात्मनः ॥ ११ ॥

---

१ प्रद्युम्नाय ।

इति सीमंधरस्वामिवचनेनैव मोदभाक् । पुनः पुनः तं पप्रच्छ नारद पुत्रमोहिता ॥ ६७ ॥
उवाच नारदः पुत्रि ! त्वत्सुतं दृष्टवानहम् । कालसंवरखेचराधीशसद्मनि संस्थितम् ॥ ६८ ॥
स्वगृहे त्व विजानीहि तद्गृहस्थस्तनंधयम् । यथा परभृतावाल काकीनीडस्थित तथा ॥ ६९ ॥
इत्थं नारदसाधुसाधुवचसा संप्रीणिता रुक्मिणी गाढं धर्मपरायणा समभवत् सीमंधरस्वामिनम् ।
ध्यायन्ती प्रतिवासरं निजतनूजस्यागम चान्वह तावत् स्वेच्छविहारवान् ऋषिरपि प्रीतो ययौ मानसे ॥ ७० ॥

श्रीशान्तिचद्रवरवाचकदुग्धसिन्धु-लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार सर्गो निसर्गसुभगो व्यगलच्च षष्ठः ॥ ७१ ॥

इति श्रीप्रद्युम्नचरित्रे महाकाव्ये रुक्मिणीपूर्वभवकृतकर्मप्रश्न-श्रीसीमंधरस्वामिसमीपा-
न्नारदागमन-श्रीसीमंधरस्वामिप्रोक्तप्रद्युम्नवृत्तान्तकथन-श्रीकृष्णरुक्मिणी-
प्रभृतियादवप्रमोदापादनवर्णनो नाम षष्ठः सर्गः ।

---

१ पुनम् ।

आसने विनिवेश्याऽथ पप्रच्छ स्वागतं मुनीम् । तमपृच्छद् मुनीन्द्रोऽपि राज्यक्षेमादिकं शुभम् ॥ ५३ ॥
अत्रान्तरे मुनिः प्राह पुत्रजन्म मया श्रुतम् । उदरे पट्टराज्ञ्यास्ते स्वर्णस्रगभिधाभृतः ॥ ५४ ॥
शुभं जातं शुभं जातं ममाऽपि रुचिरं हृदः । तत् पुत्ररत्नं दृष्ट्वाऽथ भवेयं हर्षवानहम् ॥ ५५ ॥
ततश्च संवरः क्ष्मापः स्वर्णाभरणभूषितम् । अष्टमीचन्द्रभालं तं बालं प्रद्युम्नसंज्ञकम् ॥ ५६ ॥
नमयामास पाणिभ्यां नीचैः कृत्वा मुनेः पदोः । ददावाशिषमत्युच्चैश्चिरं जीवेतिगीर्मुनिः ॥ ५७ ॥
विसृष्टोऽनुगतश्चैवं कालसंवरभूभुजा । कृतकृत्यो मुदां भारं बिभ्राणो द्वारिकां पुरीम् ॥ ५८ ॥
आगतस्सन्नऽपश्यच्च कृष्णं यादववेष्टितम् । तथैव शोकविधुरं गल्लास्थितकराम्बुजम् ॥ ५९ ॥
कृष्णादयो यदवस्ते मुनिं दृष्ट्वा मुदं दधुः । कृताऽभ्युत्थानकर्माणः सम्मुखं ययुरादरात् ॥ ६० ॥
प्रणेमुश्च मुनेः पादौ पुरस्कृत्य मुनीश्वरम् । आययुश्च निजं स्थानमासने समुपाविशन् ॥ ६१ ॥
मुनिर्दत्तासनः सोऽथ सुखासन उपाविशत् । क्षणं स्थित्वा च सर्वेषां श्रवणोत्सुकचेतसाम् ॥ ६२ ॥
वृत्तान्तं कथयामास सर्वं श्रीमज्जिनोदितम् । प्रद्युम्नस्य तनुजस्य पुण्यप्राग्भारधारिणः ॥ ६३ ॥
ततश्च रुक्मिणी देवी दासीं प्रेष्य समानयत् । नारदं स्वगृहेऽपृच्छत् सर्वं वृत्तान्तमादितः ॥ ६४ ॥
लक्ष्मीवत्यादिकान् सर्वान् भवान् सीमंधरोदितान् । कथयामास रुक्मिण्यास्ततश्च मुदिता सती ॥ ६६ ॥
सीमंधरं तीर्थकृतं तत्रस्थैव नमोऽकरोत् । मिलिष्यति स ते पुत्रः षोडशाब्दवसानतः ॥ ६५ ॥

एष महात्मा दृष्टोऽभूत्पूर्वं क्वचन पुण्यभाक् । पप्रच्छ च मुनिं साऽपि मुनिर्ज्ञानोपयोगभाक् ॥ ३९ ॥
बभूव तस्या आचख्यौ पूर्वान् भवान् कृपापरः । इहाऽसि जाता दुर्गन्धा प्राक्कृतेनैव कर्मणा ॥ ४० ॥
सर्वं भवेत् प्राणिनां हि शुभमप्यशुभादिकम् । सा च साधुवचः श्रुत्वा जातिस्मृतिमतिर्बभौ ॥ ४१ ॥
पश्यन्ती तान् भवान् सर्वान् जुगुप्सां स्वां कृतां च ताम् । निन्दन्ती क्षामयामास तं मुनिं दूरतः स्थिता ॥ ४२ ॥
बभूव श्राविका साऽपि कृपापरमना मुनिः । अर्पयामास तां धर्मश्रियः साध्व्या गुणान्विताम् ॥ ४३ ॥
तया सह चिरं तस्थौ कुर्वती भक्तिमौचितीम् । कस्मिन् ग्रामे च गतया तया श्राद्धस्य साऽर्पित ॥ ४४ ॥
नापिलेत्यभिधानस्य तस्थौ सा तस्य सद्मनि । उपवासान् प्रकुर्वाणा बहून् पूजापरायणा ॥ ४५ ॥
नमस्कारान् गणयन्ती गर्हन्ती दुष्कृत निजम् । द्वादशाब्दानि तत्राऽस्थान्नापिलश्राद्धसद्मनि ॥ ४६ ॥
अन्ते साऽनशना मृत्वाऽच्युतेन्द्रस्य महिष्यभूत् । आयुषः पञ्चपञ्चाशत्पल्यमानस्य भोगभाक् ॥ ४७ ॥
ततः प्रच्युत्य सत्कर्मा पुरे कुण्डिननामनि । भीष्मभूपस्य तनया क्रमात् कृष्णस्य पत्न्यपि ॥ ४८ ॥
बभूव रुक्मिणी नाम्ना प्राच्यकर्मप्रयोगतः । षोडशाब्दानि विरह पुत्रस्याऽनुभाविष्यति ॥ ४९ ॥
षोडशाऽब्द्याश्च पर्यन्ते मिलिष्यति न संशयः । न हि दृष्ट ज्ञानिना यल्लेशतोऽप्यन्यथा भवेत् ॥ ५० ॥
सीमंधरजिनं नत्वा नारदोऽपास्तसंशयः । वैताढ्यगिरिमागत्य मेघकूटपुरं ययौ ॥ ५१ ॥
कालसंवरभूपालो विनयानतमस्तकः । नारदं प्रणनामोच्चैः भक्तिसंभृतचेतसा ॥ ५२ ॥

कुर्वती थूथ्विति ध्वानं जल्पन्ती परुषाक्षरम् । पिदधाति कपाटं सा शङ्कमाना तदागमम् ॥ २६ ॥
मुनिगर्हार्जितकर्मा साऽभवत् सप्तमेऽहनि । सर्वाङ्गतो गलत्कुष्ठाऽशुचिपात्रमिव क्षणात् ॥ २७ ॥
उक्तं च–"उत्कृष्टपुण्यपापानामिहैव फलमाप्यते । त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः" ॥ २८ ॥
दुःसहां वेदनां सोढुमशक्ताऽग्नौ विवेश सा । निर्णेजकस्य[1] गेहेऽथ गर्दभी साऽभवत्पुनः ॥ २९ ॥
ग्रामे तत्रैव मृत्वा सा गर्त्तशूकरिकाऽभवत् । ततोऽपि सद्यो मृत्वा च सारमेयी बभूव सा ॥ ३० ॥
दावानलेन सा दग्धा मर्त्यायुर्वधनती मृता । भृगुकच्छपुरे साऽथ धीवरस्यात्मजाऽभवत् ॥ ३१ ॥
दुर्गन्धा भस्मवर्णाभशरीराघस्य[2] किं वपुः[3] । तद्गन्धमसहमानौ जातमात्रां स्म मुञ्चतः ॥ ३२ ॥
पितरौ नर्मदानद्यास्तटे तत्र गतत्रपौ । तत्राऽपि कष्टतो वृद्धिं प्राप यौवनमाप सा ॥ ३३ ॥
पथि तत्र समायान्तं गच्छन्तं च पुरस्तटे । जनं सोत्तारयामास नावा मेकलकन्यकाम्[4] ॥ ३४ ॥
क्रमात् समाधिगुप्तर्षिः शीतकाले स आययौ । कायोत्सर्गं गृहीत्वा च तस्थौ तस्यास्तटे स्थिरः ॥ ३५ ॥
दृष्ट्वा तं जातकरुणा मुनिं शीतेन पीडितम् । तृणैराच्छादयामास कथं सोढेति जातधीः ? ॥ ३६ ॥
अथ प्रभाते सञ्जाते कायोत्सर्गं मुमोच सः । ननाम सा तमभ्येत्य धर्माशिषमदान्मुनिः ॥ ३७ ॥
धर्मार्थिनां सतां ज्ञात्वोपदेशं धार्मिकं मुनिः । अदात् सा चिन्तयामास मुदिता चेतसीति तत् ॥ ३८ ॥

१ रजकस्य । २ पापस्य । ३ किमेतत् पापस्य शरीरम् ? इत्यर्थः । ४ नर्मदाम् ।

मात्रोपलक्ष्यागतया सेवित पालित ह्यदः । मयूरोऽजनि कालेन पञ्चवर्णकलापभृत् ॥ १२ ॥
पुनर्लक्ष्मीवती विप्री केकिना तं कलापिनम् । जग्राह रुदतीं मुक्त्वा जननीं करुणस्वराम् ॥ १३ ॥
स्वगृहे पञ्जरस्थं तं भोजनैः प्रीणती सदा । स्वच्छाम्बुपानैर्नृत्यं च शिक्षयन्ती मुहुर्मुहुः ॥ १४ ॥
करतालप्रदानेन गायन्ती मधुरस्वरम् । तत् स्थानं नो जहाति स्म केकिनी करुणस्वरा ॥ १५ ॥
तत्प्रातिवेश्मिकजनैरूचे लक्ष्मीवती द्विजी । आः पापे ! क्रीडसि त्वं च म्रियते केकिनी परम् ॥ १६ ॥
तेन त्वं मुञ्च तत्स्थाने पापात् किं न बिभेष्यपि ? । तेषां गिराऽथ साऽमुञ्चत् केकिपोतं कृपावती ॥ १७ ॥
परं षोडशमासान्ते गृहीत्वा स्वकरेण तम् । यतो गृहीतं तत्रैव ततो हृष्टाऽथ केकिनी ॥ १८ ॥
पालयामास तं सद्यः स्वपुत्रे को न तुष्यति ? । ब्राह्मण्या च तया बद्धं कर्म षोडशवार्षिकम् ॥ १९ ॥
केकिन्या विरहदानात् केकिना सह दुःसहम् । इत्यतः पुत्रविरहवेद्यं भोक्तव्यमेव हि ॥ २० ॥
यतश्च—" हसद्भिर्बध्यते कर्म रुद्भिस्तच्च भुज्यते । यादृशं दीयते दानं तादृशं प्राप्यते खलु " ॥ २१ ॥
पुनरन्येद्यु पश्यन्त्या दर्पणे दर्पवत्तया । आननं पत्रलतया भूषितं च तदाऽऽययौ ॥ २२ ॥
क्षुधि समाधिगुप्ताख्यो भिक्षार्थी क्षान्तिसागरः । तदा सोमद्विजोऽवोचद्भिक्षां देहीति भिक्षवे ॥ २३ ॥
तदैव केनचित् पुंसा श्रद्धावन्मनसा यतिः । आहूतस्तद्गृहेऽगच्छन्मुक्त्वा लक्ष्मीवतीगृहम् ॥ २४ ॥
मुनेः शरीरं दृष्ट्वा च क्षरत्प्रस्वेदबिन्दुमत् । मलार्द्रमलिनं वांसो विभ्रत्कृशतरं तथा ॥ २५ ॥

१ वस्त्रम् ।

## षष्ठः सर्गः ।

नारदर्षिस्ततोऽपृच्छत् संशयाचलवज्रिणम् । श्रीसीमंधरसर्वज्ञं वचोऽतिशयराजितम् ॥ १ ॥
भगवन् ! कर्मणा केन रुक्मिण्याः षोडशाब्दिकः । पुत्रेण विरहो जज्ञे बालार्कसमतेजसा ? ॥ २ ॥
ततो दन्तत्विषां श्रेण्या भृशं शबलिताऽधरः । सीमन्धरजिनाधीशो नारदर्षेः पुरो जगौ ॥ ३ ॥
सम्पदो विपदश्चैव संयोगश्च वियोगयुक् । भोगो भोगान्तरायश्च सर्वं कर्मविजृम्भितम् ॥ ४ ॥
रुक्मिण्या यत् कृतं कर्म शृणु त्वं ऋषिसत्तम ! । वदामि संशयग्राववज्रिवज्रगिरा तव ॥ ५ ॥
अस्यैव जम्बूद्वीपस्य क्षेत्रे भरतनामनि । देशोऽस्ति मगधो नाम लक्ष्मीग्रामोऽस्ति तत्र च ॥ ६ ॥
सोमदेवो द्विजस्तत्र तस्य लक्ष्मीवती प्रिया । रममाणोऽन्यदाऽगच्छदुद्याने केकिकामनः ॥ ७ ॥
मायूरमण्डं साऽपश्यद् द्रष्टिमनोहरद्युति । क्रीडया साऽस्पृशत् तच्च पाणिना कुङ्कुमस्पृशा ॥ ८ ॥
तस्याः स्पर्शनतस्तच्च किंचिदारक्तताङ्गतम् । जनन्या तस्य केकिन्या त्यक्तं नेदं ममेति तत् ॥ ९ ॥
सेवितं न तया यावद् घटिकाः षोडशाण्डकम् । पतितं स्थितं तत्रैव शीतातपसहं भृशम् ॥ १० ॥
ततस्तदायुर्योगेन मेघवृष्टिरभूत्तदा । कुङ्कुमं क्षालितं वृष्ट्या स्वभावस्थमभूत्तदा ॥ ११ ॥

१ प्रियमयूरः ।

ज्योतिष्केषु सुरो जातो धूमकेत्वभिधानवान्। इतश्च मधुजीवोऽपि महाशुक्रात् परिच्युतः ॥ २५४ ॥
एकावतारवान् शुद्धसम्यक्त्वः प्रियदर्शनः। कृष्णस्य पत्न्यां रुक्मिण्यामुदरे उदपद्यत ॥ २५५ ॥
पूर्णे च समये सूनुं सुषुवे रुक्मिणी तु सा। प्राचीव कलहंसं त राकेव च सुधाकरम् ॥ २५६ ॥
धूमकेतुः सुरो गच्छन् दृष्ट्वा वैरमनुस्मरन्। रुक्मिणीकृतवेषः स तत्राऽगात् सूतिवेश्मनि ॥ २५७ ॥
कृष्णहस्ताद् गृहीत्वाऽथ गतो वैताढ्यपर्वतम्। मुञ्चति स्म निहन्तुं तं शिलायां श्यामलत्विपि ॥ २५८ ॥
मृतो न मुक्तिगामित्वात्तद्भवेऽपि महाबलः। परं दुकूलशय्यायामिव तस्थौ शिलातले ॥ २५९ ॥
अत्र क्षणे समायातः संवरः खेचरोत्तमः। विमानस्खलनात् तेन विलोक्य जगृहे स च ॥ २६० ॥
पत्न्यै कनकमालायै पुत्रत्वेनार्पितः शिशुः। तया स पाल्यमानोऽस्ति वन्ध्यया पुत्रमईया ॥ २६१ ॥
वासुदेवेन रुक्मिण्या भावी तस्य च सङ्गमः। कर्मणा षोडशाब्दयन्ते रुक्मिणीकृतकेन भोः ॥ २६२ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु–लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः।
चित्रं चरित्रमकरोत्तनयस्य लक्ष्म्याः, सर्गोऽगमन्मदनबाणमितोऽत्र पूर्तिम् ॥ २६३ ॥

इति श्रीप्रद्युम्नचरित्रे महाकाव्ये प्रद्युम्नहरण–नारदागमन–नारदसीमंधरस्वामिप्रद्युम्नभवप्रश्नपूर्व–
भवकथनवर्णनो नाम पञ्चमः सर्गः।



१ कमलहस्त इति पाठ । २ कालसंवर । ३ पुत्रबुद्ध्या ।

इत्थं सम्प्राप्तवैराग्यो मधुश्च मधुरां दशाम् । प्राप्तः कैटभतनयं राज्ये स्थापयति स्म सः ॥ २४१ ॥
अन्यदोद्यानमायातं गुरुं विमलवाहनम् । उद्यानपालकोऽभ्येत्य राज्ञे व्यज्ञपयद् द्रुतम् ॥ २४२ ॥
राजाऽप्युद्यानपालाय ददौ दानमनुत्तरम् । महर्द्ध्या वन्दितुं चागाद्धर्मं शुश्राव चान्तिके ॥ २४३ ॥
ववर्ष च गुरुर्मेघो नाम्ना विमलवाहनः । जलं धर्मोपदेशाख्यं तस्मादुपशमाङ्कुरः ॥ २४४ ॥
जातो नृपहृदि क्ष्मायां फलं निर्वृतिलक्षणम् । भविष्यति पुरो नूनमास्वादमधुरं सदा ॥ २४५ ॥ (युग्मम्)
अथ श्रुत्वा मधुर्धर्मं कैटभभ्रातृसंयुतः । व्रतं जग्राह तस्यैव पार्श्वे वैराग्यरङ्गवान् ॥ २४६ ॥
तौ च तत्र तपस्तप्त्वा वत्सराणामनेकशः । सहस्रान् द्वादशाङ्ग्याश्च पाठव्यासक्तचेतसौ ॥ २४७ ॥
बालग्लानादिसाधूनां वैयावृत्त्यपरायणौ । अन्तेऽनशनमाधाय दीर्घनिद्रा[1]मवापतुः ॥ २४८ ॥ (युग्मम्)
महाशुक्रे तविषे तौ जातौ सामानिकौ सुरौ । कनकप्रभभूपोऽपि विलपन्नेव चत्वरे ॥ २४९ ॥
शरत्सहस्रत्रितयं पूर्णीकृत्य विपद्य च । ज्योतिष्केषु सुरो जातो विभङ्गज्ञानवानथ ॥ २५० ॥
वैरं जानन्नपि मधौ नापश्यत् तं महर्द्धिकम् । ततश्च्युतश्च स प्राप मनुष्यत्वं सुदुर्लभम् ॥ २५१ ॥
तत्राऽपि तापसो भूत्वा कष्टं कृत्वा च भूरिशः । वैमानिकसुरो जज्ञे परमल्पतरर्द्धिभाक् ॥ २५२ ॥
तत्रापि च मधुं देवं द्रष्टुमप्यक्षमः स हि । आयुःक्षये ततश्च्युत्वा संसारेऽनेकशो भ्रमत् ॥ २५३ ॥

१ मरणम् ।

तदा साऽवसरं प्राप्य प्रोचे मधुनृप वचः। भोजनं वचनं चापि सुन्दरं लक्षणोचितम् ॥ २२७ ॥
स्वामिन्! परदाररतः पुमान् क दण्डमाप्स्यति?। मधुर्जगाद हे देवि! चन्द्राभे! चन्द्रदर्शने! ॥ २२८ ॥
तस्य सर्वस्वहरणं करिष्यामि ततोऽपि च। शिरोमुण्डनमाधाय खरारोहः करिष्यते ॥ २२९ ॥
अथवा महदन्याये पुश्चिह्नस्य च कर्तनम्। एव दण्डमवाप्नोति परदाररतः पुमान् ॥ २३० ॥
यद्येव कुरुते नैव राजा तदयसश्चयैः। लिप्यते यत् जगत् सर्वं जायते ह्यसमञ्जसम् ॥ २३१ ॥
चन्द्राभा चन्द्रहासा सा विहस्योचे मधुं प्रति। स्वामिस्तव च को दण्डः समायाति द्रुतं वद ॥ २३२ ॥
पारदारिकमुख्यस्त्वमन्ये वै पारदारिकाः। तेभ्योऽप्यधिकदण्डाय योग्योऽसि विमृश स्वयम् ॥ २३३ ॥
तत् श्रुत्वा जातवैराग्यो लज्जमानो ह्यनुत्तरः। तदुत्तरमदत्त्वैव पुनः संसदि सस्थितः ॥ २३४ ॥
अथैकदा गवाक्षस्था चन्द्राभा कनकप्रभम्। नृत्यन्तं वेष्टित बालैः गायन्तं चाऽसमञ्जसम् ॥ २३५ ॥
ददर्श नाम गृह्णन्तं चन्द्रभायाश्चतुष्पथे। चन्द्राभा वीक्ष्य त दध्यौ धिग् धिग् मामधमाधमाम् ॥ २३६ ॥
यस्याः पतिर्मे ग्रथिलो मां विनाऽभवदीदृशः। अहं तु भोगं मधुना भुञ्जामि विपयार्दिता ॥ २३७ ॥
अन्यदाऽदर्शयत् तं च मधवे कनकप्रभम्। चन्द्राभा प्राप्तदुःखा सा प्राक्पति प्राप्तदुर्दशाम् ॥ २३८ ॥
तदा मधुनृपो दध्यौ धिग् मामन्यायकारिणम्। अस्य पापस्य चोदर्कः को भविष्यति निश्चितम्? ॥ २३९ ॥
सहकारः समासाद्य वृद्धत्व मधुरो भवेत्। अहं तु प्राप्तो वृद्धत्व आम्ल एव भवाम्यहो ॥ २४० ॥

सन्तोषितस्तुरङ्गाद्यैः विविधैः प्राभृतैः कृतैः । तथाप्यागैरिवाऽतुष्टः चन्द्राभैकमनाः खलु ॥ २१३ ॥
प्रार्थयामास चन्द्राभां कनकप्रभभूभुजे । इयं याञ्चा न युक्ता ते सेवकोऽस्मि यतस्तव ॥ २१४ ॥
तुरङ्गा हस्तिनश्चापि ग्रामाश्च नगराणि च । मदीयं सर्वमप्यस्ति त्वदीयं नात्र संशयः ॥ २१५ ॥
स्वामिनो मार्गणं नैव सेवकस्य स्त्रियाः खलु । युक्तं न तस्या दानं च सेवकस्य प्रभोरपि ॥ २१६ ॥
कनकप्रभराजेनेत्युक्तो मधुनृपस्तदा । बलाद् गृहीत्वा चन्द्राभां स्वान्तःपुरमाचिक्षिपत् ॥ २१७ ॥
ततः समागतः स्वस्य पुर्यां भोगानभुक्त सः । समं चन्द्राभया नित्यं चन्द्राभाहृतमानसः ॥ २१८ ॥
कनकप्रभराजोऽथाऽसमर्थस्तान्निषेधने । गाढं पूत्कृत्य पूत्कृत्य ग्रथिलः समजायत ॥ २१९ ॥
नगरे नगरे भ्राम्यन् जल्पन् स्त्रीनाम चत्वरे । चत्वरे भ्रमति स्मोच्चैः बालकैः परिवेष्टितः ॥ २२० ॥
अन्यदाऽऽस्थानमासीनो मधुकैटभसंयुतः । पारदारिकविषयं कुर्वन्न्यायं चिरं स्थितः ॥ २२१ ॥
तदा दासी समागत्य चन्द्राभाप्रेषिता सती । ज्ञापयामास समयं भोजनस्य मधुं नृपम् ॥ २२२ ॥
राजा न्यायमकृत्वैव भोजनायोत्थितस्तदा । निष्पन्नसर्वसामग्रीभोजने सदने ययौ ॥ २२३ ॥
चन्द्राभया तदा पृष्ट इयद्यावच्च किं कृतम् ? । भोजनं शीतलं जातं प्रत्युवाच नृपोऽथ ताम् ॥ २२४ ॥
पारदारिकवादाय पर्षदि प्रेमबन्धुरे । स्थितं मयेयती वेला जाता तत्र कमलेक्षणे! ॥ २२५ ॥
तथाप्यर्धकृतं न्यायं मुक्त्वा त्वत्प्रेरितो भृशम् । अत्राऽगां भोजनकृते सर्वान् संस्थाप्य तत्र च ॥ २२६ ॥

कनकप्रभभूपस्य चन्द्राभेति च देव्यभूत् । विष्वक्सेनोऽथ भूपालः चिरं राज्यं प्रपालयन् ॥ २०० ॥
संसाराज्जातवैराग्यो राज्यभारं न्यवीविशत् । मधौ पुत्रे राज्ययोग्ये यौवराज्ये च कैटभम् ॥ २०१ ॥
चारित्रं सद्गुरोः पार्श्वे गृहीत्वा तत् प्रपाल्य च । सम्यगाराधनां कृत्वा देवभूयमुपागतः ॥ २०२ ॥
मधुर्वशीकृतानेकराज्यो राज्यं प्रपालयन् । श्रुत्वा पल्लीपतिं भीम देशोपद्रवकारिणम् ॥ २०३ ॥
तमुद्दिश्य चचालाऽथ महासैन्यो महाबलः । मार्गे वटपुरेऽवात्सीद् विश्रामार्थी श्रमातुरः ॥ २०४ ॥
कनकप्रभभूपालो भोजनाय न्यमन्त्रयत् । निमन्त्रितश्च याति स्म तद्गृहे भोजनेच्छया ॥ २०५ ॥
सामग्री च कृताऽनेन भूयसी भक्तिपुष्टये । तुष्टये स्वामिनस्तस्य तस्माच्च फलमिच्छुना ॥ २०६ ॥
चन्द्राभा कृतशृङ्गारा पूर्णचन्द्रसमानना । उपतस्थे मधुभूपं तालवृन्तकरा तदा ॥ २०७ ॥
भुञ्जानोऽथ मधू राजा चन्द्राभा चन्द्रदर्शनाम् । दृष्ट्वा बभूव विवशः संकल्पाज्जन्मनो भृशम् ॥ २०८ ॥
न स्वादं मन्यते तत्र मधुरस्याऽपि वस्तुनः । न क्षारस्य न तिक्तस्य न चाम्लस्य स्मरातुरः ॥ २०९ ॥
भुक्त्वोत्थितश्च तत्कालमादित्सुस्तां प्रियां मधुः । मन्त्रिभिश्च निवार्यैव रक्षितो न्यायवेदिभिः ॥ २१० ॥
कनकप्रभभूपाल उपहारेण भूयसा । तं च सन्तोषयामास ततः सोऽग्रे चचाल्याथ ॥ २११ ॥
भीम पल्लीपतिं जित्वा निवृत्तस्तत्र चागमत् । भूयोऽपि भोजितो भोज्यैर्विविधैः स्वादसंयुतैः ॥ २१२ ॥

१ देवत्वम् । २ जन्मन संकल्पात्—कामात् ।

मत्यादिष्टपलाहारः चण्डालः श्रावकोऽजनि । प्रायं कृत्वा च मासं स मृत्वा नन्दीश्वरेऽभवत् ॥ १८७ ॥
देवो महर्द्धिविख्यातः प्राप्तसर्वज्ञदर्शनः । प्रबुद्धा सारमेयी सा बभूव श्राविकोत्तमा ॥ १८८ ॥
कृतमाया च मृत्वाऽन्ते पुरे शङ्खपुरेऽभवत् । नाम्ना सुदर्शना राजसुता रूपसुदर्शना ॥ १८९ ॥
पुनर्गजपुरे सोऽथ विहृत्य जगतीतले । शरदः कियतीः साधुः महेन्द्रः समवासरत् ॥ १९० ॥
श्रुत्वा समागतं तं च नत्वा पप्रच्छतुर्गतिम् । अर्हद्दाससुतौ वप्तुः जनन्याश्च मुनिं प्रति ॥ १९१ ॥
यथाजातां यथाज्ञातां मुनिः सोऽपि शशंस ताम् । श्रुत्वा प्रमुदितौ तौ तु गत्वा तत्र पुरे स्वयम् ॥ १९२ ॥
सुदर्शनां राजपुत्रीं तद्भवाख्यानपूर्वकम् । चक्रतुः धर्मनिपुणां तत्त्वाऽतत्त्वविशारदाम् ॥ १९३ ॥
साऽपि धर्मं समासाद्य प्रव्रज्यामाददेऽन्तिमे । वयसि प्राप्तपञ्चत्वा त्रिविष्टपमुपाययौ ॥ १९४ ॥
अर्हद्दाससुतौ तौ तु धर्ममाराध्य निश्चलम् । सम्यगाराधनापूर्वं मृत्वा प्रथमताविषे ॥ १९५ ॥
जातौ सामानिकौ देवौ जिनपूजापरायणौ । पञ्चकल्याणकीं कृत्वा बहूनां श्रीमदर्हताम् ॥ १९६ ॥
ततश्च्युतौ च तौ जातौ हस्तिनापुरनामनि । पुरे भूमिपतेर्विष्वक्सेनस्य तनयौ वरौ ॥ १९७ ॥
मधु-कैटभनामानौ शुद्धसम्यक्त्वशालिनौ । देवो नन्दीश्वरात् च्युत्वा सोऽपि भ्राम्यन् बहून् भवान् ॥ १९८ ॥
राजा वटपुरे जातः कनकप्रभनामभृत् । सुदर्शना ततश्च्युत्वा संसारे कुर्वती भवान् ॥ १९९ ॥

१ अनशनम् । २ स्वर्गम् ।

नामतो रुक्मिणीत्यासीत् पत्नी तस्यैकजीवितम् । अन्यदा जितशत्रुस्तामपश्यद्रूपमोहितः ॥ १७४ ॥
जज्ञे कामातुरः सद्यो न शशाक च तां विना । स्थातुं भोक्तु च शयितु क्रीडितुं क्षणमप्यथ ॥ १७५ ॥
किंचिद्व्यलीकमुत्पाद्य सोमभूतेर्द्विजन्मनः । अन्तःपुरे न्यधात् स्वस्मिन् रुक्मिणीं काममोहितः ॥ १७६ ॥
तया सह वत्सराणां सहस्र कामकेलिभिः । रंत्वाप्यतृप्त एवासीद् विपन्नो जीवितक्षये ॥ १७७ ॥
उत्पन्नो नरके सद्यस्त्रिपल्योपमजीवितः । परदाररताना हि गतिरेषैव वर्तते ॥ १७८ ॥
उक्तं च—"चत्वारो नरकद्वाराः प्रथमं रात्रिभोजनम् । परस्त्रीगमनं चैव सधाना-ऽनंतभक्षणम् ॥ १७९ ॥
सोढगाढव्यथः सोऽभूत् ततश्च्युत्वा मृगो वने । हतश्च व्याधबाणेन जातः श्रेष्ठिसुतः पुनः ॥ १८० ॥
व्यापारे निकृतिं कृत्वा विपद्याभूदनेकपः । जातिस्मरणमासाद्य सोऽभूदनशनी गजः ॥ १८१ ॥
अष्टादशेऽहनि प्राप्तपञ्चत्वोऽभूत् सुरः स च । वैमानिकस्त्रिपल्यायुः भुक्तभोगस्ततोऽपि हि ॥ १८२ ॥
जातिगर्वाऽर्जितं कर्म तदा प्रादुरभूत्ततः । प्रच्युत्य देवश्चण्डालो नीचैर्गतिरभूत्स च ॥ १८३ ॥
रुक्मिणी तु भवं भ्रान्त्वा कृतजातिमदाऽभवत् । शुनीयं तेन वां स्नेहो युक्तस्तद्द्वयदर्शनात् ॥ १८४ ॥
इति साधुवचः श्रुत्वा जातिस्मरणमापतुः । अर्हद्दाससुतौ सम्यग् धर्ममर्मविचारिणौ ॥ १८५ ॥
तदोपागत्य चाण्डालं सरमां च भवांस्तयोः । कथयित्वाऽबोधयतां धर्ममाख्याय मूलतः ॥ १८६ ॥

१ भाषया 'आयणु' इति प्रसिद्धम् । २ कूटतुलादिमायाम् । ३ हस्ती । ४ शुनीम् ५ पूर्वजन्मकथा ।

मार्गे रथस्थौ यान्तौ तौ चण्डालं शुनिकां पुनः । दृष्ट्वा सम्प्रापतुः प्रेम परमं तद्द्वयोपरि ॥ १६१ ॥
तिस्रः प्रदक्षिणा दत्त्वा मुनिं नत्वा च भक्तितः । धर्मं श्रुत्वा तदाख्यातं सुधामधुरभाषया ॥ १६२ ॥
गते राजादिके लोके मुनिमेकान्तसंस्थितम् । पृच्छतः स्म च कः स्नेह आवयोर्जायते हृदि ? ॥ १६३ ॥
चण्डालं च शुनीं दृष्ट्वा निन्द्यजाती इमे पुनः । आवां तूत्तमकुलजावत्रार्थे कारणं वद ॥ १६४ ॥
अथ साधुः स्मितज्योत्स्नापूरस्तबकिताधरः । सुधादेशीयवचनः ताभ्यां पृष्टो जगाद च ॥ १६५ ॥
भो ! भो ! महानुभावौ तत् शृणुतां स्नेहकारणम् । न हि निष्कारणं प्रेम जायते हृदि कर्हिचित् ॥ १६६ ॥
वदेयुः पूर्वजं प्रेम नयने हृदयं तथा । यान्तीमिव गन्धरेणुं वदेदम्बरमेव हि ॥ १६७ ॥
इतस्तृतीयकभवे सोमदेवोऽभिधानतः । विप्रोऽभूद् युवयोस्तातो माता विप्री तथाऽग्निला ॥ १६८ ॥
तयोः पुत्रौ युवां जातौ विप्रौ वेदाऽब्धिपारगौ । अग्निभूति-वायुभूतिनामकौ लोकमानितौ ॥ १६९ ॥
श्राद्धधर्मं युवां प्राप्य प्राप्तौ प्रथमताविषम् । ततः प्रच्युत्य सञ्जातावार्हतावत्र जन्मनि ॥ १७० ॥
पिता तु सोमदेवः स मिथ्यादृष्टिर्विपद्य च । अत्रैव भरते शङ्खपुरे नृपसुतोऽभवत् ॥ १७१ ॥
जितशत्रुर्महीपालः सप्तव्यसनतत्परः । महानिर्दयचेतस्कः परदाररतोऽधिकम् ॥ १७२ ॥
अग्निला युवयोर्माता क्रमात् साऽपि व्यपद्यत । पुरे शङ्खपुरेऽत्रैव सोमभूतेर्द्विजन्मनः ॥ १७३ ॥

१ देवलोकम् ।

दिनोद्गारे ततो लोकाः तौ मातापितरौ तयोः । ददृशुस्तु तथाभासदृशौ दुर्बुद्धिचेतसौ ॥ १४७ ॥
तदा च सुमना यक्षः पितृभ्यां याचितश्चिरम् । रुदद्भ्यां विलपद्भ्यां च जगादाऽतुलसाहसः ॥ १४८ ॥
मुनिं हन्तु समायातौ खड्गहस्तौ सुदुर्मती । स्तम्भितौ तौ मया नूनं न मुञ्चामि कदापि हि ॥ १४९ ॥
भवतोरुपरोधेन मुञ्चामि यदि कर्हिचित् । अङ्गीकारे तपस्याया नान्यथेति ममाऽऽग्रहः ॥ १५० ॥
नैव वाच्यं ममाऽत्रार्थे पितरावूचतुस्तदा । कथं पाल्यः साधुधर्मो दुष्करो मन्दसाहसैः ? ॥ १५१ ॥
ततस्त्वेतौ श्राद्धधर्मं ग्राहयित्वा विमुञ्च भोः ! । श्राद्धधर्ममपेदानौ क्षणान्मुक्तौ सुरेण तौ ॥ १५२ ॥
तद्दिनादथ तौ नित्यं रात्रिभोजनवर्जितौ । निषिद्धकन्दमूलादिभोजनौ श्रावकोत्तमौ ॥ १५३ ॥
तयोस्तु मातापितरौ जिनधर्मपराङ्मुखौ । नार्हद्धर्माभिमुखता भेजतुः कर्मगौरवात् ॥ १५४ ॥
अग्निभूति-वायुभूती पालयित्वाऽऽर्हतं व्रतम् । कृताराधनकौ सम्यक् क्षामिताऽशेषजन्तुकौ ॥ १५५ ॥
ततो मरणमासाद्य सञ्जातलघुकर्मकौ । आद्ये स्वर्गे सुरौ जातौ षट्पल्यमितायुषौ ॥ १५६ ॥
हस्तिनागपुरेऽभूतामर्हद्दासवणिक्सुतौ । तत आद्याद्दिवश्च्युत्वा जिनधर्मपरायणौ ॥ १५७ ॥
पूर्णभद्र–माणिभद्राभिधानौ भोगशालिनौ । युवानौ प्राप्तविद्यौ च धर्मकर्मरतौ सदा ॥ १५८ ॥
परस्परप्रीतियुतौ पितृभक्तौ सदाशयौ । श्राद्धगुणैकविंशत्या युतौ शास्त्रार्थशालिनौ ॥ १५९ ॥ (त्रिभिर्विशेषकम्)
अथाऽन्यदा वने श्रुत्वा महेन्द्रमुनिमागतम् । भावतश्चलितौ नन्तुं भक्त्या संभ्रान्तचेतसौ ॥ १६० ॥

भक्षितां शोचयन् मूढः कृत्याऽकृत्यविचारणे । गृहागतश्च कालेन मृत्वाभूत् तनयाङ्गजः ॥ १३३ ॥
क्रमाच्च कर्मक्षयतो जातिस्मृतिमवाप्तवान् । कथं वाच्यो मया पुत्रः तात तातेति सम्प्रति ? ॥ १३४ ॥
तद्वधूश्च कथं वाच्या मातः ! मातरिति स्फुटम् । तथान्येऽपि कथंकारं स्वजना अन्यथा मया ॥ १३५ ॥
मूकत्वमेव मे श्रेय इति मूकोऽभवच्च सः । न चेद् वां यदि विश्वासः पृच्छन्तं तं प्रति द्रुतम् ॥ १३६ ॥
स एव वक्ता मूकत्वमपहाय मयोदितः । ततः कौतुकिनो लोका गत्वा तं मूककर्षकम् ॥ १३७ ॥
आनीतवन्तः सर्वेऽपि धर्मदेशनपर्षदि । मुनिराख्यच्च हलिनं मूकत्वं मुञ्च सम्प्रति ॥ १३८ ॥
ब्रूहि प्राग्जन्म निजकं लोकप्रत्ययकारकम् । पिता पुत्रः स्नुषा माता पुत्रो वप्ता स्नुषा प्रसूः ॥ १३९ ॥
संसारे भ्रमतां पुंसामनेकश इति ह्यभूत् । अत्रार्थे विस्मयो नैव कार्यो वैराग्यशालिभिः ॥ १४० ॥
एवं मुनिवचः श्रुत्वा मुञ्चन् मूकव्रतं हली । सर्ववृत्तान्तमाचख्यौ निजप्राग्जन्मसंभवम् ॥ १४१ ॥
मुदिताश्च ततो लोकाः परं वैराग्यमासदन् । श्रुते हि तादृक्सम्बन्धे के न वैराग्यमाप्नुयुः ? ॥ १४२ ॥
प्रव्रज्यां जगृहुः केचित् केचन द्वादशव्रतीम् । सम्यक्त्वं निरतीचारमाचरन्मुदिताऽऽशयाः ॥ १४३ ॥
कृषीवलः प्रवव्राज हस्यमानौ जनैर्गृहम् । सोमदेवसुतौ तौ तु गतावीर्ष्यापरौ हृदि ॥ १४४ ॥
वैरायमाणौ तौ विप्रौ मुनिं हन्तुं च जग्मतुः । निशायां ध्वान्तपूर्णायां निशितासिकरौ खलौ ॥ १४५ ॥
यक्षेण तौ सुमनसा नामतः परिणामतः । स्तम्भितौ च तथैवास्तां काष्ठपुत्तलकाविव ॥ १४६ ॥

नन्दिवर्द्धननामानमूचानौ तौ मदोद्धुरौ । शास्त्राणि वेत्सि किं साधो[1] न वा मूढोऽसि तैर्विना ? ॥ १२० ॥
यदि वेत्सि च शास्त्राणि वदाऽऽवाभ्यां सह ध्रुवम् । अन्यथा मौनमाधाय गम्यमन्यत्र च त्वया ॥१२१॥
न स्थेयं त्वयका नैव विप्रतार्या जना इमे । मुधाभिमानिना ग्रामेऽस्माक धर्मेण शालिनि ॥१२२॥
नन्दिवर्धन आचार्यः तदा स्व शैक्षक जगौ । सत्यार्थं सत्यनामानमाभ्यां नैवोचित मम ॥१२३॥
जल्पनं तेन विधेयाविमौ निष्प्रभकौ कुरु । इत्युक्ते सत्यनामर्षिः जल्पति स्म च तौ प्रति ॥१२४॥
रे! युवां कुत आयातौ ग्रामतः शालिसंज्ञकात् ? । इत्यूचतुस्ततः प्रोचे सत्यः सत्यार्थकोविदः ॥१२५॥
नैतत् पृच्छाम्यहं किं तु नृत्वं प्राप्तौ कुतो भवात् ? । पृच्छामीति यदि ज्ञानं युवां ब्रूत तदाऽखिलम् ॥१२६॥
तदा च ज्ञानहीनौ तौ तस्थतुः मौनमाश्रितौ । लज्जयाऽधोमुखीभूय ज्ञान मिथ्यादृशा कुतः ? ॥ १२७ ॥
तदा सत्योऽवदद् जानन्नवधिज्ञानवानथ । ग्रामेऽस्मिन्नथ वनस्थल्यां युवां पललभक्षिणौ ॥ १२८ ॥
बभूवथुः पूर्वभवे शृगालावेकमातृजौ । तत्रैव चक्रथुः प्राणवृत्ति मांसादिभक्षणात् ॥ १२९ ॥
क्षेत्रे मुक्ता चर्मरज्जुः कर्षकेण च केनचित् । आर्द्रीभूता मेघवृष्ट्या रात्रावागत्य भक्षिता ॥ १३० ॥
ताभ्यामुभाभ्यां सा सर्वा क्षुधिताभ्यां विपद्य च । अत्याहारात्ततो जातौ युवामत्र द्विजोत्तमौ ॥ १३१ ॥
सोमदेवक्षितिदेवसुतौ वेदार्थपारगौ । दिनोद्गारे कर्षकोऽपि चर्मरज्जु ददर्श ताम् ॥ १३२ ॥

१ प्रभाते ।

भूयोऽपि नारदोऽपृच्छत् केवलज्ञानभास्करम् । सीमन्धरं तीर्थकृतं सर्वसंदेहनाशनम् ॥ १०६ ॥
आत्मदर्शं वरं प्राप्य को न पश्येन्निजाननम् ? । चिन्तामणिं गृहे प्राप्य को बुभुक्षां सहेत हि ? ॥ १०७ ॥
स्वर्गसिन्धूजलं प्राप्य न पिबेत्कः पिपासितः ? । एवं तीर्थकृतं प्राप्य सन्देहं को भनक्ति न ? ॥ १०८ ॥
कथंकारं धूमकेतोर्वैरं तत्पूर्वजन्मनि । रुक्मिणीसूनुना सार्द्धं सविस्तरमदो वद ॥ १०९ ॥
भूयः सीमन्धरः स्वामी श्वेतयन् सृक्कणी उभे । दन्तश्रेणित्विषां पङ्क्त्या गिरा मधुरया जगौ ॥ ११० ॥
शृणु नारद वृत्तान्तं रुक्मिणीतनयस्य तु । प्राग्जन्मनि वैरहेतौ द्युसदा धूमकेतुना ॥ १११ ॥
जम्बूद्वीपेऽत्र भरते देशे च मगधाभिधे । शालिग्रामाऽभिधो ग्रामः शालीनामाकरः खलु ॥ ११२ ॥
तत्रास्त्युदाममुद्यानं नाम्ना च परिणामतः । मनोरमं नैकजातिवृक्षश्रेणिविराजितम् ॥ ११३ ॥
तदुद्यानस्याऽधिष्ठाता यक्षोऽभूत् सुमना इति । सुमनाः साधुभक्तत्वात् सारसम्यक्त्वधारकः ॥ ११४ ॥
तत्र ग्रामे सोमदेवो द्विजोऽभूद् वेदविश्रुतः । अग्निला नाम तत्पत्नी तस्यामभवतां सुतौ ॥ ११५ ॥
अग्निभूतिवायुभूतिनामानौ वेदपारगौ । विद्याभिमानाद्गर्जन्तौ युवानौ भोगशालिनौ ॥ ११६ ॥
तत्रोद्यानेऽन्यदा साधुर्नन्दिवर्द्धननामकः । आचार्य आययौ लोकैर्महाडम्बरपूर्वकम् ॥ ११७ ॥
नमस्यन्तः समागत्य नैकसाधुपरिच्छदः । धर्मं च शुश्रुवुर्लोकास्तद्भक्ता जज्ञिरे पुनः ॥ ११८ ॥
तस्यर्द्धिं प्रेक्ष्य च क्रुद्धावीर्ष्यया जग्मतुः पुनः । देशनाऽवसरे लोके मिलिते तत्र भूयसि ॥ ११९ ॥

पर सीमन्धर स्वामिन् ! प्राग्विदेहेषु संस्थितम् । गत्वा प्रक्ष्यामि तां वार्त्तां रुक्मिणीतनुजन्मनः ॥ ९२ ॥
रुक्मिणी मम भक्ताऽस्ति मयैवाऽस्ति तवार्पिता । गत्वा द्रुत समानेष्ये शुद्धिं मा दुःखमावह ॥ ९३ ॥
कृष्णश्च यदवश्चान्ये मुदिता ऊचिरेऽथ तम् । त्वमेव हि समर्थोऽसि नः कुले कार्यसाधने ॥ ९४ ॥
त्वमेव कुरुषे सर्वं दुःसाध्यं कार्यमन्यतः । जानीमहे वय सर्वे त्वमेवेदं करिष्यसि ॥ ९५ ॥
इत्यादिवचनैः प्रेर्यमाणो मुनिपतिर्ययौ । वात्यया वन्हिरिव वात्ययेव हि तृणोत्करः ॥ ९६॥
प्राग्विदेहेषु समवसृतौ सीमंधरप्रभोः । त्रिशः प्रदक्षिणां दत्त्वा ननाम त्रिजगद्गुरुम् ॥ ९७ ॥
देशनान्ते च पप्रच्छ समयं प्राप्य नारदः । कुत्राऽस्ति कृष्णरुक्मिण्याः सुतः प्रद्युम्नसञ्ज्ञकः ? ॥ ९८ ॥
स्वाम्याचख्यौ नारदापि शृणु वृत्तमशेषतः । तस्य पुण्यवतो जातं कर्मणा प्राग्कृतेन यत् ॥ ९९ ॥
तस्य प्राग्जन्मनो वैरी धूमकेतुः सुराधमः । छलं प्राप्य जहाराऽऽशु रुक्मिणीवेषभृत् स्वयम् ॥ १०० ॥
कृष्णहस्तादृगृहीत्वाऽऽशु गतो वैताढ्यपर्वते । शिलायां मुमुचे तेन निर्दयेन मृतीच्छया ॥ १०१ ॥
पर चरमदेहीति हिंसितुं नैव शक्यते । यस्यायुः प्रबल तस्य न विषं नैव शस्त्रकम् ॥ १०२ ॥
न बुभुक्षा पिपासा वा समर्थाः स्युः पराभवे । ततश्च गच्छता दृष्टः कालसंवरभूभुजा ॥ १०३ ॥
मेघकूटाख्यनगरस्वामिना भ्रातरेव हि । गृहीतश्च महाप्रेम्णा गत्वा पत्न्यै च सोऽर्पितः ॥ १०४ ॥
अपुत्रया तस्य पत्न्या नाम्ना कनकमालया । पाल्यमानः पुत्र इव वर्द्धते तत्र सौख्यभाक् ॥ १०५ ॥

इत्यादि विलपन्ती सा रोदयन्ति परानपि। सर्वान् शोकमयांश्चक्रे यदून् निजपुरीस्थितान् ॥ ७८ ॥
कृष्णस्तु कारयामास शुद्धिं नैवाप्तवान् क्वचित्। स्थाने स्थाने गता लोकास्ते निवृत्य तथाऽऽगताः ॥ ७९ ॥
एकां मुक्त्वा सत्यभामामपरं तत्परिच्छदम्। सर्वेऽपि शोकविवशा जज्ञिरे मौनिनः पुरः ॥ ८० ॥
न स्थातुं नैव चलितुं न भोक्तुं शयितुं पुनः। न क्रीडितुं न हसितुं शेकुस्ते शोकविह्वलाः ॥ ८१ ॥
सुतस्य जन्मसमये प्रमोदस्य किलाऽभवत्। राजधानी हि शोकस्य राज्ञः सैवाऽभवत् क्षणात् ॥ ८२ ॥
ईदृगेव हि संसारस्थितिं नीतिविदो जनाः। भावयन्तो लेभिरे द्राग् वैराग्यं परमं हृदि ॥ ८३ ॥
सभास्थं कृष्णभूपालं समुद्रविजयादयः। आगत्य तस्थुः परितो वेष्टयित्वाऽतिदुःखिताः ॥ ८४ ॥
न हि गानध्वनिस्तत्र न मृदङ्गध्वनिः पुनः। विगानध्वनिरेवैको विधेः श्रूयेत तत्र च ॥ ८५ ॥
अत्रान्तरे समायातो नारदर्षिर्भ्रमिप्रियः। सभास्थं देवकीपुत्रं दृष्ट्वा शोकवशंवदम् ॥ ८६ ॥
अपृच्छच्च महाराज ! कः शोको हर्षकारणे। पुत्रं जातमहं श्रुत्वा समागां तव पर्षदि ॥ ८७ ॥
मया ज्ञातं सुखभक्ष्यं लप्स्येऽहं पुत्रजन्मनि। परं शोको मया लब्धः सुलभस्त्विह पर्षदि ॥ ८८ ॥
वद राजन् ! कारणं किं शोकस्य त्वरितं मम। तदाऽवदन्नारदाय सर्वं वृत्तान्तमादितः ॥ ८९ ॥
तदाऽवदन्नारदर्षिरतिमुक्तकनामकः। ऋषिरासीन्महाज्ञानी कालत्रयविदां धुरिः ॥ ९० ॥
इदानीमेव स पुनः केवलज्ञानमाप्तवान्। मोक्षं गतोऽत्र नैवास्ति ज्ञानी भारतभूतले ॥ ९१ ॥

एवं चिन्तयतस्तस्याऽधस्ताद् दृष्टिस्तदाऽपतत् । यावदालोकते तावदपश्यद्बालकं च सः ॥ ६५ ॥
विमानेन गतस्तत्र लाति स्म करसम्पुटे । बालं विशालभालं तं पुण्यभारमिवात्मनः ॥ ६६ ॥
तं प्राप्य मुमुदे राजा रविबिम्बसमद्युतिम् । दिशासु व्याप्ततेजस्कं निधानमिव निर्धनः ॥ ६७ ॥
मेघकूटपुरे गत्वा ददौ स प्रेमबन्धुरः । पत्न्यै कनकमालायै निष्पुत्रायै सुतोत्तमम् ॥ ६८ ॥
इयं चासीद्गूढगर्भाऽज्ञातगर्भा ततोऽभवत् । अधुना समये पूर्णे पुत्ररत्नमजीजनत् ॥ ६९ ॥
इत्याविष्कृत्य लोकेषु महोत्सवमकारयत् । बन्दिमोक्षादिकं सर्वं तत्पुण्यविवशीकृतः ॥ ७० ॥
प्रद्युम्नमकरोन्नाम दिशा प्रद्योतनात् पुन । सान्वयं विदितं लोके दक्षा एकाधियो यतः ॥ ७१ ॥
तत्राऽपि महतीं लेभे पूजा पुण्यानुभावतः । रत्नानि यत्र तत्रापि रत्नान्येव न संशयः ॥ ७२ ॥
इतश्च रुक्मिणी कृष्णं पप्रच्छाऽस्ति क्व मे सुतः । हरिराहाऽर्पितो हस्ते तव हास्यं करोषि किम् ॥ ७३ ॥
रुक्मिण्यूचे हससि किं हास्यस्थानमिदं न हि । समये शोभते हास्यमन्यत्र तु विपाद्यते ॥ ७४ ॥
इत्यादिवादविवशौ सुतं यावन्न पश्यतः । जज्ञाते दुःखितौ गाढं पुत्ररत्नानवेक्षणात् ॥ ७५ ॥
रुक्मिणी पतिता भूमौ मूर्च्छिता तत्क्षणं हृदि । दासीभिरुपचारेण क्षणाच्चैतन्यमापिता ॥ ७६ ॥
क्व मे सुतः क्व मे पुत्रो हा वेधः ! किं कृतं त्वया ? । दत्त्वा मे पुत्रमाणिक्यं गृह्णता त्वरितं सता ॥ ७७ ॥



१ आपिता । २ विधात । ३ प्रसिद्धनाम

भद्रासने निविष्टा सा सप्ततन्त्रीव सुस्वरा । उवाच दृष्टं स्वं स्वप्नं द्वारिकायाः प्रभोः पुरः ॥ २५ ॥
स्वामिन्नद्य सिंहशावो ददृशे स्वाङ्कसङ्गतः । शयने तादृशे रम्ये सुप्तया विगतामया ॥ २६ ॥
मया प्रबुद्धया सत्या कथितस्त्वां प्रति प्रभो ! । ज्ञात्वा चैनं शुभोदर्कं परां मुदमवाप्तया ॥ २७ ॥
अस्य हि स्वप्नसारस्य विशेषं मे समादिश । यतः पुमांसः स्त्रीभ्यो हि विशेषज्ञा भवन्त्यहो ! ॥ २८ ॥
ततः प्रमुदितः शार्ङ्गी विचार्य क्षणमात्रतः । प्रोचे भीष्मसुतां प्राज्ञो जातरोमाञ्चसञ्चयः ॥ २९ ॥
अस्मात् स्वप्नात् सुतो भावी महासिंहपराक्रमः । याहि स्वं धाम मा निद्रां कुर्या धर्मकथापरा ॥ ३० ॥
इत्युक्त्वा व्यसृजत् तां च तदा देवो महर्द्धिकः । महाशुक्रात् परिच्युत्य रुक्मिण्युदरमाविशत् ॥ ३१ ॥
कथंचिद् ज्ञातवृत्तान्ता सत्यभामाऽत्यसूयया । आगत्य च हरिं प्रोचे स्वामिन्नद्य मयेक्षितः ॥ ३२ ॥
स्वप्ने श्वेतो हस्तिमल्लो जानंश्च कपटं हरिः । तदाकृतैस्तथाप्यूचे हर्षदायि वचोऽमृतम् ॥ ३३ ॥
भावी तवाऽपि च सुतो महाबाहुर्महाबलः । ततश्च हर्षमापन्ना सत्या स्वस्य गृहं ययौ ॥ ३४ ॥
काकतालीयदृष्टान्ताज्जाता सापि च गर्भिणी । क्रमात् क्रमादवर्द्धिष्टोदरं तस्या मुदा सह ॥ ३५ ॥
रुक्मिणी पुण्यगर्भत्वादनावस्योदराऽजनि । सत्यभामा हरिं प्रोचे पश्यास्याः कूटजल्पनम् ॥ ३६ ॥
तद्विपये साक्षिजठरमेतस्या मामकं पुनः । कृष्णः प्रोचेऽथ जानीमः पुण्यवत्सुतलक्षणम् ॥ ३७ ॥

१ वीणा । २ बालः ।

मामुद्दिश्य शुनिः प्राहेत्युचाना स्वसखीपुरः । रुक्मिणी प्राह न च्छद्मगृहीतं फलदं वचः ॥ १२ ॥
शकुनानि तथा स्वप्ना निमित्तानि तथैव हि । यमुद्दिश्य विलोक्यानि त मत्येव फलन्त्यहो ! ॥ १३ ॥
परं विवदमाने ते यातः स्मोपेन्द्रपर्षदि । तदा दुर्योधनस्तत्र हरिं मिलितुमागतः ॥ १४ ॥
तं प्रत्युवाच चात्युच्चैः भामा मानवती तदा । मत्सुतो भवतात् पुत्र्याः पतिस्तथाऽऽह रुक्मिणी ॥ १५ ॥
दुर्योधन ! मम पुत्रो जामाता भवतात् तव । पतितस्तस्मिन् महति सङ्कटे दुःसहे स च ॥ १६ ॥
विचार्योचे यया पुत्रः प्रथमं प्रसविष्यते । सुतां मदीयां दास्यामि तस्याः पुत्राय निश्चितम् ॥ १७ ॥
भामोवाचाऽथ वाचाटा निर्विचारा मदाकुला । यस्याश्च प्रथम पुत्रः पाणिग्रहणकारकः ॥ १८ ॥
तद्विवाहे ध्रुव देया अन्यथा मूर्द्धजाः स्वकाः । विवादग्रहिला मत्ता रुक्मिण्यपि तथाऽवदत् ॥ १९ ॥
भवन्तु साक्षिणश्चैते रौहिणेय–जनार्दनौ । तथा दुर्योधनो राजा सत्यवाच इमे यतः ॥ २० ॥
इति पूत्कृत्य पूत्कृत्य सपूत्कारवचस्तदा । अशक्ते जल्पितु ते द्वे यातः स्म स्वयमेव हि ॥ २१ ॥
स्त्रियो मल्लाश्च मेषाश्च कुर्कुटा महिषास्तथा । परस्पर युध्यमाना निवर्त्तन्ते स्वतो यतः ॥ २२ ॥
अथैकदा निशि स्वप्ने सिंहं स्वोत्सङ्गसङ्गतम् । ददर्श रुक्मिणी देवी देवीव मुदिता ततः ॥ २३ ॥
जजागार तदागारात् कृष्णागारं ययौ मुदा । कृष्णं जागरयामास सुधामधुरया गिरा ॥ २४ ॥

१ कृष्णपर्षदि ।

# पञ्चमः सर्गः ।

अथ प्रमुदिता नित्यं लक्ष्मीनामापरं निजम् । प्राप्य भीष्मसुता भुङ्क्ते सुखं कंसारिणा सह ॥ १ ॥
ईर्ष्यया सत्यभामाऽथ मृतेव समजायत । फुल्ला वनस्पतीः प्रेक्ष्य प्रावृषीव यवासकः ॥ २ ॥
अथान्यदा समागच्छद् भिक्षार्थी रुक्मिणीगृहे । अतिमुक्तकनामर्षिः निमित्तज्ञानमण्डितः ॥ ३ ॥
आसनात् सहसोत्थाय ननाम त्रिः प्रदक्षिणम् । मोदकैः सौरभासारैः प्रतिलाभयति स्म तम् ॥ ४ ॥
तं च प्रमुदितं कृत्वा मुनिं पप्रच्छ रुक्मिणी । स्वामिन्! मम सुतो भावी किं न वा वद सूनृतम् ॥ ५ ॥
कियताऽनेहसा भावी भावी चेन्मम चोद्वहेम् । अत्रैवावसरे सत्या ज्ञात्वागाद् रुक्मिणीगृहे ॥ ६ ॥
एनमेव चकाराऽऽशु प्रश्नं स्पर्द्धावती तथा । उद्दिश्य रुक्मिणीं प्रोचे मुनिर्मोदकमोदितः ॥ ७ ॥
भावी सूनुर्महाभागे! स्तोकैरेव दिनैस्तव । बलेन पितरं विष्णुमनुकर्त्ता महाशयः ॥ ८ ॥
प्रव्रज्य नेमिपार्श्वे च सद्यो मुक्तिमवाप्स्यसि । इत्युक्त्वा सदनात् सद्यो निर्ययौ मुनिसत्तमः ॥ ९ ॥
रुक्मिणी तद्वचः श्रुत्वा परमां मुदमादधौ । तादृक्सुतमये रत्ने प्राप्तव्ये को न माद्यति? ॥ १० ॥
भामाऽपि तद्वचः श्रुत्वा ननर्त्तेव कलापिनी । स्तनितं शुचिमासस्य मुनेर्गाढप्रमोदभाक् ॥ ११ ॥

१ सत्यम् । २ पुत्रम् । ३ गर्जारवम् । ४ आषाढमासस्य ।

एवं जाते च सञ्जातमत्ययाऽहमहर्निशम् । पूजयिष्यामि सद्भक्त्या कृताम्भःपाननिश्चया ॥ १८४ ॥
इति शृण्वान एवास्या वचांसि वनमध्यतः । हसन्नेवागतः कृष्णः कृष्णास्या साऽभवत् त्रिरम् ॥ १८५ ॥
युक्तं युक्त प्रिये! चैतत्पूजनं वरमार्गणम् । इयं स्यात् पूजनीया ते रूपलावण्यतोऽधिका ॥ १८६ ॥
अस्याः पूजाप्रभावेण वशीभूतोस्म्यहं तव । कर्त्तव्याऽहर्निशं पूजा जलाभिग्रहतः खलु ॥ १८७ ॥
रुक्मिण्यथ समुत्थाय पादयोः पतनं शुभम् । चकार विनयाऽऽनम्राऽधोमुखा लज्जया भृशम् ॥ १८८ ॥
अथ कोपाकुला सत्या व्यब्रवीत्तं यथा तथा । अरे त्वं वालगोपालः गीयसे सत्यमेव हि ॥ १८९ ॥
द्वारिकाराज्यभोक्तृत्वे नो गत वालचेष्टनम् । सत्य गोपालवालाः स्युः पयःपानैर्मदोद्धताः ॥ १९० ॥
मायाविनो महामूर्खाः स्त्रीपर्षदि यथा तथा । समागत्य हि जल्पन्ति कार्याकार्यविचारिणः ॥ १९१ ॥
तदोवाच हरिर्हास्याद् भामे! पूर्वं त्वयैव भोः । मायामयस्त मेऽवर्णि न कुर्वे नामतः कथम् ॥ १९२ ॥
इति हासपराः सर्वे जग्मुः स्व स्वं शनैः शनैः । चलत्पताकं सदनं विमानमिव नाकिनः ॥ १९३ ॥
ततो लक्ष्मीरिति ख्याता रुक्मिणी रूपशालिनी । पुरुषोत्तममान्यत्वात् पूजां न लभते कथम्? ॥ १९४ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु—लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार सर्गस्तुरीय इति तत्र गतः समाप्तिम् ॥ १९५ ॥

इति श्रीप्रद्युम्नचरित्रे महाकाव्ये रुक्मिणीपाणिग्रहणवर्णनो नाम चतुर्थः सर्गः ।

एवं कृत्वा गतः कृष्णः सत्यभामागृहं तदा । आगच्छस्त्वं वने तस्मिन् दर्शयामि तवाऽनुजाम् ॥ १७१ ॥
इत्युक्ता हर्षमाप्ता सा स्नानालङ्कारभूषिता । वासांसि नैकजातीनि परिधाय सखीवृता ॥ १७२ ॥
रथारूढाऽगमत् तत्र तां चोवाच गदाधरः । गत्वा लक्ष्मीगृहे तिष्ठ पूजयन्ती तदाकृतिम् ॥ १७३ ॥
तावत् तस्यां गृहे गत्वा तत्रैवाहं नयामि तां । इत्युक्त्वा स लतागेहे तस्थावन्तिर्हितो रहः ॥ १७४ ॥
गत्वा च सत्यभामा सा रथादवततार तत् । तस्मिन् श्रीसदने बिम्बं श्रिया एव हि मन्यते ॥ १७५ ॥
तदा तस्याः प्रियसखी प्रोचे प्रीतिकरं वचः । पूजयैनां कृतस्नाना फलपुष्पादिभिः स्वयम् ॥ १७६ ॥
कामितं हि ददात्येषा पूजिता याचिता वरम् । लोके प्रसिद्धमेतद्धि द्वारिकायाः पुरोऽखिले ॥ १७७ ॥
इभ्या अपि रथारूढा गजारूढाः क्ष्माभुजः । हयारूढाः क्षत्रजाताः पत्तयो भक्तिभासुराः ॥ १७८ ॥
यादव्योऽपि च वाणिज्यः स्त्रियः पूजनतत्पराः । गृहीतपूजासामग्र्यः समागच्छन्ति नित्यशः ॥ १७९ ॥ (युग्मम्)
एवं सखीप्रेरिता सा वासोऽलङ्करणादिकम् । मुक्त्वा वाप्यां कृतस्नाना गृहीत्वा कुसुमादिकम् ॥ १८० ॥
श्रीदेवीसदने गत्वा पूजयामास तां प्रति । पूजयित्वा चिरं प्रोचे स्वामिनि! प्रार्थये वरम् ॥ १८१ ॥ (युग्मम्)
यथा भवति वश्यो मे स्वामी कंसनिसूदनः । तथा कुर्या इमां भक्तां त्वत्पादपतितां किल ॥ १८२ ॥
यथा जयामि रूपेण रुक्मिणीं नवयौवनाम् । नवोढां रूपसम्पत्त्या शचीमिव महीस्थिताम् ॥ १८३ ॥

---

१ सत्यभामाम् । २ कृष्णः । ३ मूर्तिम् । ४ रुक्मिण्याः । ५ सत्यभामायाः । ६ राजानः ।

ज्ञातं सुरभिद्रव्येण कार्मणेनैव रुक्मिणी । वशीचकारैनमहो! धूर्ता सा परदेशजा ॥ १५८ ॥
हसन्नुचस्थिवान् विष्णुः प्रोचे हा! किं कृतं त्वया? । तया ताम्बूलमुच्छिष्टं बद्ध हसनशीलया ॥ १५९ ॥
तवालये गच्छतो मे हास्यात् प्रावरणाञ्चले । अङ्गरागस्त्वया ज्ञातो वञ्चिता कीदृशी मया ॥ १६० ॥
स्वच्छेन वारिणा चाङ्गं निर्मलीकृत्य वाससा । अपनीयाऽङ्गरागं सा लज्जा नम्राननाऽवदत् ॥ १६१ ॥
याहि रे ! याहि गोपाल! निर्लज्जानां शिरोमणे! । आजन्मतोऽपि मायायास्तस्करो विदितो जने ॥ १६२ ॥
मायया जात एवाऽसि मायामेव विनिर्मितः । मायया राज्यमाप्तोऽसि व्यधान्मायामयं विधिः ॥ १६३ ॥
एवं च तस्या रुष्टायाः कुर्वन्नाश्वासनां जगौ । न करिष्यामि भूयोऽहं क्षमस्वाऽगो मया कृतम् ॥ १६४ ॥
अनुनीतेति साऽवोचद् दर्शयाऽथ प्रिया हरे! । बद्धोऽसि त्वं यया प्रेम्णा पाशेनेव कपिर्युवा ॥ १६५ ॥
शुद्धं दिनं विलोक्याथ कारयिष्ये प्रमोदभृत् । वृद्धायास्ते चरणयोः प्रणामं भीष्मजन्मना ॥ १६६ ॥
एवं प्रमुदितां कृत्वा रुक्मिण्याः सदने ययौ । परस्परं हस्ततालं कुर्वन् वार्तां जहास च ॥ १६७ ॥
हासार्थं सत्यभामायाः पुनरप्यूचिवान् हरिः । दिव्यालङ्कारसंयुक्ता श्वेतवासा व्रज व्रज ॥ १६८ ॥
वनं गता च तां ज्ञात्वा ययौ तत्र त्रिविक्रमः । श्रीदेवीसदने गर्भगेहे च प्रतिमामिव ॥ १६९ ॥
संस्थाप्य शिक्षयित्वेति निर्निमेषा भवेश्चिरम् । माऽङ्गसञ्चालनं कुर्या भामाया दर्शने सति ॥ १७० ॥

१ मायया वर्द्धितोऽसि च, इत्यपि पाठ । २ रुक्मिण्या ।

भामा सञ्जातभामाऽऽह नेदं तव गृहं हरे! । प्रमात् त्वमत्र सहसाऽऽयातोऽसि व्रज सत्वरम् ॥ १४५ ॥
नवीनाया गृहे याहि जीर्णीभूताऽस्म्यहं किल । जीर्णं वासश्च वनिता भोजनं न रुचिप्रदम् ॥ १४६ ॥
हसित्वा हरिरप्यूचे माऽस्मैवं वद सुन्दरि! । जीर्णाऽपि शर्करा नूनं सुधास्वादा मधुस्रवा ॥ १४७ ॥
भ्रमरो यत्र तत्रापि यातु स भ्रमणप्रियः । रमते किल मालत्यां समायातः प्रमोदभाक् ॥ १४८ ॥
इति प्रेमगिरां गुम्फात् तुष्टोत्तस्थौ मनस्विनी । आसनं प्रददौ प्रेमप्रियालापपुरस्सरम् ॥ १४९ ॥
रुक्मिणी पाणिग्रहणवार्त्तां पप्रच्छ सादरम् । भवोद्वार्त्ता नवीना हि प्रेमदा प्रमदाजने ॥ १५० ॥
विष्णुश्चाकथयत् सर्वां प्रेम्णा प्रोत्फुल्लगल्लकः । प्रेमावर्जनवार्त्ताऽपि पुंसां प्रेमप्रदा भवेत् ॥ १५१ ॥
मायया च हरिर्निद्रां वार्त्तायामकरोद् भृशम् । सत्याऽवदन्मया ज्ञातं जागरूको बहून् दिनान् ॥ १५२ ॥
त्वमत्र शयितुमेवाऽऽगतोऽसि मिलनच्छलात् । सा तु नवीना शयनं कर्तुं नैव ददात्यहो! ॥ १५३ ॥ (युग्मम्)
इत्युक्तोऽपि हरिः सुप्तो मायायाः कुलमन्दिरम् । आमस्तकमावरणमुत्तरीयेण वाससा ॥ १५४ ॥
पिधायाऽवयवान् सर्वान् बाढं कुर्वंश्च घूर्णनाम् । यथा ज्ञातवती भामा सुप्तं तं च किलोच्चकैः ॥ १५५ ॥
अथोत्तरीयग्रन्थौ तद्बद्धं सौरभसारवत् । पश्यन्ती मुमुदे भामा छोटयामास ग्रन्थिकाम् ॥ १५६ ॥
पाषाणफलके गत्वा पिष्ट्वा स्वच्छेन वारिणा । मोदमाना स्मयमाना समालम्भनमादधे ॥ १५७ ॥

१ प्रादुर्भूतक्रोधा । २ रचनात् । ३ हस्यमाना । ४ विलेपनम् ।

दुःखसागरनिर्मग्नां सत्यभामां व्यलोकयत् । जहर्ष नारदो गत्वा चाऽब्रवीत्कठिनं वचः ॥ १३२ ॥
मय्यागते सति मुखं कृतं वक्रं त्वया किल । फलमाप्नुहि तत्तस्य सपत्नीसङ्कटोद्भवम् ॥ १३३ ॥
सपत्नी कीदृशी नीत्वाऽर्पिताऽस्ति मयका हरेः । कीदृशं च हरेर्मेमाऽप्यासित त्वत्त एव हि ॥ १३४ ॥
एवं कुर्याः पुनरपि यथाऽहं दर्शयामि ते । फलं तस्यापि संस्मर्यमाजन्म हृदि शल्यवत् ॥ १३५ ॥
क्षते क्षारस्य प्रक्षेपं मत्यहं स समागतः । चकार दुष्टबुद्धिर्हि दुःखदायी भवेच्चिरम् ॥ १३६ ॥
एकदा सुरतान्ते च मुदितं हरिमाह सा । कीदृशी सत्यभामाऽस्ति धाम रूपैकसम्पदाम् ? ॥ १३७ ॥
स्वामिन् ! दर्शय मे मातर्भ्रातः ! श्रीनीलवाससः । चिरादुत्कण्ठिताऽस्मीति तयोक्तोऽनुजगौ हरिः ॥ १३८ ॥
त्वत्पाणिग्रहणाज्जाताद् गतो नाऽस्मि कदापि हि । गृहे तस्या लज्जमानो मानवत्याः पदे पदे ॥ १३९ ॥
ततो नैव हि यास्यामि त्वन्निमग्नमना अहम् । तदा मोचे ऋजुमाशा भीष्मभूरप्यभीषणा ॥ १४० ॥
तवैव नाथ ! नो युक्तं कर्तुं निर्दयतोचितम् । किन्तु मद्वचनाद् युक्तं गृहे गन्तुमथैकदा ॥ १४१ ॥
सा भवेद् वृद्धभगिनी योग्या मे पूजितुं सदा । कृष्णः प्रोवाच यास्यामि परं त्वद्वचनादतः ॥ १४२ ॥
घनसारसारमिश्रं मृगनाभिमनोहरम् । चर्वितं चोक्षितं भूमौ ताम्बूलं सारसौरभम् ॥ १४३ ॥
वसुधाप्सरसस्तस्या बद्ध्वा बृहतिकाञ्चले । जगाम सत्यभामाया रामायाः सदने हरिः ॥ १४४ ॥ (युग्मम्)

१ कर्पूरम् । २ कस्तुरी । ३ विष्णुवस्त्राञ्चले ।

अथ ज्योतिर्विदः प्राह द्वारिकापतिरेकदा । मुहूर्तं पूःप्रवेशस्य विलोकयत सम्प्रति ॥ ११९ ॥
विचार्याऽर्पितवन्तस्ते लग्नं ग्रहबलान्वितम् । प्रविवेश हरिस्तस्मिन् देवकीकृतमङ्गलः ॥ १२० ॥
प्रविशन्तं हरिं वीक्ष्य रथस्थं रुक्मिणीयुतम् । जग्मुः स्त्रियो गवाक्षस्थाः सहर्षं स्फारितेक्षणाः ॥ १२१ ॥
आः किं मदन एवास्ति युतो रत्या शशी किमु ? । रोहिण्या युत एवायं शक्रः शच्या युतोऽथवा ? ॥ १२२ ॥
धन्येयं च यया प्रापि पुण्यभाग्भारसम्पदा । नाम्नाऽपि पुण्डरीकाक्षः पुण्डरीकाभलोचनः ॥ १२३ ॥
एका प्राह च धन्योऽयं स्त्रीरत्नमिदमद्भुतम् । येनाप्तं सन्ति रत्नानि भूरिशोऽश्मभवान्यहो ! ॥ १२४ ॥
परं स्त्रीरत्नमेकं च पुत्ररत्नखनिर्भवेत् । तीर्थकृच्चक्रभृन्मुख्या यस्मात् स्युः रत्नजातयः ॥ १२५ ॥
एवं संस्तूयमानौ तौ पूज्यमानौ पदे पदे । अक्षतैरक्षतैः श्वेतैः स्त्रीजनैरिव रूप्यजैः ॥ १२६ ॥
नवीने कारिते सद्यः प्रासादे भूरिभूषणे । पार्श्वे च सत्यभामाया वासयामास रुक्मिणीम् ॥ १२७ ॥
समरूपसखीवृन्दं दासीवृन्दमनेकधा । अर्पयामास तां नित्यं भूषणानि नवानि च ॥ १२८ ॥
बलदेवः सुखं तस्थौ भ्रातुः कामितपूरणात् । गृहे गतः स रेवत्या रममाणो यथेच्छया ॥ १२९ ॥
अथ तस्या गृहे सर्वं भोजनं शयनं तथा । करोति नित्यमुदितः केशवो वासवः श्रिया ॥ १३० ॥
सत्यभामागृहं याति लज्जया न कथञ्चन । कार्मणैरिव बद्धः स तस्याश्चाटुशतैः कृतैः ॥ १३१ ॥

१ द्वितीयान्ताम् । २ पूर्नगरं । ३ इन्द्रः ।

वृद्धान् वृद्धान् समुत्थाय मिलित प्रेमपूर्वकम् । ताभ्यां रामहरिभ्यां च गाढालिङ्गनपूर्वकम् ॥ १०६ ॥
लघवश्च समागत्य प्रणामं चक्रुरादरात् । सेवकास्तु समागत्य प्रणामं दूरतः स्थिताः ॥ १०७ ॥
चक्रुरूर्ध्वस्थिताः पङ्क्त्या तस्थुर्विनयशालिनः । कृताञ्जलिपुटाः स्वामिसम्मुखन्यस्तदृष्टयः ॥ १०८ ॥
पृष्टाः सन्तः ततः सर्वां चक्रतुः किंवदन्तिकाम् । अहो ! भाग्यमहो ! भाग्यमहो ! बलमहो ! बलम् ॥ १०९ ॥
इति प्रशंसां चक्रुस्ते तयोर्भाग्यजुषोः पुनः । लग्ने दैवज्ञवर्गेण सुविचार्य समर्पिते ॥ ११० ॥
चकार पाणिग्रहणं रुक्मिण्याः शौरिनन्दनः । रममाणस्तया तस्थौ तत्रैव कतिचिद्दिनान् ॥ १११ ॥
रुक्मिण्यथैकदोवाच कृष्णं प्रमदपूरितम् । स्वामिस्ते सत्यभामाद्याः प्रियाः सन्ति महर्द्धयः ॥ ११२ ॥
आवासास्तादृशास्तासां सख्यस्तासां च तादृशः । दास्यश्च तादृशस्तासां सन्ति भूषणसम्पदः ॥ ११३ ॥
अहं त्वेका त्वयाऽऽनीता युद्धं कृत्वा बलादपि । पिता भ्राता च हत्वा च तयोर्सैन्यमशेषकम् ॥ ११४ ॥
पिता च जननी नास्ति भ्राता नास्ति परं मम । एकप्राणप्रियस्त्वं मे जीवनं जीविताावधि ॥ ११५ ॥
चेत् त्वं प्राणप्रियोऽसीति मन्ये सर्वं ममास्ति हि । यस्य चिन्तामणिर्हस्ते सर्वं तस्याऽस्ति निश्चितम् ॥ ११६ ॥
अतस्तथा त्वं मां नाथ ! विधेहि सर्वतोऽधिकाम् । यथा स्यां हासयोग्या न तासामतुलसम्पदाम् ॥ ११७ ॥
अथोवाच हरिर्हासमञ्जुलं रुक्मिणीं प्रति । प्रिये ! मा भूर्विलक्षा त्वं विधास्ये सर्वतोऽधिकाम् ॥ ११८ ॥

१ हर्षपूरितम् । २ श्रेष्ठम्

त्वरितं त्वरितं यातः क्रमाद्रैवतकाऽचलम् । उद्यानपादपैर्नीलं नानापक्षिसमाश्रयम् ॥ ९३ ॥
प्रापुस्ते प्रमदापूर्णा महाभाग्याः सदाशयाः । उवाच च हरिस्तत्र रुक्मिणीमङ्कशायिनीम् ॥ ९४ ॥
पश्य सुभ्रु ! महाभागे ! नगं श्रीरैवताचलम् । तीर्थं तीर्थकृतां चैत्यैः शोभितं मुक्तिदं तथा ॥ ९५ ॥
नम त्वं विनयादेनं प्रणामचतुराशये ! । दूरादपि नतो ह्येष सर्वपापप्रणाशनः ॥ ९६ ॥
इत्युक्ता हरिणोत्थाय कृताञ्जलिर्ननाम सा । क्रमाच्च निकटं प्राप्तो द्वारिकायाः पुरो रथः ॥ ९७ ॥
पप्रच्छ रुक्मिणी रामं केयं किमभिधा पुरी । दृश्यते दृश्यमानाऽपि नयनानन्ददायिनी ? ॥ ९८ ॥
कामपालस्तदोवाच भ्रातृजाये ! पुरी वरा । भर्तुस्ते पुण्यसंभारप्रेरितेन दिवौकसा ॥ ९९ ॥
धनदेन कृता स्वर्णवप्रा मणिमयैस्तथा । प्रासादैर्भूषिता राज्ञां सर्वज्ञानां च कोटिभिः ॥ १०० ॥
इत्थं वार्तयतां तेषां क्रमादुद्यानमागतम् । सर्वजातीयवृक्षाणां समुदायेन राजितम् ॥ १०१ ॥
वापीकूपतटाकश्रीशोभितं क्रकचच्छदैः । भूषितं परितो हारभूरिमण्डपमण्डितम् ॥ १०२ ॥ (युग्मम्)
रथं संस्थाप्य तत्रैव स्थिताश्चक्रुश्च भोजनम् । द्वारिकातस्तदा ज्ञातवृत्तान्ता यदवो निजाः ॥ १०३ ॥
रथारूढा हयारूढा गजारूढाश्च केचन । पत्तयश्च समाजग्मुरहंपूर्विकया तदा ॥ १०४ ॥
सेवायै सेवकाः केचिद् द्रष्टुं नववधूवराम् । कुशलं प्रष्टुमायाताः केचिन्नीतिविशारदाः ॥ १०५ ॥

१ तीर्थकराणाम् । २ केतकीपत्रैः । ३ ज्येष्ठबन्धुम् ।

तदाऽवदद्गदापाणिः सीरिणं साहसान्वितम् । नागपाशाख्यबाणेन बद्धं कुरु महाबल ! ॥ ८० ॥
मुक्त्वाऽथ नागपाशास्त्रं बद्ध्वा रुक्मिणमुद्धतम् । द्रुतं समर्पयामास रथस्थां रुक्मिणीं प्रति ॥ ८१ ॥
निबद्धं रुक्मिणं मत्वा शिशुपालः पलायितः । धावन्तं पृष्ठतः कृष्णं न्यषेधद्रोहिणीसुतः ॥ ८२ ॥
पलायितं शिशुपालं बद्धं रुक्मिणमेव हि । दृष्ट्वा शेषं बलं सर्वं प्रणष्टं स्वयमप्यथ ॥ ८३ ॥
यदि तौ सिंहसदृशौ भग्नौ गोमायवः कथम् । अन्ये तिष्ठन्ति पुरतः शार्ङ्गिणः सीरिणस्तथा ? ॥ ८४ ॥
मुञ्चन्तौ सिंहनादं तौ हर्षोत्कर्षपुरस्सरम् । जग्मतू रुक्मिणीपार्श्वे विश्वातिगबलान्वितौ ॥ ८५ ॥
उवाच रुक्मिणी रामं भ्रातरं नागपाशतः । मुञ्चैनं दुःखितं दृष्ट्वा दुखिनी यद्भवाम्यहम् ॥ ८६ ॥
अमुञ्चत्सोऽपि रुक्मिण्या हठतो रुक्मिणं प्रति । उवाच रुक्मिन् ! सेवस्व कृष्णं स्वभगिनीपतिम् ॥ ८७ ॥
ग्रामान् देशांश्च लाहि त्वं गजांश्च तुरगानपि । दद्मस्त्वां प्रति सन्तुष्टा वयं सेवापरो यदि ॥ ८८ ॥
लज्जानिमग्नहृदयः प्रत्युत्तरमदान्न हि । कृतप्रणामः स्वं धाम जगाम नमिताननः ॥ ८९ ॥
अथ त्रयोऽपि ते चेलुः कृत्यकृत्यास्त्वराकृतेः । सञ्जातप्रमदाश्चित्ते विकस्वरमुखाम्बुजाः ॥ ९० ॥
प्रेरयामास मुशली रथं दध्मौ तु वारिजम् । उत्सङ्गसङ्गतां भीष्मसुतां कृत्वा गदाधरः ॥ ९१ ॥
चचाल स रथो वेगात् पृष्ठवातेन नोदितः । तेषां त्रयाणामपि हि रजः पीडां चकार न ॥ ९२ ॥

१ शिशुपाल–रुक्मिणौ । २ नृप । ३ शङ्खम् ।

साऽवदद् योजितकरा प्रार्थयेऽहं किलैककम् । पिता भ्राता च हन्तव्यावावाभ्यां न कथञ्चन ॥ ६७ ॥
इति स्वजल्पं दत्त्वा मे कुरुतं युद्धमुल्वणम् । इत्युक्ते तौ तथा कृत्वा चक्रतुः मुदिता च ताम् ॥ ६८ ॥
इति धैर्ययुतां कृत्वाऽग्रजं कौमोदकीकरः । उवाच भ्रातरायाता एते गोमायवो द्रुतम् ॥ ६९ ॥
धावमानाः धावमानाः सिंहस्येव ममाग्रतः । तथैव नश्यतः पश्य कातरान् दिग्विलोककान् ॥ ७० ॥
जानीहि परमेतेषां मध्ये चेदिमहीपतिम् । विकटं तेन तेनाऽहं युद्धं कुर्वे तास्विना ॥ ७१ ॥
अन्यैः भीष्मादिभिः सार्द्धं त्वमेको युद्धमाऽऽवह । विभज्येति च गृह्णीतस्तौ द्वौ सर्वामनीकिनीम् ॥ ७२ ॥
रथस्थोत्फुल्लनयना रथसत्यापनापरा । विलोकते स्म सा युद्धं शस्त्राशस्त्रि विनिर्मितम् ॥ ७३ ॥
क रे ! कृष्णः क रे ! कृष्णः क रे ! गोपालवालकः । अहमेष समायातः शिशुपालस्तवान्तकः ॥ ७४ ॥
कृष्णोऽपि सज्जीभूयाऽऽशु प्रोचे चेदिमहीपतिम् । मामग्रतः स्थितं पश्य गदाकौमोदकीधरम् ॥ ७५ ॥
किं न पश्यसि रे मूर्ख ! जीवन्नासि हि सम्प्रति ? । जाने मरणमासन्नं गताक्षस्त्वं पुरोऽकरोत् ॥ ७६ ॥
मिथो विवदमानौ तौ चक्रतुः सुचिरं युधम् । खड्गाखड्गि शरासारैर्भुजाभुजि कराकरि ॥ ७७ ॥
हतं तु सर्वतः सैन्यमेकेनापि महौजसा । कृष्णाग्रजन्मना तावद् रुक्म्येको युधि संस्थितः ॥ ७८ ॥
चकार वलदेवस्तु रुक्मिणा युद्धमुल्वणम् । न जघान परं जल्पाद् भ्रातृजाया निवन्धनात् ॥ ७९ ॥

१ वचनम् । २ कृष्णः ।

याहि मा याहि मा तिष्ठ पतिरस्याः समागतः । शिशुपालः प्रजापालो गोपालस्त्वं क्व यासि भोः ? ॥ ५३ ॥
इत्यादिवचनोत्फालाः साक्षात्काला इमे त्रयः । लोहसारकवचिनो रुरुधुर्देवकीसुतम् ॥ ५४ ॥
रुक्मिण्यथ भयत्रस्ता वेपमानाङ्गयष्टिका । हा ! हा ! किं भावि किं भावि द्वावेतौ लक्षशस्त्विमे ? ॥ ५५ ॥
मन्निमित्तमिमौ बालौ कां दशामापतुस्त्विमाम् । हतावेव न संदेहो निशिताऽसिकरैर्भटैः ॥ ५६ ॥
इति चिन्तातुरां वीक्ष्य प्रोचे नीलाम्बरो हरिम् । शक्तिं दर्शय हे भ्रातः ! यथा प्रत्येति भीष्मभूः ॥ ५७ ॥
बलं त्वदीयमालोक्य सञ्जातप्रत्यया यथा । भयं मुञ्चति सञ्जातस्वास्थ्या न म्रियते कनी ॥ ५८ ॥
अन्यथा तु भयेनैव कम्पमाना मुहुर्मुहुः । अकस्माज्जातहृत्स्फोटा मरिष्यति न संशयः ॥ ५९ ॥
अस्या पञ्चत्वमाप्तायां सर्वं कार्यं वृथा भवेत् । युद्ध तूपस्थितं जातमावयोररिभिः समम् ॥ ६० ॥
इत्युक्तो बलदेवेन मुदा दामोदरः सुधीः । संपिष्य चूर्णं कृत्वाथ स्वाङ्गुलीयकहीरकम् ॥ ६१ ॥
ददौ तस्याः करे तूर्णमथान्यद् दर्शयामि ते । इत्युक्त्वा धनुरारोप्य बाणेनैकेन वेगतः ॥ ६२ ॥
एकश्रेण्या स्थिताः सप्त ताला विद्धास्तरस्विना । एतच्चित्रकरं दृष्ट्वा साविश्वासाऽजनिष्ट सा ॥ ६३ ॥
तथाऽपि म्लानवदनां दृष्ट्वाऽवोचद् बलाऽनुजः । अथापि देवि ! का चिन्ता वद तस्याः प्रतिक्रियाम् ॥ ६४ ॥
कुर्वे भव त्वं निश्चिन्ता विलोकय मनस्विनि ! । मिलितेषु गजेष्वेषु सिंहस्येव बलं मम ॥ ६५ ॥
स्मेरास्या भव निःशङ्कं यत् त्वदर्थमियत्कृतम् । सर्वं मे सफलं भावि त्वया ह्येतद्विलोकितम् ॥ ६६ ॥

अथो रथं सतुरंगं कृत्वा कृष्णाग्रजोऽब्रवीत् । कुलजानां वधूनां हि भवेत् स्वाभाविकी त्रपा ॥ ३९ ॥
भ्रातस्तेन स्वहस्ताभ्यां रथमारोपय द्रुतम् । मा पतत्विति यत्नेन धारयेथाः सुकोमलाम् ॥ ४० ॥
एवं हलिवचः श्रुत्वाऽग्रहीत् तां पुलकाङ्कितान् । स्वहस्ताभ्यां सुयत्नेन रथमारोपयद् हरिः ॥ ४१ ॥
मुशली सारथीभूय रथं चालयति स्म च । पाञ्चजन्यं निजं शङ्खं पूरयामास केशवः ॥ ४२ ॥
उच्चैः स्वरं जगादाऽथ शृणु भीष्ममहीपते ! । शृणु रुक्मिकुमार ! त्वं शृणु चेदिमहीपते ! ॥ ४३ ॥
रुक्मिणीं वो हराम्येतां कृष्णोऽहं द्वारिकापतिः । वसुदेवतनूजन्माऽनुजन्मा नीलवाससः ॥ ४४ ॥
शक्तिः स्याद् यस्य कस्यापि स आयातु मदग्रतः । कण्डूतिं भुजयोस्तस्याऽपनयामि भिषग्वरः ॥ ४५ ॥
आदौ शङ्खध्वनिं श्रुत्वा वचस्तदनु दारुणम् । स्थानतः स्थानतः स्वस्माद् गृहीतास्त्रास्त्वराजुषः ॥ ४६ ॥
रथिनो रथमारुह्याऽश्ववारा अश्वमुद्धतम् । गजिनो गजमुष्ट्रं चोष्ट्रिणस्तेऽनुगताः क्षणात् ॥ ४७ ॥
क्रमाच्च भीष्मराजोऽपि भीष्मसन्नाहवान् क्षणात् । गृहाद् रुक्मिकुमारोऽपि धनुष्पाणिः स्वतूणभृत् ॥ ४८ ॥
शिशुपालो महीपालः क्रोधादारक्तलोचनः । गृहीतमद्यचषको मद्यं पातुं तथोत्थितः ॥ ४९ ॥
अश्वपालसमानीतमश्वमारुह्य च क्षणात् । तत्कालमिलितसैन्योऽनुसरत् तं प्रति द्रुतम् ॥ ५० ॥
तिष्ठ रे ! तिष्ठ मा याहि भीष्मोऽहं ग्रीष्म एव हि । रिपुकर्दमसंशोषे त्वया योद्धुं समागतः ॥ ५१ ॥
क्व यासि क्व यासि त्वं रुक्म्यहं रुक्मवद्द्युतिः । कल्पान्तकालसदृशो रिपुप्रलयकृद् यतः ॥ ५२ ॥

गमनं वार्यतां तस्याः त्वरितं त्वरितं क्रमाः । कथ्यतां शिशुपालस्त्वां न्यषेधद् गमने बहिः ॥ २५ ॥
तैरागत्य तथोक्ते साऽवदद् भीष्मानुजा स्वयम् । शिशुपालं महीपालं गत्वा विज्ञपयन्तु भोः ॥ २६ ॥
मानिताऽस्ति ध्रुवं पूजाऽनया वीवाहवासरे । शिशुपालनरेन्द्रस्य शुभार्थिन्या मनोभुवः ॥ २७ ॥
पुनरागत्य ते प्रोचुः पितृष्वस्रानिवेदितम् । चेदिभूपतये सर्वे सन्तुष्टाः स्वर्णदानतः ॥ २८ ॥
ततः प्रमुदितः प्रोचे वाञ्छन्ती कुशलं मम । पूजार्थं कामदेवस्य याति चेन्मा निवार्यताम् ॥ २९ ॥
शिशुपालस्य तामाज्ञां तैरागत्य निवेदिताम् । प्रापतुश्चेलतुस्ते द्वे मुदिते चेतसि ध्रुवम् ॥ ३० ॥
वनमध्ये ततो गत्वा प्रोचे तां च पितृष्वसा । एकाकिनी याहि वत्से ! पूजां कुरु मनोभुवः ॥ ३१ ॥
अहं स्थिता तावदत्र तव मार्गविलोकिनी । इत्युक्त्वा सा स्थिता तत्र सर्वपरिकरान्विता ॥ ३२ ॥
रुक्मिणी तु चचालाग्रे हंसीव चलनूपुरा । वनाधिष्ठातृदेवीव ध्यायन्ती देवमच्युतम् ॥ ३३ ॥
गत्वा स्थित्वा कामदेवमूर्तेरग्रे जगौ वचः । मत्पुण्यप्रेरितो यत्रायातः श्रीद्वारिकापतिः ॥ ३४ ॥
सूनुः श्रीवसुदेवस्याऽनुजो नीलाम्बरस्य तु । ददातु दर्शनं सद्यः श्रीमद्भीष्मसुताऽस्म्यहम् ॥ ३५ ॥
इत्युक्ते गुल्ममध्यात् स निर्ययौ सुन्दराकृतिः । अहं कृष्णोऽस्मि सुभ्रु ! पश्य प्रेमार्द्रया दृशा ॥ ३६ ॥
कुशलाभिधदूतात् ते ज्ञातसंकेत आगतः । भ्रातरं मम जानीहि नीलवाससमग्रजम् ॥ ३७ ॥
इति ब्रुवाणं पुरतः स्थायिनं पीतवाससम् । दृष्ट्वा नम्रानना तस्थौ लज्जया तत्क्षणोत्थया ॥ ३८ ॥

१ कृष्णम् ।

चिन्तातुरो नृपो जातः श्रुत्वा नारदभाषितम् । परं कार्योत्सुकाः शूराः न विदन्ति शुभाऽशुभम् ॥ १२ ॥
चतुरङ्गीचमूं कृत्वा सन्नद्धां सर्वतोऽपि हि । चचाल स महीपालः स्वभुजाबलगर्वितः ॥ १३ ॥
दिनैः कतिपयैः प्राप पुरं कुण्डिननामकम् । भूषितं च पताकाभिः हट्टे हट्टे गृहे गृहे ॥ १४ ॥
आवासान् दापयामास श्वसुरो भीष्मभूपतिः । कुमारो रुक्मिनामाऽपि पुरो वेत्रधरः स्थितः ॥ १५ ॥
प्रसस्रुरश्ववाराश्च वृक्षं वृक्षं लतां लताम् । तत्पुरं वेष्टयामास महाहिरिव सन्निधिम् ॥ १६ ॥
शिशुपालमहीपालः सावधानो भवन् स्थितः । नारदोक्तवचःशङ्की सन्नद्धानुगवेष्टितः ॥ १७ ॥
अथ भीष्मसुता प्रोचे स्वसारं जनकस्य ताम् । कथं हा गमनं भावि पुरे सर्वत्र वेष्टिते ? ॥ १८ ॥
शिशुपालाऽश्ववाराणां धीराणां हास्तिनामपि । हयानां नैकजातीनां पत्तीनां निवहैस्तथा ॥ १९ ॥ ( युग्मम् )
अथ प्राहाऽनुजा वप्तुर्मा चिन्तां कुरु पुत्रिके ! । न हि किञ्चिदस्ति कार्यमुपायाद् यन्न सिध्यति ॥ २० ॥
गृहाणोपस्करं सर्वं पूजायाः मधुसारथेः । मम पृष्ठस्थिता गच्छेः कृतमौना शनैः शनैः ॥ २१ ॥
विचार्य समयं प्राप्य चेलतुस्ते उभे अपि । गच्छन्त्यौ तु रुरुधिरे चेदिभूपालपत्तयः ॥ २२ ॥
तेषां मध्यात् कियन्तो हि गत्वा चेदिमहीपतिम् । ऊचिरे धृतचातुर्याः सम्पुटीकृतपाणयः ॥ २३ ॥
स्वामिन् ! इयं रुक्मिणी ते धृतविवाहमण्डना । याति पृष्ठे पितृष्वस्रा महोद्यानं पुराद् बहिः ॥ २४ ॥

१ रुक्मिणी । २ सामग्रीम् । ३ कामदेवस्य ।

## चतुर्थः सर्गः ।

अथैकदा नारदर्षिः जगाम कलहप्रियः । शिशुपालमहीपालसंसदि मणयं दिशेन् ॥ १ ॥
मानितस्तेन बहुशः सम्मुखागमनादिना । निवेशितश्च सत्कृत्याऽऽसने प्रावरणाञ्चिते ॥ २ ॥
कुटुम्बकुशलप्रश्नं कुर्वन्नूचे हसन्निति । शिशुपाल ! मयाऽश्रावि विवाहः कुण्डिने पुरे ॥ ३ ॥
रुक्मिण्या भीष्मपुत्र्या ते भाग्यवानऽसि सम्प्रति । त्वमेव राजराजोऽसि सत्य योग्या तवैव सा ॥ ४ ॥
इन्द्रस्यैव शची योग्या चन्द्रस्येव ही कौमुदी । पद्मिनी तु रवेरिव नलस्येव हि भीर्मभूः ॥ ५ ॥
परं विवाहलग्नस्य पत्रं दर्शय मां प्रति । कीदृशी लग्नशुद्धिर्हि कृताऽस्ति गणकोत्तमैः ॥ ६ ॥
विलोकयाम्यहमपीत्युक्ते चेदिमहीपतेः । पार्श्वस्थो ब्राह्मणोऽथाऽदात्पत्रं कुङ्कुमचर्चितम् ॥ ७ ॥
विलोक्य देवब्रह्मा तल्लग्न तु घटिकादिकम् । शिरोविधूननं कृत्वाऽमुञ्चत्पत्रं भुवस्तले ॥ ८ ॥
चेदिपः शङ्कमानोऽथ पप्रच्छ रचिताञ्जलिः । किं मुने ! त्व शिरोधूर्तिं करोपि कथयेति माम् ? ॥ ९ ॥
लग्नादस्मात् कार्यसिद्धेः संशयः संयुग तथा । भविष्यति न सन्देहः शरीरे कष्टमेव च ॥ १० ॥
मा याहि यदि यासि त्व सामग्रीपूर्वकं व्रज । इत्युक्त्वा नारदोऽगच्छदुत्पतन् चपलाचलः ॥ ११ ॥

१ स्नेहम् । २ दर्शयन् । ३ जोत्स्ना । ४ दमयन्ती । ५ चपला विद्युत् ।

दक्षिणा च ततो ब्रूते कार्यसिद्धिनिवेदिका । नीलपक्ष्ययमायाति वामतो दक्षिणं करम् ॥ १०४ ॥
कार्यसिद्धिर्ध्रुवं ज्ञेया कुशलेन समागमः । द्वारिकायां पुरी ज्ञेयः पुनरेकं निवेद्यते ॥ १०५ ॥
यदयं वक्ति घूकारिर्विरसं सरसि स्थितः । शुष्के तद् वक्ति संग्राममुत्कटं रिपुणा सह ॥ १०६ ॥
ततश्च चेलतुस्तौ द्वौ रथारूढौ तरस्विनौ । परस्परं प्रेमवार्तां वितन्वानौ महाभुजौ ॥ १०७ ॥
दिनैः कतिपयैर्देशान् विदर्भात् प्रापतुः क्रमात् । ततश्च कुण्डिनपुरं तत्र चोद्यानमुत्तमम् ॥ १०८ ॥
रथादुत्तीर्य प्रस्तार्य पटं प्रावरणोत्तमम् । सुखासनसमासीनौ तत्राशोकतरोस्तले ॥ १०९ ॥
तस्थतुः स्वादुस्वादूनि खादं खादं फलानि च । पायं पायं स्वादुजलं क्रीडावापीषु निर्मलम् ॥ ११० ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु–लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार सर्गस्तृतीय इति सम्प्रति पूर्तिमाप ॥ १११ ॥

इति श्रीप्रद्युम्नचरिते महाकाव्ये श्रीकृष्णस्य रुक्मिणीरूपदर्शन–कुण्डी-
नोद्यानसमागमनवर्णनो नाम तृतीयः सर्गः ।



१ काकः । २ वस्त्रम् ।

गृहीतोपस्कराऽर्चायाः सर्वाभरणभूषिता । विवाहवेषा गौराङ्गी तत्राऽऽयास्यति निश्चितम् ॥ ९१ ॥
माघमासि सिताष्टम्यां वर्तते लग्नमुत्तमम् । शिशुपालो विवाहार्थी तत्राऽऽयास्यति सत्वरः ॥ ९२ ॥
त्वया तेन च सङ्ग्रामः चिन्तनीयः पुरः प्रभो ! । पश्चाच्च ग्रहण तस्या गृहीताऽस्त्रस्ततो व्रजेः ॥ ९३ ॥
इति दूतवचः श्रुत्वा कृष्णो मुदितमानसः । अन्योक्तिपदसन्दर्भामलिखत् पत्रिकां यथा ॥ ९४ ॥
हे हंसि ! मा धृतिं कुर्यास्तवाऽहं हंस आगतः । न काकीसंगतो हृष्येद् हंसः कमलपत्रभुक् ॥ ९५ ॥
हे नागवल्लि ! नीरङ्गा जाताऽसि त्वं मया विना । आगतोऽहं द्रुतं रङ्गो रङ्गदः सान्वयस्ततः ॥ ९६ ॥
इति पत्रं लिखित्वाऽथाऽर्पयामास च वार्चिकम्[1] । भोजयित्वा गृहे तूर्णं दत्त्वाऽलङ्करणादिकम् ॥ ९७ ॥
व्यसृजत् प्रमदाऽऽपूर्णो द्रुतं श्रीमान् जनार्दनः । बलदेवमथाहूय मन्त्रयामासिवानिति ॥ ९८ ॥
कथं गम्यं मया भ्रातः ! प्राप्तव्या सा कथं मया । विचारचतुरोऽपि त्वं विचार्य वद मां प्रति ? ॥ ९९ ॥
बलदेवस्ततः प्राह महासाहससंयुतः । अत्रार्थेऽस्ति विचारः कः सर्वं भव्यं भविष्यति ॥ १०० ॥
आवाभ्यां तत्र गन्तव्यं न ज्ञाताभ्यां कथंचन । जानीयात् सत्यभामा चेत् कुर्यात् सा विघ्नमेव हि ॥ १०१ ॥
इति मन्त्रं चतुष्कर्णं विधाय रथमुत्तमम् । सर्वायुधसमायुक्तमारुह्याऽथ प्रचेलतुः ॥ १०२ ॥
बलदेवः ततः प्राह जनार्दन ! शृणु स्वरम् । दुर्गेयं वामतो ब्रूते मार्गे कुशलशंसिनी ॥ १०३ ॥

१ सन्देशम् ।

अन्नं न रोचते तस्याः विरहाऽनलपीडनात् । निद्राऽपि तस्या रुष्टेव सखी कुत्राप्यगात् प्रभो ! ॥ ७८ ॥
चन्द्रज्योत्स्नां तु शीतां सा हसन्तीमिव मन्यते । श्रीखण्डस्य रसः तस्या लगन्नेव च शुष्यति ॥ ७९ ॥
त्वदेकनाममन्त्राच्च सा जीवति न संशयः । इति सर्वं मया राजन् ! विज्ञप्तं तेऽधिकारिणा ॥ ८० ॥
दूतानामधिकारो यत् स्वामिकार्यस्य शंसनम् । अथो यथोचितं कुर्या विलम्बस्तत्र नोचितः ॥ ८१ ॥
अथ विलम्बकरणे सर्वं कार्यं विनङ्क्ष्यति । सिद्धान्ते हि महाभाग ! कः कुर्वीत विलम्बनम् ? ॥ ८२ ॥
अथ प्रोचे हरिर्दूतं वलदेवसमन्वितः । आगच्छामि द्रुतं तत्र परं स्थानं निवेदय ॥ ८३ ॥
आगत्य कुत्र स्थातव्यं कथं तस्याश्च सङ्गमः । लग्नं च कस्मिन् मासेऽस्ति दिवसे चातिनिर्मले ॥ ८४ ॥
दूतः स पुनरप्यूचे जल्पकानां शिरोमणिः । सर्वं स्वामिवचश्चित्ते धारयन्निश्चलं सुधीः ॥ ८५ ॥
अस्ति तत्र किलोद्यानं नानावृक्षविराजितम् । नानापक्षिभिरासेव्यं नाम्ना प्रमदमेव हि ॥ ८६ ॥
मूर्त्तिरस्ति कला केलेः स्थापिता सुन्दराकृतिः । तत्राऽशोकतरुः श्रीमान् शाखाविस्तारवान् समः ॥ ८७ ॥
तस्योपरि च बद्धाऽस्ति वैजयन्ती मनोहरा । संज्ञानं कुर्वतीवोच्चैरागन्तूनां समागमे ॥ ८८ ॥
तत्रागत्य त्वया स्थेयं न विधेयं विलम्बनम् । बलदेवेन सुभ्रात्रा मरुतेव शिखावता ॥ ८९ ॥
प्रतार्य मातापितरावग्रजं रुक्मिणं पुनः । जनकानुजया सार्द्धं कामदेवार्चनच्छलात् ॥ ९० ॥

१ रुक्मिण्याः । २ अङ्गारशकटीमिव ।

कियतश्च दिनान् स्थित्वा कृतानुगमनादरः । विसृष्टस्तेन सत्कृत्य निजं नगरमागतः ॥ ६५ ॥
प्रणनाम पितुः पादौ मातृलोचनचन्द्रमाः । मातरं प्रणनामोच्चैः स्वसारं च तथा पितुः ॥ ६६ ॥
रुक्मिणी मयका दत्ता शिशुपालमहीभुजे । वार्त्तान्तरे सोऽचकथत् पुरः पित्रोः प्रमोदभाक् ॥ ६७ ॥
वरं कृतं त्वया पुत्रेत्यूचतुस्तौ सदाशयौ । प्रबलस्वपुत्रकृतं को न मन्येत धीनिधिः ? ॥ ६८ ॥
अत्रान्तरे च देवर्षिरागाच्चल नृपौकसि । राजसंसदि गत्वा सोऽकरोद् राज्ञः प्रमोदनम् ॥ ६९ ॥
पृष्ट्वा राजानमुत्थायाऽन्तःपुरं समियाय च । श्रीमतीं चानुजां राज्ञः प्रणामेन कृतादराम् ॥ ७० ॥
ताभ्यामाशिषमत्युच्चैर्दत्वा कन्यागृहं ययौ । रुक्मिणी पादपतनं कर्तुमत्युत्सुकाऽभवत् ॥ ७१ ॥
मुनिः पप्रच्छ कस्येयं सुता भीष्ममहीपते ! । अनुजा रुक्मिणसूनोस्तदा भूपानुजाऽवदत् ॥ ७२ ॥
मुनिः प्रमोदमाधाय ददावाशिषमुच्चकैः । लभस्व त्वं महाभागे ! वरं विष्णुं महौजसम् ॥ ७३ ॥
सुराष्ट्राराष्ट्रसंस्थाया द्वारिकायाः पुरः प्रभुम् । श्रीनमितीर्थकृत्तीर्थे भरतार्द्धेशं [illegible] ॥ ७४ ॥
कंसारिं दैत्यमदनं कज्जलच्छविमुच्चकैः । पीताम्बरधरं पाञ्चजन्यव्यग्रकरं पुनः ॥ ७५ ॥
नन्दकासिधरं धीरं शार्ङ्गकोदण्डधारिणम् । कौमोदकीगदापाणिं चतुर्भुजविराजितम् ॥ ७६ ॥ (चतुर्भिः कलापकम् )
इत्युक्त्वा नारदोऽगच्छत् स्वेच्छागमनलालसः । रुक्मिणी तु वियोगात् ते यदचेष्टत तत् शृणु ॥ ७७ ॥

१ विद्वान् । २ दर्पम् । ३ भगिनी । ४ राज्ञः स्वसा । ५ पुत्रा इत्यपि । ६ वासुदेवम् । ७ [illegible]

हे रथाङ्ग ! द्विजस्वामिन् ! मां रथाङ्गीं द्रुतं मिल । त्वां विना स्थातुमीशाऽस्मि नैवाहं विरहातुरा ॥ ५२ ॥
इत्यन्योक्तियुतं लेखं वाचयित्वा मुदं दधौ । दूतं पप्रच्छ चागास्त्वं कुतो लेखः कयाऽर्पितः ? ॥ ५३ ॥
उवाच दूतः शृणु भोः ! कथयामि तवाऽऽदितः । अस्ति श्रीस्वस्तिमान् देशो विदर्भः संश्रितः श्रिया ॥ ५४ ॥
तत्राऽस्ति च महिपालो भीष्मो भीष्मपराक्रमः । रुक्मिनामा च तत्पुत्रो रुक्मिणी दुहिता पुनः ॥ ५५ ॥
युद्धार्थं गच्छतश्चेदिभूपतेरेकदा गतः । दूतः स कथयामास भीष्मं भीष्मपराक्रमम् ॥ ५६ ॥
युद्धाय प्रस्थितो राजा शिशुपालो रिपून् प्रति । साहाय्याय सबलं त्वामाह्वयति च संप्रति ॥ ५७ ॥
ततोऽथ युद्धसज्जं तं भूपं भीष्मं निषिध्य सः । वव्राज रुक्मितनयः सेनया चतुरङ्गया ॥ ५८ ॥
ततश्च चेदिभूपालो रुक्मिसाहाय्यमाप्तवान् । अत्यन्तं प्रबलो जज्ञे वन्हिर्वायोरिवाऽऽगमात् ॥ ५९ ॥
युद्धे रिपून् विनिर्जित्य समागाच्चेदिभूपतिः । स्वां पुरं रुक्मिणं ज्ञात्वा मानयन् प्रबलौजसम् ॥ ६० ॥
तेजास्विनो गता यत्र मान्यास्तत्र भवन्त्यहो ! । मुक्ताफलानि रत्नानि चन्द्रहासानिदर्शनम् ॥ ६१ ॥
मुदितः स ददावुच्चैर्गजानश्वान् रथान् प्रति । स्वर्णरत्नाद्यलङ्कारान् कुमाराय महौजसे ॥ ६२ ॥
यतश्च—ददाति किं न सन्तुष्टो भूपतिर्धुरि दानिनाम् । गृह्णीयात् किं न रुष्टः सन् मानिनां धुरि संस्थितः ? ॥ ६३ ॥
ददौ रुक्मिकुमारोऽपि शिशुपालाय भूभुजे । स्वानुजां रुक्मिणीं तत्र प्रीतचेता महौजसे ॥ ६४ ॥

१ शिशुपालाय ।

परन्तु जाने विधिना त्वदर्थं सा विनिर्मिता । यथा भीमसुता पूर्वं नलायैव प्रकल्पिता ॥ ३९ ॥
चिन्ता सर्वा विधेरेव सृष्टेः खलु प्रवर्तते । यथा तातस्य पुत्रस्य स्वामिनः सेवकस्य वा ॥ ४० ॥
इत्युक्त्वा नारदोऽगच्छत् स्वेच्छ विहरणेच्छया । अथ कामातुरः कृष्णः सुख न प्राप्तवान् क्वचित् ॥ ४१ ॥
भोजन रुरुचे नैव न स्वास्थ्य शयने भवेत् । सभायामुपविष्टोऽपि चक्रे कामस्य चेष्टनम् ॥ ४२ ॥
एव च तिष्ठतः तस्य विरहेण कृशीयसः । यज्जातं कुण्डिने द्रङ्गे कथ्यते तन्मयाऽधुना ॥ ४३ ॥
प्रेषिता शिशुपालेन लग्नकुङ्कुमपत्रिका । लग्नमासन्नमायातं लग्निकैः सुविचारितम् ॥ ४४ ॥
तदा च दुःखिनी जाता रुक्मिणी कृष्णमानसा । न मोदते करीरेण मधुपीव कुलप्रिया ॥ ४५ ॥
तदा पितृष्वसा प्राह वत्से ! मा ताम्य निष्फलम् । भविष्यत्येव यद्भाव्य नान्यथा भवितव्यता ॥ ४६ ॥
करिष्यते मया सर्वं तथाऽपि प्रेमपूर्णया । कार्यं विचारसंसृष्टं हि न भावि शिथिल क्वचित् ॥ ४७ ॥
मिलित्वा च चिरं ताभ्यां विचार्य चतुराशयम् । दूतः कुशलनामा च प्राज्ञः स्वामिप्रयोजने ॥ ४८ ॥
प्रेषितोऽगाल्लेखहस्तो द्वारिकायां कृतत्वरः । एकान्ते विजनं कृत्वा लेख हृल्लेखकारिणम् ॥ ४९ ॥
अर्पयामास हस्ते स द्वारकापूःप्रशासितुः । वाचयामास चोन्मुद्र्य मुद्रितं स शलाकया ॥ ५० ॥
मधुपी मालती पुष्पमीहते न करीरकम् । सिंह सिंहकिशोरीव न मृग तृणचारिणम् ॥ ५१ ॥

१ कृशस्य । २ नगरे । ३ भ्रमरीवत् । ४ द्वाभ्यां ।

जङ्घे अस्याः स्निग्धकान्ती भातः स्म क्रमपीवरे । यूनामस्मादृशामेव प्रणामार्हौं पदौ तथा ॥ २५ ॥
बाहू मृणाललतिके करौ पद्मौ तयोः पुनः । हा ! हा ! धिगस्मान् न प्राप्ता यैरस्या भोगसम्पदः ॥ २६ ॥
पृच्छामि चैनमेवापि ज्ञातपूर्व्ययमेव हि । सर्वत्रगमनशक्तिर्नानारूपविलोककः ॥ २७ ॥
उक्तं च—"देशाटनं पण्डितमित्रता च पण्याङ्गना राजसभाप्रवेशः । अनेकशास्त्रार्थविचारणं च चातुर्यमूलानि भवन्ति पञ्च" ॥२८॥
अपृच्छत् स्मितमाधाय कथ्यतां कथ्यतां द्रुतम् । ऊढाया वा ह्यनूढाया भूस्थायाः स्वःसदः किमु ? ॥ २९ ॥
दृष्टाया वा ह्यदृष्टाया रूपं किं चित्रितं त्वया । अन्येन शिल्पिना किं वा कलाकौशलशालिना ? ॥ ३० ॥
उवाच नारदस्तुष्टः शृणु दुश्च्यवनानुज ! । देशो विदर्भनामाऽस्ति कुण्डिनाख्यं पुरं तथा ॥ ३१ ॥
राजा तत्रास्ति शत्रुघ्नो भीष्मो भीष्मपराक्रमः । श्रीमती वनिता तस्य तयो रुक्मिसुतः पुनः ॥ ३२ ॥
सुता च रुक्मिणी नाम्ना नास्त्यूढा चेदिभूभुजे । किं तु दत्तास्ति तद्भ्रात्रा न पितृभ्यां मुदा किल ॥ ३३ ॥
मया दृष्टाऽस्ति वार्ताऽपि कृता नूनं मया सह । तव रूपादिविस्तारः कृतोऽस्ति घटिकाद्विकम् ॥ ३४ ॥
तस्या हृदयगेहे त्वं निहितोऽसि तथा मया । यथा देव ! मरालेन भीमपुत्र्या नलो हृदि ॥ ३५ ॥
इन्द्रेणापि न शक्येत वहिःकर्ष्टुं वलादपि । एवं कृत्वा निवृत्तेन मया रूपं हि चित्रितम् ॥ ३६ ॥
त्वन्मित्रमिलने किंचित्प्राभृतं हि विलोक्यते । मादृशाऽकिञ्चनस्येदमीदृगेव हि तद् भवेत् ॥ ३७ ॥
अथ त्वयि विलोक्येत वलं तद्ग्रहणे महत् । निःस्थामा हि पुमान् क्लीवस्तत् स्त्रीरत्नं लभेत किम् ? ॥ ३८ ॥

निरीक्ष्य तत् पटे रूपं मदनव्याकुलो हरिः । क्षणाद् बभूव भायो हि युवानो युवतिप्रियाः ॥ १२ ॥
तादृग्रूपेण दृष्टेन मदनो नोद्भवेद् हृदि । क्लिब एव स वाच्यः स्यात् केवलज्ञानवांस्तथा ॥ १३ ॥
हरिर्दध्यौ कृतयुगे[1] भूतायाः कस्यचित् स्त्रियाः । भाति रूपं पुण्यवतः पुण्यवत्या महीतले ॥ १४ ॥
जगद्युवमनोह्लादकरं सर्वाङ्गसुन्दरम् । त्रेताया नेदृशं रूपं द्वापरे च कलौ युगे ॥ १५ ॥
तादृक्छत्राकृति शिरो वेणी नागीव सुन्दरा । कर्णौ च स्मरदोले किं भालः शश्यर्द्धमेव हि ? ॥ १६ ॥
ओष्ठौ बन्धूकपुष्पं किं हसा दन्ताः किमूत च । राजदन्ता मुखसरः सेवन्ते श्रोत्रियाः किमु ? ॥ १७ ॥
जिह्वा रक्तोत्पलदलं नासा दीपशिखेव किम् । शयनास्पदमेवोच्च गल्लौ कामस्य हस्तिनः ॥ १८ ॥
कण्ठस्त्रिरेखः कम्बुः किं हृदयं सदयं किमु । धर्मराजराजधानी विशाला शीलशालिनी ॥ १९ ॥
स्तनौ मदनबाणस्य कन्दुकाविव रेजतुः । रोमराजी विराजितस्मरबालस्य किं शिखा ? ॥ २० ॥
निम्ना नाभिः सदावर्ता लावण्यजलदीर्घिका । कटिर्गृहीता सिंहस्य हाहा ! ! स किं करिष्यति ॥ २१ ॥
मन्मथस्य रथस्यैतन्नितम्बश्चक्रमेककम् स्मरसद्माङ्गणस्येव जघनं किमु वेदिका ॥ २२ ॥
येनाङ्गेन वधूर्वाच्या तदङ्गं शोभतेतराम् । नवीनं चलपत्रस्य[2] पत्रं किमु जलदरुचि ? ॥ २३ ॥
रम्भास्तम्भाविवोरू किं बद्धौ मङ्गलहेतवे । विवाहने स्मररत्योर्वेधसा सुस्थितौ चिरम् ? ॥ २४ ॥

१ सत्ययुगे । २ चलपत्र पिप्पल ।

## तृतीयः सर्गः ।

अथ देवर्षिरेकान्ते गत्वा शुक्लतराम्बरे । रुक्मिण्याः चित्रयामास रूपं शिल्पिशिरोमणिः ॥ १ ॥
हंसपादादयो वर्णाः शिल्पी देवर्षिरुत्तमः । तादृक्रूपं च रुक्मिण्या वर्ण्यते किमतः परम् ॥ २ ॥
त्रिशो निस्तुषतां नीता समिता शर्कराश्रिता । हैयङ्गवीनमृदिता तस्याः को वर्ण्यते रसः ? ॥ ३ ॥
संकोच्य तं पटं रम्यं गतवान् द्वारिकापुरम् । जनार्दनमपश्यच्च सदने विजने मुनिः ॥ ४ ॥
हरि[1]रुत्तस्थिवान् दृष्ट्वा कृतसंमुखयानकः । ननाम स महाभक्त्या विनयानतकन्धरः ॥ ५ ॥
पवित्रेयं पुरी जाता पवित्रं सदनं मम । लवित्रमथ दर्भाणां जातं यत् पूज्यदर्शनम् ॥ ६ ॥
इत्यादिवचनैः स्तुत्वा निवेश्य महदासने । स्वयं निषण्णः पुरतो न विषण्णो मनागपि ॥ ७ ॥
सुखप्रश्नादिकं कृत्वा प्रेमोल्लासपुरस्सरम् । गोष्ठ्याममृतवर्षिण्यां पप्रच्छाऽजो महामुनिम् ॥ ८ ॥
सर्वत्रास्खलिता यान्ति द्वीपाब्धिषु वनादिषु । पर्वतेषु च देशेषु रत्नयोनौ सुपत्तने ॥ ९ ॥
मद्योग्यं वक्तु किं दृष्टं पूज्यपादैः सुहृद्वरैः । यद् दृष्ट्वा मुदितोऽहं स्यां किमानीतं शिशूचितम् ? ॥ १० ॥
इत्युक्ते मौनवानेव प्रसार्य स पटं ददौ । उत्तमा न हि वाचालाः कार्येणैव वदन्त्यहो ! ॥ ११ ॥

1 कृष्णः ।

ददौ रुक्मिकुमारोऽपि सहजां त्वां तदा मुदा । भवेत् प्रेमसमुल्लासो मिथो दानेन मित्रयोः ॥ ११७ ॥
कियन्तो वासरांस्तत्र संस्थाप्य पुनरुन्मुखम् । पितृभ्यां मिलनायोच्चैः प्रेषयामास चेदिपः ॥ ११८ ॥
उत्पताकं विधायोच्चैर्नगरं धृतसम्मदम् । प्रवेशयामास पिता पुत्रं कृतमहोत्सवः ॥ ११९ ॥
अन्योन्य प्रेमवार्ताभिः कर्त्रीभिर्मोहसम्पदाम् । दिवसं तौ चक्रतुः तं क्षणाद्गामिनमुच्चकैः ॥ १२० ॥
पित्रोरर्पितवानेष दत्तां त्वां चेदिभूभुजे । अनिषिद्धमननुमतं श्रुत्वा ताभ्यां कृतं च तत् ॥ १२१ ॥
इति त्वां पुत्रि ! नो दत्ता पितृभ्यां किं तु रुक्मिणा । भ्रात्रा दत्ताऽसि तेन त्वं मा विषीद मुदं कुरु ॥ १२२ ॥
येन केनाप्युपायेन पाणिग्रहणमुच्चकैः । कारयिष्ये वसुदेवजन्मनः पावनात्मनः ॥ १२३ ॥
देवर्षेरिति वाक्येनाऽतिमुक्तकमुनेस्तथा । मोदमाना पितृष्वस्रा सुखभाक् प्रबभूव सा ॥ १२४ ॥
चक्रवाकीव सा नित्यं ध्यायन्ती हृदये हरिम् । तदागतजनानुच्चैः पृच्छन्ती च हरेर्गुणान् ॥ १२५ ॥
दिने दिने वर्द्धमाना वयसा च गुणेन च । कान्त्या रूपेण वैदग्ध्या नवीनेव बभूव सा ॥ १२६ ॥ युग्मम् ।
श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीअच्युताङ्गजचरित्रमिदं चकार सर्गः स्वभावशुभगोऽत्र गतो द्वितीयः ॥ १२७ ॥

इति श्रीप्रद्युम्नचरिते महाकाव्ये रुक्मिणीगृहे नारदागमन–श्रीकृष्णवरप्राप्तिनिवेदननामको द्वितीयः सर्गः।

१ भगिनीम् । २ उत्कण्ठम् । ३ रुक्मी । ४ तृतीयैकवचनम् ।

मयि सत्यपि सन्नाहशालिनि प्राणधारिणि । व्रजिष्यति हि चेत् तातस्तदाऽस्तु जीवनेऽप्यलम् ॥ १०४ ॥
मयि सत्यपि सन्नाहे तातो युद्धाय यास्यति । करिष्यति युवा पुत्रः काशकर्तनमेव तत् ॥ १०५ ॥
पुत्रस्नेहाद्धि तातेनाऽशक्तो वा तर्कितोऽस्म्यहम् । इक्ष्वाकूणां जन्मसिद्धं परं वाजेषु पौरुषम् ॥ १०६ ॥
निवर्तध्वं निवर्तध्वं ताताः सङ्ग्रामकर्मठाः ! । बहुशो बाणमोक्षेण किणपद्धतिमद्भुजाः ॥ १०७ ॥
राज्यं कुरुत निःशङ्कं पालयन्तः प्रजानिडाः । लालयन्तश्च स्वशिशून् बालक्रीडनकार्पणात् ॥ १०८ ॥
पश्यन्तश्च गवाक्षस्था नाट्यं नाट्यविदां तथा । विदूषकाणां वाक्यानि शृण्वन्तु हसितप्रियाः ॥ १०९ ॥
इति पुत्रवचः श्रुत्वा जनको मुमुदेतराम् । न भवेत् पुत्रवाग् मिष्टा सुखदा कस्य वा पितुः ? ॥ ११० ॥
एकं च पुत्रवचनमन्यत् च श्रवणप्रियम् । एकं च जात्यकनकमन्यत् चोत्थितसौरभम् ॥ १११ ॥
पुत्रवाक्यं हितं मत्वा प्रेषयामास तं नृपः । सेनया सज्जया साकं शकुनैः प्रेरितं पथि ॥ ११२ ॥
त्वरितं त्वरितं गच्छन्ननुकूलसमीरणः । प्रेर्यमाणश्च चाषादिपाक्षिभिर्दक्षिणैः शुभैः ॥ ११३ ॥
मिलति स्म महीपालं शिशुपालं युधाऽऽकुलम् । यथा त्रिपथगा[1]लोलकल्लोलः सरितां पतिम् ॥ ११४ ॥
युद्धे च तस्य साहाय्याज्जितकाशी महीपतिः । समागतो निजं पुरं जयभम्भारवोल्लसत् ॥ ११५ ॥
जात्यहस्तिकदानेनाऽश्वीयदानेन तोषितः । रथकट्या[2]प्रदानेन तथाऽलङ्कारसम्पदा ॥ ११६ ॥

१ गङ्गायाः । २ रथकट्या रथसमूहः ।

परं प्रस्थातुकामोऽस्ति रिपून् जेतु पराक्रमी । अपेक्षते सहाय त्वां दुःसह सपराक्रमम् ॥ ९१ ॥
ततोऽहं प्रेषितस्तेन तवान्तिकमुपागमम् । अथ ते यादृशी वाञ्छा सा निवेद्या मम प्रभो ! ॥ ९२ ॥
सत्कृत्य दूतं प्रैषिष्ट विशिष्टविनयोचितम् । लेखं समर्प्य हृल्लेखविधायिनमुदारहृत् ॥ ९३ ॥
कथयेस्त्वं च रे दूत ! मम वाचिकमप्यदः । आगतं विद्धि मां राजन् ! सेनया सह सज्जया ॥ ९४ ॥
क्रियन्तेऽथ हयाः सज्जाः हेषारवविराजिनः । हस्तिनोऽहर्निशं हस्तचापल दधतोऽफलम् ॥ ९५ ॥
सूत्रधारान् समाहूय रथाः सर्वाङ्गशालिनः । शाणोल्लीढानि शस्त्राणि क्रियन्ते शस्त्रमार्जकैः ॥ ९६ ॥
अश्ववारपदातीनां दीयते मासलभ्यकम् । शिरस्त्राण भुजात्राण हृत्त्राण सज्यते पुनः ॥ ९७ ॥
राजाऽथ पुत्रमाहूय प्रोचिवान् प्रणयोन्नतः । राज्यं कुलक्रमायातं पालय त्व निरङ्कुशम् ॥ ९८ ॥
न प्रमादी भवे राज्ये शत्रवो नः सुदुःसहाः । ग्रहीष्यन्ति समागत्य मार्जारा इव सौमेजम् ॥ ९९ ॥
सावधानीभवंस्तिष्ठेस्तेन त्वं वत्स ! नालसः । वयं तु यामः त्वरितं चेदिभूपतिसन्निधौ ॥ १०० ॥
युद्धाय स चलन्नस्ति रिपूनुद्दिश्य विक्रमी । गतं विलोक्यतेऽवश्यं मित्रकार्याय तन्मया ॥ १०१ ॥
इति प्रोच्य स्थिते ताते मूर्त्तिमान् साहसः किमु । मूर्त्तिमान् सिंह इव वा यशोराशिरिव स्फुटम् ॥ १०२ ॥
मूर्त्तिमान् विनयः किं वा नयो वा देहभृत् किमु । किं वा पराक्रमः कोऽपि प्रोचे रुक्मिप्रसूतो युवा ॥ १०३ ॥

१ सारथीन् । २ 'सराणिया' इति प्रसिद्धे । ३ त्वम् । ४ अस्माकम् । ५ दुग्धम् । ६ चेदीप ।

कंसं समूलमुन्मूल्य सुराष्ट्रायां समागतः । परीतो यादवानीकैरनेकैः प्रीतिमानसैः ॥ ७८ ॥
देवतादत्तनगरो नागरीनयनोत्सवः । गुणानां सागरः सारः सारवान् रूपमन्मथः ॥ ७९ ॥
अस्याः कनकवर्णाया विद्युतोऽब्जनसंज्ज्वलः । भोक्ता भावी सोऽब्द[1] इव केतक्या मधुपो यथा ॥ ८० ॥
इत्युक्त्वा स च वव्राज प्रतिबन्धपराङ्मुखः । नैकस्थाना हि मुनयो वायुवत् पक्षिवत् पुनः ॥ ८१ ॥
तदाऽहं भूपतेः पार्श्वे स्थिता संदत्तकर्णका । सत्यमेतन्मुनेर्वाक्यं नो चलेदचलो यथा ॥ ८२ ॥
पुनः पितृष्वसारं सा प्रोचे भूपतिकन्यका । भविष्यति कथमेतद् दत्ता यच्चेदिभूभुजे ॥ ८३ ॥
शिशुपालाभिधानाय जानासि त्वं पितृष्वसः ! । तदा च तामभाषिष्ट शिष्टा वागमृतस्रवा ॥ ८४ ॥
पितृभ्यां हि त्वं नो दत्ता शिशुपालाय भूभुजे । किं तु तत्र गतो भ्राता दत्तवांस्तुभ्यमुन्मनाः ॥ ८५ ॥
तत आगत्य च प्रोचे ताभ्यामप्युररीकृतम् । इत्युक्ते च कनी प्राह भ्राता तत्र गतः कुतः ? ॥ ८६ ॥
तत्रापि शृणु पुत्रि ! त्वं गमने कारणं महत् । पित्रा ते शिशुपालस्य सुहृद्भावः प्रवर्तते ॥ ८७ ॥
एकदाऽस्ति सभासीनो हर्षवान् भीष्मभूपतिः । आगाद् दूतो द्वारदेशे वेत्रिणा ज्ञापितश्च सः ॥ ८८ ॥
राजाज्ञया समानीतो विनीतो वाग्मिनां वरः । प्रणनाम महीपालं भूतलन्यस्तमस्तकः ॥ ८९ ॥
राजा पप्रच्छ कुशली वर्तते चेदिपः सुहृत् । उवाच दूतः सर्वत्र मित्रं ते भद्रवान् विभो ! ॥ ९० ॥

१ अब्दो मेघः ।

साक्षात् रूपश्रिया कामः चतुर्दिक्श्रीसमाश्रितः । श्रीनेमिनीलवसनभ्रातृवर्गसमन्वितः ॥ ६५ ॥
वर्णनं शक्यते कर्तुं नैकया जिह्वया मया । यदि स्यां कोटिजिह्वोऽहं कर्तुं शक्नोमि वर्णनम् ॥ ६६ ॥
इत्थं वर्णनमाधाय निधाय हृदयेऽच्युतम् । निधानमिव रुक्मिण्याः क्षितेरिव धनी मुनिः ॥ ६७ ॥
ययौ गगनमुत्पत्य सञ्जातस्वार्थसिद्धिकः । अथ भूपसुता प्रोचे स्वसारं जनकस्य सा ॥ ६८ ॥
उवाच सत्यं स मुनिरुताऽसत्यं पितृष्वसः! । भक्तमानससंतुष्ट्यै गुरुः प्रायः प्रियंवदः ॥ ६९ ॥
यतः—" सामुद्रिकशास्त्रविदो गुरवो ब्राह्मणाः पिकाः । प्रियमेव हि भाषन्ते वीणा वेश्या च वेणवः ॥ ७० ॥
तदा प्रोवाच भगिनी भीष्मस्य क्षितिपस्य सा । न भवेयुर्मृषावाचो मुनयो नारदादयः ॥ ७१ ॥
मयाऽपि श्रुतमेवेदमपरस्य मुनेर्मुखात् । शृणु वत्से! कथ्यमानं वृत्तं श्रुतिसुधारसम् ॥ ७२ ॥
एकदा सदनेऽस्माकं निमित्तज्ञानपण्डितः । कंसस्य च लघुभ्राता नासत्यवचनः क्वचित् ॥ ७३ ॥
अतिमुक्तकनामर्षिरागाद्गोचरचर्यया । वर्याऽन्नपानदानेन तोषितो जनकेन ते ॥ ७४ ॥
उपवेश्य शुभे स्थाने पृष्टश्चेति महामुनिः । ममास्ति कन्यका नाम्ना रुक्मिणी रुक्मकान्तिभाक् ॥ ७५ ॥
अनुरूपो वरः कोऽस्या भावी भुवनविश्रुतः ? । तदा तुष्टो मुनिरवक् शृणु भो भीष्मभूपते! ॥ ७६ ॥
श्रीकृष्णो द्वारिकानाथः पाथःपतिगभीरहृत् । यदुवंशस्य माणिक्यं वसुदेवनृपाङ्गजः ॥ ७७ ॥

१ कृष्णम् । २ रुक्म सुवर्णम् ।

अपृच्छत् संज्ञया दृष्टेः किमित्येष महामुनिः । वक्ति मोत्फुल्लनयनो नासत्यवचनो ह्ययम् ॥ ५१ ॥
अथोवाच मुनिमुख्यं स्वसा वप्तुरुदारधीः । स्वामिन् ! क एष कृष्णोऽसौ किंवंशः कस्य चोद्वहः ? ॥ ५२ ॥
पवित्रयति कं देशं स्थित्या कां च पुरीं तथा । किंरूपः किंस्वरूपश्रीः कथ्यतां कथकोत्तम ! ? ॥ ५३ ॥
मुनिः प्रोवाच वागब्धिः कार्यसिद्धेः हसन् स्वयम् । देशः सुराष्ट्रनामाऽस्ति नानातीर्थसमान्वितः ॥ ५४ ॥
समुद्रः पूरयन्नस्ति कामितं धनिनां सताम् । पुत्राणामिव जनकः सारवस्तुसमर्पणात् ॥ ५५ ॥
पुगीफलानि पक्वानि नालिकेर्यः पदे पदे । सन्ति यत्र च कदली वातलोलच्छदावलीः ॥ ५६ ॥
आम्रवृक्षाः सदोदारफलाः प्रणतशाखकाः । वब्बूलाना वृतिं नैव दधन्ते पथि संस्थिताः ॥ ५७ ॥
दानमार्गरता नित्यं खलानामिव सज्जनाः । इक्षुवाटाश्च शतशो दधाना मधुरं रसम् ॥ ५८ ॥
तटिन्यो यत्र तोयानि पाययन्ति मुहुर्मुहुः । पथिकानां श्रमवारि पिबन्त्युदधिवायवः ॥ ५९ ॥
नागवल्ल्यः शिक्षयन्ति खलानां सङ्गवर्जनम् । यतोऽस्माकं खलसंगान्निष्फलत्वमजायत ॥ ६० ॥
आतिथ्यं शिक्षयन्ति स्म वृक्षा नद्यः पथि स्थिताः । फलानां च जलानां च मार्गितानां प्रदानतः ॥६१॥ (अष्टभिः कुलकम्)
तत्र देशेऽस्ति नगरी धनदेन विनिर्मिता । पूर्वदिक्तः समायातकृष्णातिथ्याय भक्तितः ॥ ६२ ॥
संभृता रत्नकोटीभिः स्वर्णवप्राऽब्धिखातिका । द्वारिकाख्यपुरी रम्या संकीर्णा वस्तुसञ्चयैः ॥ ६३ ॥
तं देशं तां च नगरीं पावयन्नस्ति सोद्वहम् । यदुवंशसमुद्रेन्दुः वसुदेवनृपात्मभूः ॥ ६४ ॥

इत्युक्ते नारदः तुष्टः चिन्तयामास चेतसि । यस्या भ्राता रूपसपज्जगज्जीवमदापहः ॥ ३८ ॥
भगिन्यपि तथैवेयं भविष्यति न संशयः । यथा भवति कल्पद्रुः कल्पवल्ली तथैव हि ॥ ३९ ॥
पर भवेद् यद्यनूढा वर स्यात्तन्ममेप्सितम् । तत्प्रश्नेऽपि नृपोऽवोचत् शिशुपालाय भूभुजे ॥ ४० ॥
दत्ताऽस्ति परमद्यत्तविवाहा वर्त्ततेऽधुना । तदा प्रादुर्भवरोमकण्टकोऽभूत् कलिप्रियः ॥ ४१ ॥
इति प्रेमप्रियालाप विधाय प्रोचिवान् मुनिः । विलोकितोऽसि राजन् ! त्वं गुणराशिरिवोच्चकैः ॥ ४२ ॥
अथाऽहं द्रष्टुकामोऽस्मि श्रीमतीं साधुधीमतीम् । भगिनीं बालविधवां सुतां ते रुक्मिणीं तथा ॥ ४३ ॥
साधु साधु मुने ! प्रोक्त पवित्रीक्रियतां गृहम् । लभन्तामाशिषं सर्वाः त्वत्पादप्रणतेरनु ॥ ४४ ॥
इति प्रोक्ते धरेशिना[1] मुनिरुत्तस्थिवान् तदा । चचाल च गृहं गन्तु गृहीतोपेस्करः[2] करे ॥ ४५ ॥
देवर्षिं तं समायान्तं दृष्ट्वा प्रमुदितास्ततः । उत्तस्थुरादरात् सर्वाः प्रिया अन्तपुरःस्थिताः ॥ ४६ ॥
प्रत्येकं मुनिमागत्य नेमुः विनयवामनाः । लेभिरे चाशिष सर्वा यथार्हं तन्महात्मना ॥ ४७ ॥
रुक्मण्यपि समागत्य ववन्दे ऋषिमुत्तमम् । भवाऽग्रमहिषी मुख्या वासवस्यानुजन्मनः ॥ ४८ ॥
यदुवंशकुलोत्तंसश्रीमत्कृष्णमहीभुजः । द्वारिकाख्यस्वर्गपुरीभोक्तृप्राचीनबर्हिषः[3] ॥ ४९ ॥ सुगमम् ॥
इत्युक्ते मुनिना प्रेम्णा साऽऽशीर्वचसि लज्जिता । नीरङ्गीछन्नवदना स्वसारं भीष्मभूपतेः ॥ ५० ॥

१ धरेशिना राज्ञा । २ उपस्कर आसनादिसर्ववस्तु । ३ इन्द्रस्य ।

मेघानामिव पूज्यानां समतैव विलोक्यते । विस्मारयन्ति तेऽस्माकं सस्यानामिव का गतिः ॥ २५ ॥
त्वरितं त्वरितं तेन कार्यं पादावधारणम् । चन्द्राणामिव पूज्यानां दर्शनं काम्यते मया ॥ २६ ॥
इत्यादिप्रेमवार्त्तायां प्रसृतायां परस्परम् । तावदेको दिव्यरूपश्चलत्काञ्चनकुण्डलः ॥ २७ ॥
उत्फुल्लगल्ल–नयनोऽष्टमीचन्द्रसमालिकः । पक्वबिम्बाधरो धीरः पुष्पदन्तः प्रमोदभाक् ॥ २८ ॥
हारार्द्धहारविस्तारं दधानः कण्ठकन्दले । मुखे सुरभिताम्बूलं चर्वन् स्थगीभृदर्पितम् ॥ २९ ॥
स्वर्णतन्तुसमव्यूत–शिरोवेष्टनधारकः । चीनदेशसमुद्भूत–वासोरत्नाङ्किकाधरः ॥ ३० ॥
अग्रेबहुप्रतीहारप्रोत्सारितपुरीजनः । समानवयसां वृन्दैः हसन्नद्भूतवार्त्तया ॥ ३१ ॥
कलाकेलिः द्वितीयोऽसौ किं नासत्यस्तृतीयकः । विभावसुस्तुरीयः किं पञ्चमः किमु लोकपः ॥ ३२ ॥
रूपेण युवतीधैर्यलोपिनेति स्तुतो जनैः । समागत्य युवा सद्यः प्रणनाम नृपं प्रति ॥ ३३ ॥
नृपादिष्टे शुभे स्थाने समागत्य निषण्णवान् । गृह्णन् प्रणामं सर्वेषां मन्त्रिमुख्यसभासदाम् ॥ ३४ ॥
पप्रच्छ नारदो भूपं रूपातिशयविस्मितः । कोऽयं सुकृतवान् राजन् ! विश्वातिगगुणान्वितः ? ॥ ३५ ॥
राजा प्रोवाच देवर्षे ! सुतो मे रुक्मिनामकः । लब्धपूज्यप्रसादेन श्रीमतीकुक्षिसंभवः ॥ ३६ ॥
ऋषिराह महाराज ! सुताऽपि किमु वर्त्तते ? । राजाह रुक्मिणीनाम्नी श्रीमतीशुक्तिमौक्तिकम् ॥ ३७ ॥

१ अलिकं ललाटम् । २ स्थगीधरार्पितम्, इत्यपि पाठः । ३ नासत्योऽश्विनीकुमारः ।

सोऽपि नारदमायान्तं भस्मोद्धूलितविग्रहम्[1] । शिरोबद्धजटाजूटं पिङ्गनेत्रं तूर्णीधरम्[2] ॥ १२ ॥
उत्तस्थौ सहसा सिंहासनादादरवान् भृशम् । चचाल संमुखं मुक्तपादुकश्चलत्कुण्डलः ॥ १३ ॥
ननाम परया भक्त्या भृतः परमया मुदा । तमग्रेकृत्य विनयी सभायां समुपेयिवान् ॥ १४ ॥
पाद्यमर्घं समर्प्याऽथ निवेश्य महदासने । अद्य मे पावितो देशो नगरी च कृतार्थिता ॥ १५ ॥
पवित्रेयं सभा यत्र पूज्यपादावधारणम् । अत्र मे सफलं जन्माऽत्र मे च सफलो दिनः ॥ १६ ॥
घटी चेयं शुभा यत्र पूज्यपादस्य दर्शनम् । स्पर्शनं पूज्यपादानां पादपद्मस्य जायते ॥ १७ ॥
इत्यादिवचनस्तोमैः स्तुवन्नवसरोचितैः । दत्तादेशोऽथ मुनिना कृताञ्जलिपुटो नृपः ॥ १८ ॥
उपाविशत् साधुमुखदत्तदृष्टिः प्रमोदभाक् । प्रणयादथ देवर्षिः ववर्ष वचनामृतैः ॥ १९ ॥
कच्चित्ते कुशलं देशे राजधान्यां गजेषु च । हयेषु स्वजनेषूच्चैः कच्चिच्च कुशली स्वयम् ॥ २० ॥
इति प्रोक्तैर्भोऽत्रभूपः प्रणयी प्रोचिवान् स्वयम् । यस्योपरि शुभा दृष्टिः लगत्येव मुरोस्तव ॥ २१ ॥
काऽशुभं तत्र भोः स्वामिन् ! विश्वत्रितयपूजित ! । त्वन्मन्त्रजापतो नष्टाः समग्रा आपदो मम ॥ २२ ॥
अद्यैव पूज्यचरणैः सह संपद आगताः । क्व सार्धं ईदृशो भूयो विमृश्येवाद्य मद्गृहे ॥ २३ ॥
परन्तु बहुभिर्वर्षैः पूज्या अत्र समागताः । तत् किं विस्मारितो भक्तो गुरुदर्शनलालसः ॥ २४ ॥

१ विग्रहं शरीरम् २ आसनधरम् ३ नारदम् ।

## द्वितीयः सर्गः ।

अथोत्पन्नमतिर्देवऋषिः सन्तुष्टमानसः । हुं ज्ञातमेना तादृक्षसपत्नीसंकटेऽन्यथा ॥ १ ॥
मयि कृष्णोऽपि हृष्टः स्यात् तादृक्कन्यानिवेदनात् । इयं च रूपलावण्यभृत्सपत्नीसमागमात् ॥ २ ॥
दुःखिनी स्यात् चिरं चित्ते मय्यवज्ञाफलं पुनः । प्राप्नुयात् पीनवक्षोजा मानिनी विष्णुमानतः ॥ ३ ॥
चिन्तयन्निति चित्तेऽसौ भ्रमति स्मोपवर्त्तने । लाट–भोट–महाभोट–कश्मीरमगधादिके ॥ ४ ॥
अथान्यदा वायुरिवाऽप्रतिबद्धविहारवान् । मन्यूमान् सत्यभामायां तोषवान् श्रीबलानुजे ॥ ५ ॥
ययौ विदर्भदेशेषु श्रीकुण्डनपुरे वरे । राजधान्यां गुणाधारे विश्वत्रितयभूषणे ॥ ६ ॥
तत्राऽस्ति शत्रुदमनो मदनोपमरूपभृत् । प्रतापेन च मार्तण्डः सोमत्वेन शशीव यः ॥ ७ ॥
अर्थिनामर्थनापूर्तिपारिजात इव ध्रुवम् । अपारिजातः सततं पूर्यमाणः श्रियां भरैः ॥ ८ ॥
मुखे वागीश्वरीं बिभ्रदिन्दिरां करपङ्कजे । कान्तिं वपुषि सर्वत्र ह्रियं हृदयपङ्कजे ॥ ९ ॥
भूपतिर्भूभुजां मुख्यो भीष्मो नाम्ना च तेजसा । अभीष्मः स्वजनेषूच्चैः स्मेरराजीवलोचनः ॥ १० ॥ (चतुर्भिः कलापकम्)
पश्यति स्म सभासीनं मानोद्धुरशिरोधरम् । नमन्नैकमहिपालप्रणामग्रहणोन्मुखम् ॥ ११ ॥

१ सत्यभामा । २ कृष्णे । ३ सरस्वतीम् । ४ लक्ष्मीम् । ५ लज्जाम् ६ राजीवं कमलम् ।

इति श्रीप्रमेयरत्नमञ्जूषानामश्रीजम्बूद्वीपप्रज्ञप्तिसूत्रोपाङ्गबृहद्वृत्तिकृतमहोपाध्यायश्रीशान्तिचन्द्रगणिनां शिष्योपाध्याय-
श्रीरत्नचन्द्रगणिविरचिते श्रीभक्तामरस्तव—श्रीकल्याणमन्दिरस्तव—श्रीसद्धर्मस्तव—श्रीऋषभवीरस्तव—
श्रीकृपारसकोष—श्रीअध्यात्मकल्पद्रुम—श्रीनैषधमहाकाव्य—श्रीरघुवंशमहाकाव्यवृत्ति—
श्रीसम्यक्त्वसप्ततिकाप्रकरणबालावबोधभ्रातरि श्रीप्रद्युम्नचरित्रे महाकाव्ये
प्रद्युम्नचरित्रोत्पत्ति—श्रीकृष्णद्वारिकास्थापन—श्रीकृष्ण-
राज्यप्राप्ति—नारदागमनवर्णनो नाम
प्रथमः सर्गः ।

सारसारसनं श्रोण्यां पादयोः नूपुरे वरे । करयोः कुर्वती सारकङ्कणे स्वर्णरत्नजे ॥ ९९ ॥
कृष्णसिंहासनासीना दधत्यादर्शमुज्ज्वलम् । स्फारशृङ्गारसंभारं पश्यन्ती कुर्वती स्मितम् ॥ १०० ॥
सखीसमर्पितां सारनागव्रततिवीटिकाम् । मुखे निदधती सत्या मूर्त्येवाऽस्ति सुराङ्गना ॥१०१॥ (अष्टभिः कुलकम्)
अत्रान्तरे समागत्य नारदः पार्श्वतः स्थितः । जातानुबिम्बे आदर्शे मुनिवेषविभूषितः ॥ १०२ ॥
कोऽयं दुर्मुख आयातः इति नक्राविमोटनाम् । कुर्वती थूत्कृतिं चास्थात् त्वरितं विमनायिता ॥ १०३ ॥
कदा यास्यति दुर्वेषः पापः पापकृतिः पुमान् । भस्मोद्धूलितसर्वाङ्गः चिन्तयन्तीति चेतसा ॥ १०४ ॥ (युग्मम्)
अपमानात् स देवर्षिरुत्पपात नभस्तले । ध्यायन् चेतसि दुर्ध्यानं सत्यभामोपरि स्फुटम् ॥ १०५ ॥
शापदग्धां करोम्येतां किं वा कुत्सितरूपकाम् । किं वाऽन्यस्मै ददाम्येतां किंवा भोगवियोगिनीम् ? ॥ १०६ ॥
कृष्णेन साकं मैत्र्यस्ति मा त्रुट्यतु कथंचन । एवं कृते तु सा त्रुट्येत् जन्मतः परिपालिता ॥ १०७ ॥
तथा करोमि च यथा मैत्री तिष्ठेद् बलानुजे । इयं च दुःखिनी भूयाद् यावज्जीवं स्वचेतसि ॥ १०८ ॥
इत्यादि चिन्तयन् मानी झटित्युत्पन्नबुद्धिकः । जहर्ष स चिरं चित्ते बुद्धिप्रागल्भ्यभाग् ऋषिः ॥ १०९ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धुलब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार सर्गो निसर्गसुभगो गत एष आद्यः ॥ ११० ॥

१ मेखलाम् । २ कण्ठ्याम् ।

तद् जानेऽहं गुणाः सर्वे प्रतिपक्षगुणोज्झिताः । पुरुषोत्तमत्वात् त्वामेवाऽहंपूर्विकृताऽऽश्रिताः ॥ ८६ ॥
एतत् सर्वं मयाऽऽलोकि कुतूहलितचेतसा । परं ते महिषीमुख्या सुमुखी लोकविश्रुता ॥ ८७ ॥
जगद्यौवनतार्जिश्रीः सत्यभामा मया श्रुता । विलोक्यैतामहं कुर्वे नेत्रजन्म फलेग्रहि ॥ ८८ ॥
कर्णौ श्रुत्वा तथा तुष्टौ नेत्रे उत्कण्ठिते पुनः । इन्द्रानुज ! त्वदाज्ञा चेत् तदिच्छा पूरयाम्यहम् ॥ ८९ ॥
अथाऽब्रवीद् विहस्योच्चैश्चक्रपाणिः प्रमोदभाक् । देवर्षे ! ब्रह्मचारिस्त्व सर्वत्राऽस्खलितोऽसि यत् ॥ ९० ॥
मदन्तःपुरमेतद् हि सर्वं दृग्गोचरीकुरु । लभतामाशिषं पुण्यामपुण्यजनदुर्लभाम् ॥ ९१ ॥
भामाऽपि च तव पादौ प्रणम्याशिषमुत्तमाम् । प्राप्नोतु सत्यवाचो हि नारदा ब्रह्मवर्यतः ॥ ९२ ॥
जनार्दनेनाऽनुमतो गतः शुद्धान्तमादरात् । सर्वत्राऽस्खलितो नम्रैः सौविदल्लैः कलिप्रियः ॥ ९३ ॥
अत्रान्तरे कृतस्नाना कृतकुङ्कुमलेपना । मालतीकुसुमामोदिकबरीबन्धशालिनी ॥ ९४ ॥
शिरस्कृतशिरोरत्ना कर्णयोः कृतकुण्डला । कलाकेलैः कुन्तसमकृतसीमन्तबन्धना ॥ ९५ ॥
तिलकं कुर्वती भाले हंसपादेन सुन्दरम् । ललाटिकां घनसारकस्तूरीकुङ्कुमद्रवैः ॥ ९६ ॥
नैकजातिभवस्फारहारान् कण्ठे च कुर्वती । जात्यचन्दनकर्पूरकस्तुरी कुङ्कुमद्रवैः ॥ ९७ ॥
उन्नतपीनवक्षोजयामले पत्रवल्लरीम् । मणिस्वर्णविराजिश्रि दधाना भूषणं भुजे ॥ ९८ ॥

१ कृष्ण. । २ अन्तःपुरम् । ३ नारद । ४ हिङ्गुलेन । ५ ललाटभूषणे, ललाटस्थचिन्हे च ।

उक्तं च—" एह्यागच्छ समाविशाऽऽसनमिदं प्रीतोऽस्मि ते दर्शनात्, का वार्ता परिदुर्बलोऽसि च कथं कस्मात् चिरं दृश्यते ।
इत्येवं गृहमागतं प्रणयिनं ये भाषयन्त्यादरात्, तेषां युक्तमशङ्कितेन मनसा गन्तुं गृहे सर्वदा " ॥ ७४ ॥
वचनेऽपि दरिद्रत्वं धनाशा तत्र कीदृशी । यवागूजरणे जाड्यं मोदकानां तु का कथा ? ॥ ७५ ॥
अब्भत्थिया सि जीहे ! महुरं जंपेइ पाहुणे लोए । दूमिज्जइ जेण जणो ते वयणा मा वदिज्जासु ॥ ७६ ॥
देवकीरोहिणीपुत्रौ निजसिंहासनस्थितौ । कृताञ्जलिपुटौ साधुमुखदत्तविलोचनौ ॥ ७७ ॥
वार्तयन्तौ नारदं तं नानादेशकथादिभिः । नारदोऽपि च पप्रच्छ कुशलं कुशली स्वयम् ॥ ७८ ॥
कच्चिद्राष्ट्रे पुरे गोत्रे सैन्ये स्वाङ्गेऽन्यतोऽपि च । वर्तते कुशलं स्नेहः चोभयोरपि तादृशः ॥ ७९ ॥
अथोवाचाऽच्युतो देवो ययोस्त्वं शुभचिन्तकः । कुतो भवेदकुशलं विश्वविश्रुतकीर्तनः ॥ ८० ॥
अप्रेमाऽपि कुतः स्याच्च त्वयि प्रीतिविचिन्तके । जन्मान्तराऽऽगता प्रीतिरावयोः याति वा कुतः ? ॥ ८१ ॥
इत्यादिवचनैस्तुष्टो देवर्षिः पुनरब्रवीत् । पुरुषोत्तमस्य ते संपद्विलोकनकुतूहली ॥ ८२ ॥
समागतोऽस्मि तां दृष्ट्वा लोकवार्ताऽतिशायिनीम् । विस्मयस्मेरनयनोऽभवं संमदनिर्भरः ॥ ८३ ॥
अहो ! ते रूपसंपत्तिरहो ! संपदनुत्तरा । ऐश्वर्यं बाहुवीर्यं च सर्वमस्त्यप्यनुत्तरम् ॥ ८४ ॥
अहो ! ते दानशौण्डत्वमहो ! धैर्यमुदारता । अहो ! ते विनयः पूज्ये अहो ! निरभिमानता ॥ ८५ ॥

१ अभ्यर्थिताऽसि जिह्वे ! मधुरं कथयति प्राघूर्णके लोके । दूयते येन जनः तानि वचनानि मा वद ॥

अथाऽन्यदा श्रिया नाथः पाथःपतिगभीरहृत् । नमन्नैकनराधीशमौलिमाणिक्यपूजितः ॥ ६२ ॥
स्वर्णसिंहासनाऽऽसीनः सर्वाऽऽभरणभासुरः । नानादेशगतोत्कोचविलोकनकुतूहली ॥ ६३ ॥
विज्ञप्त्यध्यक्षविज्ञप्तिं शृण्वन् कुर्वन् च माननाम् । विमानना च कस्याश्चित् कस्याश्चिदर्धमाननाम् ॥ ६४ ॥
नानादेशकथास्तन्वन् नाट्यानि च विलोकयन् । वनिताभिः तथा पुम्भिः कृतानि, पद्मलोचनः ॥ ६५ ॥
तुष्यन् ददानो देशांश्च रुष्यन् गृह्णान एव हि । विदूषकैः हास्यमानो ददत् शिवाय सपदम् ॥ ६६ ॥
हस्तियुद्धं मल्लयुद्धं चरणायुद्धयोर्युधम् । क्रमेलकद्वयीयुद्धं मत्तयोः मेषयोरपि ॥ ६७ ॥
कारयन् वारयंश्चैव युद्ध तेषां निरोजसाम् । नीलवासः सखा तत्राऽऽस्थानासीनोऽस्ति सन्मनाः ॥६८॥

(सप्तभिः कुलकम्)

अथाऽऽयन् ददृशे लोकैः सभास्थैः दूरतः स्थितः । साक्षात् तेजोमयः काश्चित् पुमान् विस्मेरलोचनैः ॥ ६९ ॥
कोऽयं कोऽयमिति वचो ब्रुवाणैः सन्निधौ पुनः । मृगाजिनधरः श्रीमान् जटामुकुटमण्डनः ॥ ७० ॥
वृषीदण्डव्यग्रकरः पिङ्गनेत्रः कलिप्रियः । ब्रह्मचारीति मान्योऽयं लोकानां महतामपि ॥ ७१ ॥
नारदो निरचायीति कृताऽभिमुखयानकः । कृतप्रणामः श्रीकृष्ण–वसुदेवादिभिः नृभिः ॥ ७२ ॥
अर्घपाद्यादिकं दत्त्वा समानीतः करग्रहात् । सिंहासनसमीपेऽसौ मौनवानुपवेशितः ॥ ७३ ॥

---

१ क्रमेलक उष्ट्र । २ मतिनां कुशमयासनभेदे । ३ सिद्धार्थलाजादि । ४ हृष्यन् कुप्यातिमाननात्, इति वा पाठ ।

हेमकन्दलसन्मुक्ताफलप्रकरभूषिता । श्रीफलै-ला-लुविङ्गादिराशिराजच्चतुष्पथा ॥ ४८ ॥
गजा-ऽश्व-रथसंमर्दसंकीर्णनृपवर्त्मका । द्वारिकाऽस्ति पुरी रम्या स्वर्गपूरेव किं परा ? ॥ ४९ ॥ (पञ्चभिः कुलकम् )
जरासन्धस्य जामातृकंसमारणवैरतः । पृष्टनैमित्तिकज्ञातस्वोदयः पश्चिमादिशि ॥ ५० ॥
कृताऽष्टमतपस्तुष्टः लवणाऽधिपनिर्जरः । समुद्रमपसार्यैव तेन दत्तस्वभूमिकः ॥ ५१ ॥
इन्द्राऽऽदिष्टकुबेरेण कृतपत्तननिर्मितिः । जरासन्धमतिविष्णोर्वधप्राप्तत्रिखण्डभुक् ॥ ५२ ॥
यदूनां कोटिकोटीभिर्वृतः परमऋद्धिभाक् । श्रीनेमि-बलदेवादिभ्रातृसौहार्दशोभितः ॥ ५३ ॥
समुद्रविजयक्ष्मापप्रमुखाणां विनयी नयी । वसुदेवसुतो राजा श्रीकृष्णस्तत्र वर्तते ॥ ५४ ॥ ( पञ्चभिः कुलकम् )
तस्य पूर्णेन्दुसंकाशमुखी नीलाब्जलोचना । शुकचञ्चुचञ्चुनासा स्फुरत्कोकनदाऽधरा ॥ ५५ ॥
फुल्लारविन्दनिःश्वासा दाडिमीबीजवद्द्विजा । कम्बुकण्ठी पिकीकण्ठी स्फारवक्षोविराजिता ॥ ५६ ॥
उन्नताऽऽपीनवक्षोजा श्यामरोमावलीयुता । मुष्टिग्राह्यकटी निम्ननाभिः पीननितम्बभृत् ॥ ५७ ॥
उन्नताऽऽपीनजघना रम्भास्तम्भोरुयामला । पक्वरक्तोत्पलश्रीककरपादेभगामिनी ॥ ५८ ॥
औदार्य-धैर्यसंयुक्ता नैकलक्षणलक्षिता । पतिचित्तानुगाऽतीव भाग्यसौभाग्यशालिनी ॥ ५९ ॥
स्वामिनः परमप्रेममानिनी त्विट्तडिन्निभा । उग्रसेनमहाराजसुता विश्वाऽतिशायिनी ॥ ६० ॥
सर्वान्तःपुरसंमान्या सर्वाऽऽभरणभूषिता । अस्त्यग्रमहीषी नाम्ना सत्यभामा प्रियंवदा ॥ ६१ ॥ ( सप्तभिः कुलकम् )

लक्ष्मीस्तथा बलं रूपं धर्मादेव हि संभवेत् । क्रमतोऽमुत्र मोक्षोऽपि प्रद्युम्नस्येव जायत ॥ २४ ॥
श्रेणिकस्तत्र पप्रच्छ कोऽसौ प्रद्युम्ननामकः ? । चारित्र श्रोतुमिच्छामि कथ्यतां यदि वो रुचिः ॥ ३५ ॥
यतः—सर्वज्ञमूलानि सुशास्त्राणि भवन्ति हि । तान्येव स्युः कुशास्त्राण्यनाप्तमूलानि सर्वथा ॥ ३६ ॥
तेनेदं प्रभुणाऽऽदिष्ट शास्त्रमस्त्युपकारकम् । मिथ्यादृग्वचनैर्दग्धकर्णकोटरदेहिनाम् ॥ ३७ ॥
उवाच जगतां नाथः श्रेणिकं श्रवणोत्सुकम् । चारित्रं लक्ष्मीपुत्रस्य कर्णपीयूषपारणम् ॥ ३८ ॥
अत्रास्ति सर्वद्वीपानां मध्यवर्ती मनोहरः । जम्बूपलक्षितो जम्बूद्वीपः पूर्णेन्दुसंस्थितिः ॥ ३९ ॥
तत्रास्ति भरत क्षेत्र नानातीर्थमनोहरम् । मध्ये राजतवैताढ्याद्विभागीकृतमुत्तमम् ॥ ४० ॥
तथैव गङ्गा—सिन्धूभ्यां पुत्रीभ्यां हिमवद्गिरेः । तच्च षट्खण्डतां नीतं नैकदेवगृहाऽऽश्रितम् ॥ ४१ ॥
तत्रास्ति दक्षिणे पार्श्वे मध्यखण्डे मनोहरः । वापी—कूप—तटाकादिजलाश्रयकृताऽऽश्रयः ॥ ४२ ॥
नानोद्यान—लता—पुष्पशाली दानिजनाऽन्वितः । शत्रुञ्जयादिसत्तीर्थैः पावनो निखिलाङ्गिनाम् ॥ ४३ ॥
अनेकैः पत्तनैर्युक्तो मुक्तो दुष्टजनैः सदा । सुराष्ट्रनामको देशः क्लेशलेशविवर्जितः ॥ ४४ ॥ ( त्रिभिर्विशेषकम् )
तत्राऽऽखण्डलनिर्देशाद् धनदेन विनिर्मिता । स्वर्णप्राकारसंयुक्ता परिखीकृतसागरा ॥ ४५ ॥
स्वर्णरत्नमणिगेहा तीर्थकृच्चैत्यभूषिता । वापी—कूप—तडाको—पवनश्रेणिविराजिता ॥ ४६ ॥
धन—धान्य—मणि—स्वर्णसंकीर्णधनवद्गृहा । सारकर्पूरकस्तूरीकुङ्कुमाऽऽकीर्णहट्टका ॥ ४७ ॥

उक्तं च—"सव्यपाणिगतमप्यपसव्यप्रापणाय न देयविलम्बः। न ध्रुवत्वनियमः किल लक्ष्म्यास्तद्विलम्बनविधौ न विवेकः" ॥२१॥

औचित्यमेकमेकत्र गुणानां कोटिरेकतः। विषायते गुणग्राम औचित्यपरिवर्जितः ॥ २२ ॥

हस्तिरत्नं समारुह्य सर्वालंकारभासुरः। हयरत्नं पुरस्कृत्य सान्तःपुरपरिच्छदः ॥ २३ ॥

भम्भायां वाद्यमानायां श्रेणिको भूपतिस्ततः। निर्ययौ वन्दितुं पुर्याः स्वर्गादिव शतक्रतुः ॥ २४ ॥ (युग्मम्)

चकार राजचिह्नानां मोक्षणं जिनदर्शने। विनयावनतो भूत्वा प्रणनाम जिनेश्वरम् ॥ २५ ॥

शक्रादिदत्तसन्मानो यथास्थानमुपाविशत्। कृताञ्जलिपुटः स्वामिमुखसंमुखदत्तदृक् ॥ २६ ॥

एकतानमना मुञ्चन् विकथानां चतुष्टयीम्। पपौ कर्णपुटाभ्यां स वाक्सुधां स्वामिनो मुखात् ॥ २७ ॥

तद्यथा—द्वेधा धर्मोऽस्ति भो भव्याः! साधु-श्राद्धविभेदतः। प्रथमाच्च भवेद् मोक्षः स्वर्गो वा शुद्धपालनात् ॥२८॥

अन्यस्माच्च भवेत् स्वर्गो द्वि-षट्कल्पप्रमाणकः। यथारुच्याऽथ कर्तव्यः परत्रेह च शर्मणे ॥ २९ ॥

सुखाभिलाषी जीवोऽसौ सुखं स्याद् धर्मतः पुनः। स च सर्वज्ञमूलः स्याद् नतु चित्तप्रकल्पितः ॥ ३० ॥

तस्मिन् सन्ति च चत्वारो वैरिणः प्रतिबन्धकाः। ते हेयाः सर्वथा येन धर्मोत्पत्तिः प्रजायते ॥ ३१ ॥

यतः—"कोहो पीइं पणासेइ माणो विणयनासणो। माया मित्ताणि नासेइ लोहो सव्वविणासणो" ॥ ३२ ॥

ततस्तान् वैरिणो हत्वा कृत्वा प्राणिषु मित्रताम्। तयोरेकतमः कार्यो धर्मः स्वर्गा-ऽपवर्गदः ॥ ३३ ॥

१ क्रोधः प्रीतिं प्रनाशयति मानो विनयनाशनः। माया मित्राणि नाशयति लोभः सर्वविनाशनः ॥

द्वीपोऽस्ति जम्बूनाम्नेहाऽसङ्ख्यद्वीपाऽब्धिवेष्टितः । सार्वभौम इवैतेषां सेवावृत्तिविधायिनाम् ॥ ७ ॥
तत्राऽस्ति भरतं क्षेत्रं याम्यकोणविभूषणम् । भूतं तीर्थकृतां चैत्यैश्चानेकैः मुनिनायकैः ॥ ८ ॥
तत्राऽस्ति मगधो देशः पेशलः पुण्यपद्मया । श्रीमत्तीर्थकृतां तीर्थैरनेकैः पावनो नृणाम् ॥ ९ ॥
सूर्याचन्द्रमसोः विम्बे ग्रहणं यत्र विद्यते । दण्डश्च नृपतेश्छत्रे विवाहे च करग्रहः ॥ १० ॥
बन्धनं युवतिकेशपाशेऽस्त्यगुरुवासना । तत्रैवास्ति, तथा नित्यं ताडनं मुरजेषु च ॥ ११ ॥
तथा द्विजिह्वता सर्पे तस्करत्वं तथानिले । जनस्य विद्यते नैतदखिले यत्र पत्तने ॥ १२ ॥ ( त्रिभिर्विशेषकम् )
तत्रास्त्येवंविधं नाम्ना पुरं राजगृहं सदा । यत्र लक्ष्मी–सरस्वत्यौ कृतवासे बभूवतुः ॥ १३ ॥
धनिनां कोटिकोटिभिः मण्डितं नैव खण्डितम् । रिपुभिश्च कदाप्येतत् पुरं विष्टपभूषणम् ॥ १४ ॥ (युग्मम्) ।
श्रेणीकृतयशास्तत्र श्रेणिकोऽस्ति नरेशिता । क्षायिकं दर्शनं बिभ्रद् भावितीर्थकरादिमः ॥ १५ ॥
देवबुद्धिकषोत्तीर्णसम्यक्त्वस्वर्णभूषणः । न कदापि च मिथ्यात्वलेशमात्रेण दूषितः ॥ १६ ॥ ( युग्मम् )
अन्यदा श्रीमहावीरः सुराऽसुरपरिच्छदः । कर्मेन्धनमहावीरः सुयशाः समवासरत् ॥ १७ ॥
चक्रिरे तत्र समवसरणं शरणार्थिनाम् । शरण्यं तत्क्षणं देवा मणि–स्वर्णहिमांशुभिः ॥ १८ ॥
विज्ञप्तो वनपालेन हर्षसंभृतचेतसा । स्वामिन् ! अत्र तवोद्याने श्रीवीरः समवासरत् ॥ १९ ॥
ततोऽतिमुदितो राजा बिभ्रद् रोमाञ्चकञ्चुकम् । सर्वालङ्कारसंभारं ददावौचित्यविद्वरः [ ततः ? ] ॥ २० ॥

अर्हम् ।

उपाध्यायश्रीरत्नचन्द्रगणिविरचितम्—

# श्रीप्रद्युम्नचरित्रमहाकाव्यम् ।

राज्यलक्ष्मीः न्यायलक्ष्मीः धर्मलक्ष्मीश्च निस्समा । येनोपदिष्टा लोकानां स जीयाद् वृषभप्रभुः ॥ १ ॥

यश्चकार शमी शान्तिं विष्टपत्रितयेऽखिले । स जीयात् सान्वयं नाम दधानः शान्तितीर्थराट् ॥ २ ॥

यदूनां हठवृत्त्यापि ब्रह्मसीमां मुमोच न । स नेमिः जयताद् नित्यं कलाकेलिविडम्बनः ॥ ३ ॥

संज्ञां यो भूयसीं लेभेऽवदातैरातेनिर्मलैः । विघ्नव्रातलतापार्श्वः स जीयात् पार्श्वसर्ववित् ॥ ४ ॥

श्रीगौतमगणेः पूर्वपक्षसिद्धान्तकृत् प्रभुः । जीयात् चिरं महावीरः कैवल्यपथभास्करः ॥ ५ ॥

एतान् श्रीमज्जिनान् नत्वा स्मृत्वा च श्रुतदेवताम् । प्रद्युम्नचरितं वच्मि यथामति यथाश्रुतम् ॥ ६ ॥

१ कलाकेलिः कामः । २ पार्श्वः कुठारः ।

क्षणाच्च मदनो जित्वाऽधो निपात्य भुवस्तले । मुष्टिमुद्यम्य यावच्च हन्तुं प्रयतते हृदि ॥ २६९ ॥
मुञ्च मुञ्च कृपालो मां दासोऽस्मि तव नित्यशः । अद्यतः स्वामिता धत्से तथोक्तः स मुमोच तम् ॥ २७० ॥
त्वत् साहसबलाभ्यां च तुष्टोऽहं दातुमुत्सहे । वदन्निति धनूरत्नं कौस्तुभाख्यं गुणान्वितम् ॥ २७१ ॥
मदनं मोहनं चैव तापनं शोषणं तथा । उन्मादनं तथाऽमीभिः शरैः पञ्चभिरुल्लसन् ॥ २७२ ॥
ददौ विनयवान् मोचे स्मर्तव्योऽहं कदापि हि । आज्ञादानेन कर्तव्यः कृतार्थः सेवकोत्तमः ॥ २७३ ॥
प्रद्युम्नमनुगम्याथ कियन्त्यपि पदानि सः । विसृष्टोऽगात् स्वकस्थानं मदनस्तु समाययौ ॥ २७४ ॥
सोत्साहं मदनं दृष्ट्वा निरुत्साहास्तु जज्ञिरे । कुमारास्ते समागत्य मिलन्ति स्म च्छलग्रहाः ॥ २७५ ॥
निश्छद्मा मदनो हृष्टः सर्वा वार्ता तदग्रतः । प्राप्तस्त्रयोदश लाभं चकार प्रणयं दिशन् ॥ २७६ ॥
पुनः छलं विमृश्याशु निन्युस्तं छद्मवर्जितम् । भीमनाम्नी गुहा भीमां नागाधिष्ठातृदेवताम् ॥ २७७ ॥
तस्याः निकटमायातः शतकोटिमुखोऽब्रवीत् । योऽस्यां प्रविशति प्रीतः प्राप्नुयात् श्रियमद्भुताम् ॥ २७८ ॥
इत्युक्तमात्र एवाशु प्रविवेशाऽविशङ्कितः । निर्ययावहिरूपेण स्फटाटोपधरोऽसुरः ॥ २७९ ॥
यावत्स विषफूत्कारान् मुञ्चति क्रोधविह्वलः । तावदेव मुखं गाढं जग्राह हरिनन्दनः ॥ २८० ॥
गृहीत्वा मुखमेतस्य त्रिशः स्वस्य शिरोऽभितः । उल्लालयन्निरुच्छ्वासमकरोद्गाढदुःखिनम् ॥ २८१ ॥
मुक्तो भूमौ पपाताशु मा करोतु पुनस्तथा । इति भीत्या समागत्य ननाम स स्वरूपभृत् ॥ २८२ ॥

ददौ पुष्पमयं छत्रं चामरे विशदे उभे । शय्यां पुष्पमयीं वर्यां दासोऽस्मीति वदन् वचः ॥ २८३ ॥
अनुगत्य च हृज्ज्ञातं ययौ तस्य निदेशतः । हन्त्रूरपि समायातः पुरस्कृत्योपदां वराम् ॥ २८४ ॥
कपटाद्दत्तसन्मानो भ्रातृभिस्तैरुपाविशत् । वृत्तान्तं सकलं प्राह लाभं तं च चतुर्दशम् ॥ २८५ ॥
अथ ते मिलिताः सर्वे पापाः पापविचारिणः । प्राहुर्वज्रमुखं वृद्धपापं रहसि संस्थितम् ॥ २८६ ॥
मृतो नायमुपायैस्तैः चतुर्दशभिरुत्कटैः । प्रत्युताऽधिकसंपद्वान् स्नुहिश्छिन्न इवांह्रिपः ॥ २८७ ॥
तेन सर्वे मिलित्वाशु खड्गैः पञ्चशतैरपि । समकालममुं हन्मो दशम्यां महिषं यथा ॥ २८८ ॥
तदा वज्रमुखः प्रोचे नायं खड्गशतैरपि । हन्तुं योग्यो महाविद्यो वज्राङ्ग इव पार्वतिः ॥ २८९ ॥
प्रादुर्भवेत्परं वैरं पिता दुःखं परं वहेत् । अयं विचारो न श्रेयान् हन्मः किन्तु च्छलेन हि ॥ २९० ॥
अत्राप्युपायौ द्वौ शेषौ तिष्ठतोऽस्य निपातने । ताभ्यामुद्धरितोऽयं चेन्नास्ति हन्ताऽस्य कश्चन ॥ २९१ ॥
इत्थं विमृश्य ते सर्वे पुनः क्रिडाजुषोऽभवन् । विप्रतार्य वनं निन्युः प्रद्युम्नं[1] विपुलाख्यकम् ॥ २९२ ॥
ततो विदूरे स्थित्वोचे वज्रो वज्रसमानहृत् । प्रविशेदत्र यो धैर्याल्लभते लाभमुत्तमम् ॥ २९३ ॥
तदीयं वचनं श्रुत्वा प्रोचे दाशार्हनन्दनः[2] । आर्य शकुनमेतत्ते वचनं मम गच्छतः ॥ २९४ ॥
प्रमाणमिति कृत्वाहं यामि मां मा निषेधयेः । इत्युक्त्वा स ययौ तत्र साहसैकधनुर्धरः ॥ २९५ ॥

१ प्रद्युम्नम् । २ प्रद्युम्नः ।

मध्ये गत्वा कियन्मार्गं स ददर्श गिरेर्नदीम् । निर्यान्तीं प्रसरद्वारिपूर्णां काञ्चीमित्रावनेः ॥ २९६ ॥
तस्यास्तटे तमालाद्या वृक्षाः सन्ति सहस्रशः । तदधस्तात् शिलाः सन्ति महत्योऽञ्जनसंनिभाः ॥ २९७ ॥
शिलायां तत्र चैकस्यां स ददर्श मनोहराम् । पद्मासनसमासीना नासाग्रन्यस्तलोचनाम् ॥ २९८ ॥
कलापसदृशीं वेणीं बिभ्राणां कमलाननाम् । अष्टमीचन्द्रवद्भालां बालामिव बिडौजसः ॥ २९९ ॥
मुखसौरभलोलालिमालाझंकृतिसुन्दराम् । मुक्त्वा हारलतां कण्ठे बिभ्राणां पद्मलोचनाम् ॥ ३०० ॥
स्तनभारेण नम्राङ्गी वज्रमध्यां सुधागिरम् । दधानां स्वर्णरसनामुच्चैर्जघनसुन्दराम् ॥ ३०१ ॥
रंभास्तंभसमानोरू पादयोस्तारनूपुरे । बिभ्राणां हंसगमना मृणालोपमदोर्लताम् ॥ ३०२ ॥
करे रुद्राक्षमन्मालां जपन्तीमिष्टजल्पकम् । तपस्तपननिरता विरता पापकर्मतः ॥ ३०३ ॥
पूर्वदिक्सम्मुखासीनां क्षीरोदाम्बरधारिणीम् । शीलालंकारसंपन्नां कन्यां षोडशवार्षिकीम् ॥३०४॥ (सप्तभिः कुलकम्)
तां दृष्ट्वाऽचिन्तयच्चित्ते त्रिदशी किमु मानवी । मेषोन्मेषास्तु कुर्वाणा मानवी निश्चिकाय सः ॥ ३०५ ॥
मदनो मदनेनैव पीडितोऽभूत्क्षणादथ । वसन्ताख्यः समायातो विद्याधरवरः सुहृत् ॥ ३०६ ॥
स प्रणामपरो भूत्वा कृताञ्जलिपुटः स्थितः । अपृच्छद् रौक्मिणेयस्तं केयं कस्य सुतोत्तमा ॥ ३०७ ॥
किमर्थमत्र तिष्ठन्ती जपन्ती वर्तते च किम् । मित्रं मेऽसि ततस्त्वं भोः । संशयमिममस्य तत् ॥ ३०८ ॥
इति पृष्टो वसन्ताख्यः खगः प्रोचे सुधावचा । विद्याधरपुराधीशो वायुवेगोऽस्ति खेचरः ॥ ३०९ ॥

तस्य वाणीति विख्याता वनिता गुणमन्दिरम् । तयोर्जाता यतः पुत्री जन्मतोऽपि रतिप्रदा ॥ ३१० ॥
ततस्तौ सान्वयं नाम चक्राते रतिरित्यदः । ततः स यौवनं प्राप मदनोपवनं किमु ॥ ३११ ॥
वायुवेगाऽभिधानस्य गृहेऽगान्मुनिरेककः । सन्मानदानवस्त्रान्नपानैस्तोषितवान् स तम् ॥ ३१२ ॥
उपवेश्यासने रम्ये तं पप्रच्छ विशांपतिः । पुत्रीरत्नस्य मे स्वामिन् ! वररत्नं समादिश ॥ ३१३ ॥
ततो ज्ञानी यतिः प्रोचे शृण्वेकाग्रमना नृप! । सौराष्ट्रदेशेऽभिनवा सद्द्वारा द्वारिकापुरी ॥ ३१४ ॥
तत्राऽस्ति राजा लक्ष्मीश[1]स्तस्य सूनुर्[2]महाबलः । प्रद्युम्नाख्यो महाभाग्यः सर्वलक्षणलक्षितः ॥ ३१५ ॥
क्रीडापरः सुखं स्वेच्छं भ्रमन् भ्रमरवद्भृशम् । विपुलाख्ये वने रम्ये समायास्यति निश्चितम् ॥ ३१६ ॥
तेनैव वररत्नेन पुत्रीरत्नं सुयोज्यते । विधिर्विज्ञोऽतिभाविता रत्नं रत्नेन योजयेत् ( यत् ) ॥ ३१७ ॥
निशा चन्द्रं श्रिया विष्णुं रोहिण्यामृतदीधितिम् । संयोज्यै(ज्ये)व विधिः भीतिः(तः) पुत्र्या ते च मनःसुतम् ॥ ३१८ ॥
इत्युक्त्वा मुनिरापृच्छ्य दत्वा धर्माशिषं पराम् । यातवान् स यथास्थानं राजा तु मुदितोऽभवत् ॥ ३१९ ॥
तस्यैव वचसा राजा निश्चिन्तोऽभूत् सुखी भवन् । इयं तु तद्वरस्यार्थे तपस्तपति नित्यशः ॥ ३२० ॥
तस्मिन्नेकाग्रचित्ता सा जपन्ती नाम तस्य च । तिष्ठत्यत्र सतीरत्नं वरमार्गविलोकिनी ॥ ३२१ ॥
तस्याः पुण्यप्रभावेणागतस्त्वमिह दृश्यसे । सर्वलक्षणपूर्णाङ्गः साहसैकविभूषणः ॥ ३२२ ॥

१ कृष्णः । २ प्रद्युम्नम् ।

जानामि त्वा नररत्न नारीरत्नमिमां पुनः । उचितो युवयोर्योगः स्वर्णमण्योरिवास्तु तत् ॥ ३२३ ॥
तदा तं खेचरं प्रोचे मदनो मदनातुरः । न हि स्वर्णमणीयोगो विना लाक्षा भवत्ययम् ॥ ३२४ ॥
लाक्षास्थाने भवाऽस्मिंस्त्व कार्ये सयोजनापरः । ततो जगाम विद्याभृत् पार्श्वे तस्याः पितुर्मुदा ॥ ३२५ ॥
आचख्यौ तत् स्वरूपं स ततोऽतिमुमुदे पिता । तादृग् जामातर प्राप्य मोदभाक् स्यान्न कश्चन ॥ ३२६ ॥
पिताऽपि तत्रागत्य द्राक् प्रद्युम्न वीक्ष्य हर्षभाक् । तस्मिन्नेव क्षणे तस्य पाणिग्रहमचीकरत् ॥ ३२७ ॥
अनर्घ्यं स्वसुतारत्न दत्त्वा प्रीतो बभूव सः । अनर्घ्याणि च रत्नानि हस्त्यश्वादीन्यदात्तदा ॥ ३२८
कियन्त्यहानि तत्रास्थाद् भुञ्जानो भोगसम्पदम् । तया सह फलं ह्येतदुद्वाहामृतशाखिनः ॥ ३२९ ॥
ततः श्वशुरानुज्ञातो महर्द्धिश्च चचाल सः । लाभ पञ्चदश प्राप्य रथारूढोढया सह ॥ ३३० ॥
यावदायाति तत्रैव वने शकटखेचरः । तेजःपुञ्जमिवादित्यं दृष्ट्वा तं सुमुदेतराम् ॥ ३३१ ॥
प्रणम्य पादयोर्मूर्ध्ना वशीकृत इवाऽभवत् । कामधेनु रथ नाम्ना पुष्पकं मुदितो ददौ ॥ ३३२ ॥
पूज्यपूजापरा लोका दृश्यन्ते बहवो यतः । पीताम्बराय वार्द्धिर्मा रुद्राय च विष ददौ ॥ ३३३ ॥
तमनुज्ञाप्य मदनो निरागात्तद्वनाद्बहिः । अभ्रान्मुक्त इवादित्य आगच्छन् ददृशे च तैः ॥ ३३४ ॥
श्यामाननाः समागत्य मिलन्ति स्माभ्यसूयया । लाभद्वयभवा वार्ता स शशस च तत्पुरः ॥ ३३५ ॥
उपायांस्ते बहून् कृत्वा निःकला भाग्यवर्जिताः । प्रद्युम्नेन समं चेलुः गन्तु जन्मपुर प्रति ॥ ३३६ ॥

१ निष्फला ।

अथ रत्या सहायान्तं प्रद्युम्नं ददृशुः स्त्रियः । गवाक्षस्थाः कृतोन्मेषलोचनाः प्रसरन्मुदः ॥ ३३७ ॥
काचिद्वदति धन्येयं यया प्राप्तो ह्ययं वरः । काचिद्वदति धन्योऽयं प्राप स्त्रीरत्नमुत्तमम् ॥ ३३८ ॥
हस्ताभ्यां निर्मिता नेयं वेधसा किन्तु यन्त्रतः । निर्मितं यच्च हस्ताभ्यां मलिनं दृश्यते हि तत् ॥ ३३९ ॥
काचिद्वदति हे बाले ! शृण्वेकां मे विचारणाम् । निर्माति स्म विधिर्बालममुं चोक्षतराऽणुभिः ॥ ३४० ॥
ततोऽवशिष्टैरणुभिः कियद्भिर्निरमादिमाम् । कृशाङ्गीं निम्ननाभीकां स्मरकूपीयुतां पुनः ॥ ३४१ ॥ (युग्मम्)
काचिदाह मुखं चन्द्रो नेत्रे निलोत्पले भ्रुवम् । अधरो विद्रुमं चैतद् दन्ताः कुन्दसुमानि तु ॥ ३४२ ॥
नासिका शुकचञ्चुः किं स्मितं किं चन्द्रगोलिका । कण्ठस्त्रिरेखः कम्बुः किं वाणी किमु सुधारसः ॥ ३४३ ॥
चक्रवाकाविवोरोजौ कटिः सिंहस्य दृश्यते । मुषितं सर्वमप्येतदनयैव जगत्किल ॥ ३४४ ॥ (त्रिभिर्विशेषकम्) ।
काचिदाह मुखं पद्ममधरो बिम्बमप्यदः । नीलोत्पले च नयने गल्लौ नारङ्गके इमे ॥ ३४५ ॥
दाडिमे किमु वक्षोजौ का नामेयं लता किल । भिन्नभिन्नभवत्पुष्पा भिन्नभिन्नभवत्फला ॥ ३४६ ॥
अनयोः सुरतं धन्यं पुंस्त्वं स्त्रीत्वं च बिभ्रतोः । पिबतोर्व्यत्ययेनैवाधरासवमहर्निशम् ॥ ३४७ ॥
इत्थं पौराङ्गनावाचः शृण्वन् हर्षमवाप्नुवन् । ययौ सभायां स पितुः कालसंवरभूपतेः ॥ ३४८ ॥
दूरतो विनयात् कुर्वन् पतनोत्पतनानि सः । आगत्य प्रणनामोच्चैः पितुः पादौ प्रमोदभाक् ॥ ३४९ ॥
पिताऽपि हस्तस्पर्शेन पृष्ठौ प्रेमभरं वहन् । पप्रच्छ सकलां वार्तां लाभषोडशकोद्भवाम् ॥ ३५० ॥

उवाच सोऽपि विनयात् नम्रोऽहङ्कारवर्जितः । यथाभूतां किंवदन्तीं प्राप्तं वस्तु प्रदर्शयन् ॥ ३५१ ॥
भाग्यातिशयमालोक्य खेचराणामधीशिता । सम्प्राप परमानन्दं तस्य पुण्यार्थजन्मनः ॥ ३५२ ॥
उपविश्य पितुः पार्श्वे क्षणं प्राप्याऽनुशासनम् । उत्तस्थौ मातृचरणप्रणामाय कृतत्वरः ॥ ३५३ ॥
गत्वाऽथ मातृसदने चरणौ प्रणनाम सः । मातुः पार्श्वे निषसाद तदर्पितशुभासने ॥ ३५४ ॥
तस्या अग्रेऽपि सकलां वार्तामचकथन्मुदा । क्रियमाणा शुभा वार्ता नवीनेव भवेद्यतः ॥ ३५५ ॥
ददौ कनकमालाऽपि मद्द्रव्याधिवासितम् । मोदकादिकसद्भक्ष्यं ताम्बूलं पञ्चगान्धिकम् ॥ ३५६ ॥
अङ्गरागं च सद्यस्कं मृगनाभ्यादिभावितम् । भक्षयन्नङ्गरागं च कुर्वन् स मुमुदेतराम् ॥ ३५७ ॥ ( युग्मम् )
अथ सर्वाङ्गसौभाग्यं मणिकोटीरमौलिकम् । अष्टमीचन्द्रवद्भालं लसत्कुण्डलमण्डितम् ॥ ३५८ ॥
हेमकन्दलरक्तोष्ठं चन्द्रज्योत्स्नासमस्मितम् । प्रसूतिप्रमाणनेत्रमुत्फुल्लापीनगल्लकम् ॥ ३५९ ॥
ताम्बूलसौरभासारं वर्पटाननपङ्कजम् । लुठत्कण्ठलताहारं परिघोपमबाहुकम् ॥ ३६० ॥
दृष्ट्वा कनकमाला तं क्षणं कामार्दिताऽभवत् । चिन्तयामास चित्ते च विकल्पान् कामसम्भवान् ॥ ३६१ ॥
यद्यनेन मया यूना वर्द्धितेन मयैव हि । आ जन्मतः पालितेन लालितेन च सर्वदा ॥ ३६२ ॥
भोगाः न भुक्तास्तदहो गतं यौवनमुल्लसत् । विफलं राज्यसम्पच्च सकलाऽपि निरर्थिका ॥ ३६३ ॥

१ यथार्थाम् । २ वार्ताम् । ३ विद्रुम ।

अधरः पीयते नाऽस्य पाय्यते नैव मामकः । गाढालिङ्गनपूर्वं च वक्षो नो पीड्यते मिथः ॥ ३६४ ॥
चुम्बं चुम्बं मिथो वक्त्रं नेत्रे नीलोत्पले अपि । नीरन्ध्रं नैव सुप्येत कृत्वा सुरतमुद्भटम्[1] ॥ ३६५ ॥
वृथेदं जीवितं सर्वमरण्यसुमवन्मम । कृपणस्वर्णवत् कूपछायेवैवमाचिन्तयत् ॥ ३६६ ॥
क्षणादुत्थाय कामश्च ययौ स्वस्मिन् गृहे तदा । गते च तस्मिन् सहसा मूर्च्छामाप नृपप्रिया ॥ ३६७ ॥
अथ दास्यः समाजग्मुरुपायांश्च सहस्रशः । चक्रुर्मूर्च्छापहाराय जलासेकादिकान् क्षणात् ॥ ३६८ ॥
मूर्च्छापगमे सा पृष्टा दासीभी रोगकारणम् । नोवाच च परं किञ्चिदवाच्यं तत्किमुच्यते ॥ ३६९ ॥
दिने दिने श्यामपक्षे कलेव शिशिरत्विषः । क्षयमाप न भुंक्ते स्म न सुष्वाप कदापि हि ॥ ३७० ॥
राज्ञापि सा भृशं पृष्टा नाऽभापिष्ट च मौनिनी । भिषग्वरान् समाहूय दर्शयामास तां प्रति ॥ ३७१ ॥
विरहव्यथाऽजानाना न ते प्राहुर्मनीषिणः । सति भर्तरि पार्श्वस्थे कथं सेति विचारतः ॥ ३७२ ॥
स किंकर्तव्यतामूढो यावत्तिष्ठति पर्षदि । तावत् प्रणाममुद्दिश्याऽऽययौ प्रद्युम्नकः प्रगे[2] ॥ ३७३ ॥
प्रणामव्यग्रं तं राजोवाच वाचं सुधाश्रवाम् । रे बाल ! किं न जानासि मातरं दुःखितां निजाम् ॥ ३७४ ॥
याहि पृच्छ च वपुषः समाधानं प्रसूं[3] प्रति । येन सा प्रीतिमाप्नोति दृष्ट्वा पुत्राननाऽम्बुजम् ॥ ३७५ ॥
इत्युक्ते विनयी प्राह संयोजितकरद्वयः । न जानामि स्म रोगार्तां मातरं क्रीडितप्रियः ॥ ३७६ ॥

---

१ उत्कटम् । २ प्रभाते । ३ मातरम् ।

अथ तातगिरा जानन् याम्यहं त्वरितक्रमः । प्रक्ष्यामि पाटवं सद्यः कारयिष्ये प्रतिक्रियाम् ॥ ३७७ ॥
सद्यः समाधियुक्तां तां कारयिष्ये भिषग्वरैः । मैव चिन्तापरा यूयं भवत क्षणमप्यतः ॥ ३७८ ॥
इत्युक्त्वा स समुत्थाय ययौ मातुर्गृहं प्रति । प्रश्नं चकार वपुषः पाटवस्यौचितीकृती ॥ ३७९ ॥
ततोपसार्य दास्यादीन् परीवारजनान्निजान् । प्रद्युम्नमाह कनकमाला दृष्टान्तदानतः ॥ ३८० ॥
केनाचिद् भोगिना पुंसा सहकारतरुर्वरः । उप्तः स्वकीयोपवने पायितश्च घटोदकैः ॥ ३८१ ॥
शीतकाले च दृत्यादिकरणेन सुरक्षितः । वर्षैः कियद्भिरेव स वर्द्धमानोऽभवत्फली ॥ ३८२ ॥
तस्याम्रस्य च न भोग स प्राप्नोति पुमान् किल । अन्ये च कुर्वते भोगं यथाकाममहर्निशम् ॥ ३८३ ॥
तस्य पुंसः कियद्दुःख भवतीति विदांवर ! । विचार्य वद मा सद्यस्तदोवाच हरेः सुतः ॥ ३८४ ॥
सर्वोऽपि लोको जानाति महद्दुःख भवेदिति । अत्रार्थे किं च वक्तव्य नास्ति पृच्छाम्यहं परम् ॥ ३८५ ॥
दृष्टान्तोपनयेनाह बुध्ये तेन वदाम्ब ! तम् । तदा निःश्वस्य सा प्राह शृणु वृत्त यथाभवम् ॥ ३८६ ॥
नास्म्यहं जननी मुख्या तेन त्वं नास्ति मे सुतः । न कालसंवरो राजा पिता त्वं च न तत्सुतः ॥ ३८७ ॥
किंतु त्वं गच्छताऽनेन प्राप्तष्टङ्कशिलोपरि । गृहीत्वा सोऽर्पयामास प्रेम्णा मां पुष्टये तव ॥ ३८८ ॥
त्वं मया पाल्यमानश्च वृद्धिं नीतोऽशनादिभिः । यौवन प्राप्तवान् रम्य रमणीजनमोहनम् ॥ ३८९ ॥

तवाम्रस्य तरोर्भोगं न लभेऽहं कदाचन । लभेरन् वनिता अन्याः पथिकय इव भूरिशः ॥ ३९० ॥
अतोऽहं दुःखिनी गाढं न भवेयं कथं वद । दृष्ट्वा त्वद्रूपसंपत्तिं कामो मां बाधतेऽधिकम् ॥ ३९१ ॥
एकशो भुंक्ष्व तद्भोगान् मया सह चिरेप्सितान् । गाढालिङ्गनदानेनाऽपनयाऽयोगजां व्यथाम् ॥ ३९२ ॥
किं चेहास्त्युत्तरश्रेण्यां नाम्ना नलपुरं पुरम् । गौरीवंशाब्धिशीतांशुस्तत्राऽस्ति निषधो नृपः ॥ ३९३ ॥
तस्याहं राजराजस्य पुत्री प्रणयभाजनम् । पुत्रोऽस्ति च महाबाहुः नैषधिर्नाम विश्रुतः ॥ ३९४ ॥
गौरीनाम्नीं महाविद्यां ददाति स्म स्वयं पिता । पाणिग्रहणादर्वाग् मां पुत्रीप्रेम्णा गरीयसा ॥ ३९५ ॥
कालसंवरनामा च पाणिग्रहणपर्वणि । ददौ प्रज्ञप्तिकां विद्यां पत्नीप्रेम्णा गरीयसा ॥ ३९६ ॥
संवरः खेचराऽधीशो नान्यामिच्छाति कामिनीं । मधुपो मालतीं मुक्त्वा किमिच्छेत् कुसुमान्तरम् ॥ ३९७ ॥
विभीया मा पितुस्तस्मात् कृत्रिमात् त्वं तथैव हि । भ्रातृवर्गाच्च ते प्राप्य विद्ये मत्तो जयी भव ॥ ३९८ ॥
विद्याद्वयं प्रदास्यामि सर्वविद्यातिशायि तत् । साधयित्वा भवाऽजय्यः खेचराणां महीभृताम् ॥ ३९९ ॥
एवंविधप्रौढऋद्धिः त्वां भजामि भजस्व माम् । एवं भवेत् प्रेमवृद्धिरावयोः स्थेयसी चिरम् ॥ ४०० ॥
अथाऽश्राव्यं वचः श्रुत्वा चिन्तयामास चेतसि । सतीसुतः सतां धुर्यः प्रद्युम्नः शुद्धवंशजः ॥ ४०१ ॥
पश्चाद्योग्यं करिष्यामि स्वकुलस्य प्रभाकरम् । इत्यब्रवीच्च शनकैः द्वे विद्ये देहि मां पुनः ॥ ४०२ ॥

१ वियोगजाम् ।

विद्याद्वयं ददात्येषा स्वार्थिनी ग्राह्यमेव तत् । वर्चस्कादपि कनकं ग्राह्यमेव न संशयः ॥ ४०३ ॥
त्वद्वचश्च करिष्येऽहमुचितं प्रेमभाक् त्वयि । सिद्धकार्योऽहमिति सा ददाति स्म च ते उभे ॥ ४०४ ॥
असाधयच्च स सद्यो विद्याद्वयमपि क्षणात् । न हि भाग्यवतां दूरे विद्यामन्त्रादिसिद्धयः ॥ ४०५ ॥
ततश्च सा ब्रवीति स्म भोगान् भुङ्क्ष्व मया चिरम् । वचो भवेद् दृषल्लेखसदृश सज्जनोचितम् ॥ ४०६ ॥
तदोवाच श्रियाः सूनुः माता भवसि पालनात् । आ जन्मतो जगत्ख्याता गौरीवशपितुः सुता ॥ ४०७ ॥
भवसीदानीमाचार्या विद्याद्वयसमर्पणात् । अवाच्यं तत्त्वया वाच्यं नैव सद्वंशजातया ॥ ४०८ ॥
इहलोके जगन्निंद्यं कर्म किं क्रियते मया । परलोके तु सुचिरं श्वभ्रपाताय केवलम् ॥ ४०९ ॥
त्वद्वचश्च करिष्येऽहमुचित जल्पवानिति । मिथ्यावादोऽपि नो कार्यो न ह्येतदुचितं यतः ॥ ४१० ॥
इत्युक्त्वा सहसोत्थाय जगाम स पुराद्बहिः । कालक्षेपो हि सत्पुसा क्रियते पापकर्मण ॥ ४११ ॥
उत्थाय तस्मिन् सहसा गते साऽथ निराशकृत् । हा हा विद्याद्वय लात्वा वञ्चयित्वा च मां गतः ॥ ४१२ ॥
ततोऽहमेन तत् कुर्वे न जीवति यथा कुधीः । इति साश्चिन्त्य सा दुर्धीर्हृद्विदार्य नखै स्वकम् ॥ ४१३ ॥
पूच्चकार भृश तारस्वरा मायाविनी तदा । यथा परिजनः सर्वो मिलति स्म क्षणादपि ॥ ४१४ ॥
विमातृजास्तनूजास्ते नानाशस्त्रकरा द्रुतम् । आययुः किं किमिति च पृच्छन्तः स्वां विमातरम् ॥ ४१५ ॥
तदा कनकमालाऽऽह रुदती गद्गदस्वरम् । भ्रातृकल्पेन युष्माकं यौवनोन्मत्तताजुषा ॥ ४१६ ॥
कृत कर्म जगन्निंद्यं मया भोग चिकीर्षता । निषेधत्या सतीत्वेन प्रार्थना तस्य पाप्मनः ॥ ४१७ ॥ ( युग्मम् )

श्रुत्वा ते प्राप्तसमया जग्मुस्तत्र धृतायुधाः । यत्र प्रद्युम्न आसीनो हसन्नस्ति त्रियुद्धकृत् ॥ ४१८ ॥
अरे रे किं कृतं कर्म त्वया मात्रा सहेदृशम् । प्राप्नुहि त्वं फलं सद्यस्तस्य पापातिशायिनः ॥ ४१९ ॥
इत्युक्त्वा ते घनं चक्रुः प्रहारान् शस्त्रसंभवान् । परं ते विफला जाता ग्राण्णि तस्मिन्निव प्रभौ ॥ ४२० ॥
एकोऽपि विक्रमी सर्वान् निहन्ति स्म क्षणादपि । कालसंवरतनुजान् मृगारिरिव तान् मृगान् ॥ ४२१ ॥
तदा पुत्रवधं श्रुत्वा ययौ काल इव क्रुधा । कालसंवरखेचराऽधीशोऽपि स्फुरिताधरः ॥ ४२२ ॥
प्रद्युम्नोऽथ जिगायाशु तं कालं कालदुर्धरम् । तस्याः सकाशाद्विद्याभ्यां प्राप्ताभ्यां कल्पितास्त्रकः ॥ ४२३ ॥
दृष्ट्वा तस्य स शौण्डीर्यं सिंहस्येव सुदुर्लभम् । चमच्चकार हृदये नानासंकल्पकल्पने ॥ ४२४ ॥
ईदृक्षे कुलजातिभ्यां शुद्धे निर्मलवंशजे । न घटेतेदृशं कर्म मातृभोगस्पृहादिकम् ॥ ४२५ ॥
विद्याश्च न हि तिष्ठन्ति मातृभोगादि वाञ्छति । पुरुषे सिंहिकादुग्धं मृदः पात्रे यथा चिरम् ॥ ४२६ ॥
एवं विचारचतुरं ज्ञात्वा संवरभूभुजम् । विभ्यत् पितृवधात् पापात् प्रद्युम्नोऽपि जगाद तम् ॥ ४२७ ॥
हे राजन् ! विमृश स्वान्ते कर्मेदृग् घटते कथम् । मयि त्वत् कुलसंभूते विचारचतुराशये (य) ॥ ४२८ ॥
मोत्सुकोभव राजेन्द्र ! वृथा युध्यस्व मा मया । अविमृश्य कृतं कार्यमनुतापाय जायते ॥ ४२९ ॥
उक्तं च—सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥४३०॥
वृत्तान्तं पृच्छ मां सर्वं श्रुत्वा कुर्या यथोचितम् । एकस्या वचसा तस्याः किं करोषि वृथा बलम् ॥ ४३१ ॥
'उक्तं च—मा होउ सुयग्गाही जं न वि दिट्ठंतु होइ पच्चक्खे । पच्चक्खे वि हु दिट्ठे जुत्ताजुत्तं विचारिज्जा ॥ ४३२

इत्युक्ते स्वस्थचित्तोऽभूत् पप्रच्छ स्वच्छमानसः । वार्तां कथय मे तथ्यां श्लथय क्रुधमात्मनः ॥ ४३३ ॥
उवाच सर्ववृत्तान्त यथाभूतं स मूलतः । प्रत्ययार्थं मदुक्तस्य गत्वा पश्य प्रियोरसि ॥ ४३४ ॥
नखोल्लेखान् कृतान् सद्यस्तया कनकमालया । मायाविन्या पराभूत्यै मम वाग्द्रोहकारिणः ॥ ४३५ ॥
इत्युक्ते च धियां धाम्ना तेन स त्वरित ययौ । पार्श्वे प्रियायाः कूर्पासमपास्योरःस्थलाद्द्रुतम् ॥ ४३६ ॥
पश्यति स्म नखोल्लेखास्तया स्वेनैव पाणिना । कृतान् दृष्ट्वा च समाप प्रत्यय तस्य वाचि सः ॥ ४३७ ॥
आगत्य सानुतापोऽथाऽवदच्च हरिनन्दनम् । क्षमस्वागो मदीय भो अविमृश्य कृत मया ॥ ४३८ ॥
सत्यव्रतधुरीणस्त्व वर्तसे साधुशीलयुक् । पांशुला मे प्रिया नित्यमत एव मृषावदा ॥ ४३९ ॥
वदन्नित्यग्रहीद् हस्ते भृश सांत्वयति स्म तम् । आगच्छ त्व गृहे तिष्ठ निर्भयः प्राणवल्लभः ॥ ४४० ॥
इत्याद्युक्त्वा तमनैषीद् गृहं स खेचरेशिता । प्रद्युम्नश्चिन्तयामास स्थातव्यमथ किं गृहे ॥ ४४१ ॥
सह मात्रा पर वैर पितास्ति किल तद्वशः । तत् स्थातुमिह नो युक्त ससर्प्ये इव निश्चितम् ॥ ४४२ ॥
इति चिन्तापरो यावत् तिष्ठति व्यग्रमानसः । तावदायाद्दपिनाम्ना नारदोऽवसरागमः ॥ ४४३ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु–लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललित चकार, सर्गोऽगमत् किल मुनिप्रमितो विरामम् ॥ ४४४ ॥

इति श्रीप्रद्युम्नचरिते महाकाव्ये प्रद्युम्नयौवनप्राप्ति–षोडशलाभप्राप्ति–मातृपितृसहकलह—नारदागमनवर्णनो नाम सप्तमः सर्गः ॥

## अष्टमः सर्गः ।

आयातमथ तं दृष्ट्वोत्तस्थिवान् विनयप्रियः । पादयोः प्रणतिं चक्रे मुनिरप्याशिषं ददौ ॥ १ ॥
मिलाऽऽशु त्वं मिलाऽऽशु त्वं पितृभ्यां सह बालक ! । चिराद् विरहतप्ताभ्यामिति श्रुत्वा जगौ मुनिम् ॥ २ ॥
पितृमातृगृहस्थायाऽनौचितीमाशिषं किमु । दत्से मह्यं मुने ! ज्ञातं तन्मया कौशलं तव ॥ ३ ॥
मुनिरूचे हसित्वाऽथ पितरावपि वेत्सि न । तत् किं जानासि रे बाल ! हसन्नसि च मां प्रति ॥ ४ ॥
नेमौ ते पितरौ वत्स ! स्वर्णसकालसंवरौ । किं तु ते रुक्मिणीकृष्णौ द्वारिकापूर्निवासिनौ ॥ ५ ॥
कथं कथमिति प्रोक्ते प्रद्युम्नेन तदा मुनिः । सर्वं वृत्तान्तमाचख्यौ सीमंधरजिनोदितम् ॥ ६ ॥
नारदोक्तं वचः श्रुत्वा वाक्यं च कनकस्रजः । सस्मार स धृतं चित्ते तयोः संवादमासदत् ॥ ७ ॥
नारदः पुनराचख्यौ शृणु वत्स ! वचो मम । कृष्णस्य पत्नी भामाऽस्ति मुख्याऽग्रमहिषीषु सा ॥ ८ ॥
एकदा तद्गृहं याते मयि साऽनादराऽजनि । ततोऽहं खेदमापन्नो गतः कुण्डिनपूर्वराम् ॥ ९ ॥
भीष्मराजसुतां तत्र रुक्मिणीं दृष्टवानहम् । अपूर्वरूपसम्पन्नां पौलोमीभगिनीमिव[1] ॥ १० ॥
चित्रपट्टस्थितां तां च कृत्वाऽदर्शयमच्युतम् । ततस्तद्रूपसंमूढः कृष्णस्तां परणीतवान् ॥ ११ ॥

१ इन्द्राणी ।

महदस्ति चरित्रं तद् संक्षेपादवदं तव । ज्ञास्यसि स्वयमेव त्वं गतः पितृगृहं निजम् ॥ १२ ॥
पिता तज्ज्येष्ठबन्धुश्च समबन्धं तवाऽग्रतः । आख्यास्यतश्चरित्र तन्महदाश्चर्यकारणम् ॥ १३ ॥
ततोऽस्ति सत्यभामायास्तव मात्रा तया सह । स्पर्द्धाऽनुक्रमतो वर्द्धमाना स्त्रीणां स्वभावतः ॥ १४ ॥
गुर्विण्योश्च तयोरासीदन्यदा स्पर्द्ध उत्कटः । दुर्योधननृपं माहाऽऽगत गेहे रमापतेः ॥ १५ ॥
सत्यभामाऽस्ति(ऽऽह) त्वत्पुत्री देया मम सुताय सा । रुक्मिण्याह भवत्पुत्रीं परिणेष्यति मे सुतः ॥ १६ ॥
दुर्योधननृपः प्राह सकष्टे पतितस्तयोः । विचार्य च धियां धाम ते द्वे सन्तोषयन्नपि ॥ १७ ॥
पुण्यवत्या यया पुत्रः प्रथमं प्रसविष्यते । तस्याः पुत्राय दातव्या मया पुत्रीत्यभिग्रहः ॥ १८ ॥
सत्यभामा पुनः प्राह स्पर्द्धामुदितमानसा । यस्यास्तनुजः प्रथमं परिणेष्यति कन्यकाम् ॥ १९ ॥
तस्यै स्वमूर्द्धजा देया अन्ययाऽनूढपुत्रया । अस्त्वावयोः पण इति साक्षी चात्र हरिर्हली[1] ॥ २० ॥
दुर्योधनश्च भूपालः इत्थं विवदमानके । ते द्वे अपि गते गेहे श्रान्ते शब्दोपवेशतः ॥ २१ ॥
भविष्यत्यथ भामायाः सुतस्योपयमो दिनैः । कियद्भिर्भानुसंज्ञस्य भानुस्पर्द्धकृतेनघः ॥ २२ ॥
दुर्योधनमहाराजपुत्र्या सह ततः किल । त्वन्मात्रा मूर्द्धजा देया भविष्यन्ति पणाग्रहात् ॥ २३ ॥
तेन दुःखेन नितरां क्लिश्यमानामहं पुनः । दृष्ट्वा तद्दुःखसंभागी जातः, पुत्रीव मेऽस्ति सा ॥ २४ ॥

1 हरिर्बली इत्यपि पाठ ।

साऽऽह मां दुःखिनी वाचं पाणिग्रहणकारणात् । पितेवाऽसि च देवर्षे ! त्वमेव दुहितुर्मम ॥ २५ ॥
मग्नां दुःखसमुद्रे मां समुद्धर दयानिधे ! । विजयार्द्धगिरौ गत्वा तनूजं मे समानय ॥ २६ ॥
ततश्चागामहं वत्साऽऽगच्छ दुःखमपाकुरु । गर्भादिदुःखधरणाज्जननी सैव ते किल ॥ २७ ॥
जननी दुःखिता चेत् स्यात् षोडशाब्दे सुते त्वयि । किमन्तरं जातपुत्राऽपुत्रयोस्तत् स्त्रियोः पुनः ॥ २८ ॥
सपत्नीसंकटाज्जातं स्त्रीणां दुःखं महत् पुनः । वक्तुं न शक्यते जिह्वाशतैरपि वचास्विभिः ॥ २९ ॥
विलम्बः क्षमते नैव सत्वरो भव साम्प्रतम् । निष्पन्ने तत्र वीवाहे गतादप्यगतं वरम् ॥ ३० ॥
इत्थं मुनिवचः श्रुत्वा ज्ञाततत्त्वो विवेकवान् । गत्वा समग्रमाचख्यौ वृत्तान्तं कालभूभुजः ॥ ३१ ॥
सर्वे स्युरेकमतयो दक्षा इति निदर्शनात् । सोऽप्याह विमृशंश्चित्ते विचारचतुराशयः ॥ ३२ ॥
सुन्दरं वत्स ! याहि त्वं मातुर्दुःखमपाकुरु । सत्पुत्राणां व्रतं ह्येतन्मातुर्दुःखनिराकृतिः ॥ ३३ ॥
आगच्छेरत्र शीघ्रं च सर्वं राज्यं तवास्ति हि । अज्ञानाचरितं नैव स्मरेरुपकृतिं स्मरेः ॥ ३४ ॥
अनुशिष्येति तं राजा प्रेषयामास सत्वरम् । प्रज्ञप्त्यै पुनराचख्यौ विमानं कुरु देवते ! ॥ ३५ ॥
अचिन्त्यशक्तयो देवाः इति सा निर्ममे क्षणात् । विमानं मोहनं देवमनसामपि सम्भ्रमम् ॥ ३६ ॥
वहन्नासिकचरणं पुरस्कृत्याऽऽरुरोह सः । नारदोऽपि च तत्पार्श्वे सहायः समुपाविशत् ॥ ३७ ॥
दुर्गाकाकरुतादीनि गतं नीलादिपक्षिणः । अनुकूलानि सर्वाणि तस्याऽऽसंश्चलतः सतः ॥ ३८ ॥

नारदो दर्शयामास पर्वतान् तान् नवान् नवान्। वृक्षांस्तस्यौषधीश्चापि सप्रभावा अनेकशः ॥ ३९ ॥
देवापगादिसिन्धूंश्च प्रसरद्वारिवीचिकाः। देशांश्च राजधानीश्च पत्तनानि महान्ति च ॥ ४० ॥
वापी–कूप–तटाकानि तीर्थायितजलाशयान्। अनेकपशुजातीश्च पक्षिजातीश्च नामतः ॥ ४१ ॥ (त्रिभिर्विशेषकम्)
एवं क्रीडापरो गच्छन् स ददर्श नगोत्तमम्। तदा पप्रच्छ देवर्षिं किं नामाऽयं गिरिर्गुरो ! ॥ ४२ ॥
अवादीन्नारदो हृष्टो नाम्ना शत्रुञ्जयो गिरिः। वत्साऽयं आदिदेवस्य प्रासादेन विभूषितः ॥ ४३ ॥
अस्मिन् दृष्टेऽपि पापानि प्रलयं यान्ति तत्क्षणात्। यथा मृगाधिपे दृष्टे मृगाः यान्ति सहस्रशः ॥ ४४ ॥
सिद्धा अनेके मुनयो सेत्स्यन्त्यपि च भूरिशः। सिध्यन्ति शतशश्चाऽस्मिन् सिद्धक्षेत्रम्–अयं ततः ॥ ४५ ॥
प्रणाम कुरु तेन त्वं सांप्रत सत्वरो ह्यसि। मातृकार्यं वरं कृत्वा पुनर्यात्रापरो भवेः ॥ ४६ ॥
इत्थं मुनेर्वचः पीत्वा स प्रणामपरोऽभवत्। विमान प्रेरयामासाऽग्रे गन्तु जन्मभूत्सुकः[1] ॥ ४७ ॥
यतः—जणणी य जन्मभूमी पच्छिमनिद्दा सुभासियागुट्ठी। मणइट्ठं माणुस्स पचावि दुःखेहिं मुचति ॥ ४८ ॥
त्वरित त्वरित गच्छन् विमानेन महर्द्धिना। पश्यति स्म पुनः प्रोच्चैः पर्वत पुरतः पृथुम् ॥ ४९ ॥
पुनः पप्रच्छ बालोऽयं वप्तारमिव[2] नारदम्। कोऽयं गुरो ! गिरिः श्यामः सजलोऽब्द इवाऽनघः ॥ ५० ॥
मुनिः प्रोवाच जानीहि नाम्ना रैवतकाऽचलम्। दर्शनं स्पर्शनं चाऽस्य पूजनं मङ्गल परम् ॥ ५१ ॥

१ मातर्युत्सुक। २ जनकमिव।

अनेकानि च चैत्यानि सान्ति तीर्थकृतामिह । स्वर्ग-रत्नमयान्यर्हद्बिम्बान्यपि सहस्रशः ॥ ५२ ॥
अनेकैः शिखरैः कृत्वा शिखरी सार्थनामकः । अन्ये तु रूढिमात्रेण ख्याताः शिखरिणः खलु ॥ ५३ ॥
भवत्पितुर्हरेर्भ्रातुः श्रीमन्नेमिजिनेशितुः । कल्याणकत्रयी वत्स ! भाविन्यत्र महर्द्धियुक् ॥ ५४ ॥
कथिता नमिनाथेन जानेऽहं तेन रूढितः। पर्वतोऽयं नमस्कार्यो दूरतोऽप्यघनाशनः ॥ ५५ ॥
अनेकवृक्षसंपन्न औषधीभिश्च राजितः । सुराऽसुरैः पूज्यमानजैनबिम्बशतैर्युतः ॥ ५६ ॥ ( युग्मम् )
अग्रे गतश्च महतीं पश्येः शोभां गिरेर्गुरोः । सहस्राम्रवणोद्भूतां लक्षाम्रवणसंभवाम् ॥ ५७ ॥
इति देवर्षिणा प्रोक्तः कृताञ्जलिपुटोऽथ तम् । ननाम परया भक्त्या तद्भवे सिद्धिभाग् यतः ॥ ५८ ॥
अग्रे गच्छन् ददर्शोच्चैः सैन्यं हास्तिशतैर्युतम् । जङ्गमैरद्रिभिरिव घनैर्भूमिस्थितैरिव ॥ ५९ ॥
वाहैरनेकजातीयैर्गरुत्मद्भिरिव स्फुटम् । वरूथमण्डितरथैश्चलद्भिः मन्दिरैरिव ॥ ६० ॥
नानावर्णपटावासभूषितं न च दूषितम् । अतसीवनमप्येतद् वनं कुसुमितं किमु ॥ ६१ ॥
प्रपच्छ नारदं प्रीत्या दृशोः फलमवाप्नुवन् । किमिदं दृश्यते साधो ! साधुवाग् नारदोऽवदत् ॥ ६२ ॥
पूर्वं श्रीवृषभस्वामिसुतोऽभूत् कुरुसंज्ञकः । अभिधानेन यस्याऽभूत् कुरुक्षेत्रं जगत्प्रथम् ॥ ६३ ॥
तस्य पुत्रोऽभवद्धस्ती तन्नाम्ना हास्तिनापुरम् । अभवद्धास्तिसन्तानेऽनन्तवीर्यो नृपोऽजानि ॥ ६४ ॥

---

मेघैः । २ अश्वैः ।

कृतवीर्यसुतस्तस्य सुभूमश्चक्रभृत् ततः । ततश्चासङ्ख्यभूपेषु व्यतीतेषु तदन्वये ॥ ६५ ॥
शान्तनुर्नृपतिर्जज्ञे तस्याऽभूतां प्रिये उभे । गङ्गा–सत्यवती–नाम्न्यौ गङ्गायास्तनयोऽजनि ॥६६॥
गाङ्गेयगौरदेहश्रीर्गाङ्गेयो नामतः शुचिः । आजन्मब्रह्मचर्येण नाम्ना भीष्मश्च पप्रथे ॥ ६७ ॥
सत्यवत्याः सुतौ जातौ सत्यव्रतमहाधनौ । चित्राङ्गद–चित्रवीर्यौ चित्रवीर्यस्य नु (तु) प्रियाः ॥ ६८ ॥
अम्बिकाऽम्बालिकाम्ऽबेति तिस्रस्तासां सुताः क्रमात् । धृतराष्ट्रश्च पाण्डुश्च विदुरश्चेति नामतः ॥ ६९ ॥
धृतराष्ट्रो गताक्षत्वाद् राज्यानर्होऽभवत्ततः । राज्य बभार तत्पाण्डुः कुरुवंशाऽब्धिचन्द्रमाः ॥ ७० ॥
पर्यणैषीत्सुता अष्टौ राज्ञः सुबलजन्मनः । गान्धारराजशकुनेः गान्धारीप्रमुखाः शुभाः ॥ ७१ ॥
शतं सुताश्च संजाता धृतराष्ट्रस्य भूपतेः । दुर्योधनादयो योधाः परेषा चण्डतेजसः ॥ ७२ ( अर्थतो युग्मम् )
पाण्डोर्बभूवतुः पत्न्यौ कुन्ती माद्री च नामतः । कुन्त्या जातास्त्रयः पुत्रास्तेषामाद्यो युधिष्ठिरः ॥ ७३ ॥
द्वितीयस्तु मरुत्पुत्रः तृतीयोऽर्जुनसञ्ज्ञकः । माद्र्यामभूतां द्वौ पुत्रौ नकुलःप्रथमस्तयोः ॥ ७४ ॥
सहदेवो द्वितीयस्तु वृषस्कन्धो महौजसः । पाण्डोः सुता अमी पञ्च पाण्डवा इति विश्रुताः ॥ ७५ ॥
यशस्विनो महावीर्या वचोऽतिगगुणान्विताः । लोकोत्तरचरित्रास्ते लोकत्रितयविश्रुताः ॥ ७६ ॥
पाण्डुना दत्तराज्यस्तु राज्य शास्ति युधिष्ठिरः । हस्तिनापुरसंज्ञस्य दधानो नाम सान्वयम् ॥ ७७ ॥
नतानेकनराधीशमौलिमाल्यार्चितक्रमः । इन्द्रप्रस्थ पुरं शास्ति दुर्योधनमहीपतिः ॥ ७८ ॥

१ गङ्गाजलम्, सुवर्णं वा ॥

क्रमाद् दुर्योधनो जातोऽमर्षणः पाण्डुजन्मसु । मार्जार इव तद्राज्यदुग्धपानाभिलाषुकः ॥ ७९ ॥
छिद्रं विलोकमानश्च राज्यग्रहणहेतवे । न प्राप च परं किंचिद् यतस्ते बलशालिनः ॥ ८० ॥
ततोऽसौ रमयामास युधिष्ठिरमहीपतिम् । देवनैः कुटनिर्माणैः दुर्योधननृपश्चिरम् ॥ ८१ ॥
क्रमाद् हारितसर्वस्वो द्रौपदीमप्यहारयत् । पणीचकार तदनु भ्रातॄनपि महामनाः ॥ ८२ ॥
हारयामास तांश्चापि गान्धारेयोऽथ तं जगौ । मुञ्च मे पृथिवीं सर्वां हारितां द्रौपदीं तथा ॥ ८३ ॥
याहि बन्धूनपि त्यक्त्वा वनमेकः परिभ्रम । ऊचिरे तं च सामन्ता नैवं वाचमुदाहर ॥ ८४ ॥
हारितामपि पाञ्चालीं सतीरत्नं समर्पय । अन्यथाऽनर्थ एवाऽयं तव राजन् ! उपस्थितः ॥ ८५ ॥
चत्वारो भ्रातरश्चामी रक्षिता अपि दुःसहाः । पञ्चानना इव तथा राज्यवेश्मानि भोगिनः ॥ ८६ ॥
तेनाऽमी यान्तु पञ्चापि वनं द्वादशवत्सरान् । इत्युक्ते धार्तराष्ट्रोऽयमेवमस्त्विति चावदत् ॥ ८७ ॥
ततस्ते मातरं कुन्तीं लात्वा च द्रुपदात्मजाम् । वनं यान्ति स्म यशसा बलेन च किलान्विताः ॥ ८८ ॥
अथ दुर्योधनः शास्ति हस्तिनापुरमेदिनीम् । भृशं मानधनो बन्धून् जित्वा पञ्चाऽपि पाण्डवान् ॥ ८९ ॥
भानोः कुमारात् त्वं वृद्ध इति तुभ्यं प्रकल्पिताम् । दातुं निजां दुहितरं त्वां तु देवो जहार तत् ॥ ९० ॥
उद्वाहितुं कुमाराय भानवे यात्यसौ बली । दुर्योधनमहाराजः पुत्रीमुदधिसंज्ञकाम् ॥ ९१ ॥ ( युग्मम् )
इति साधुवचः श्रुत्वा प्रद्युम्नोऽथ कुतूहली । उवाच नारदं तिष्ठ त्वमत्रैवेति याम्यहम् ॥ ९२ ॥

दृष्ट्वा सैन्यं समायामि कौतुकी नालसः खलु । विलम्बं मा कृथा वत्स ! समागच्छेश्च सत्वरम् ॥ ९३ ॥
इत्युक्तो देवमुनिना चचाल चपलः स नु(तु) । भोजनं कुरुते यत्र जन्ययात्रा मनोहरा ॥ ९४ ॥
मषीपुञ्ज इव श्यामो लम्बोष्ठः करभः किमु । लम्बोदरो गणेशः किं पीताऽक्षश्च किमोतुवत् ॥ ९५ ॥
वक्रभालो बृहद्दन्तो वल्लीवेष्टितमूर्धजः । आजगाम किरातस्य दधद् रूपं विरूपभाक् ॥ ९६ ॥
दुर्योधनमहीनेतुः क्वाऽस्ति वेश्म पटीमयम् । इति पृच्छन् जनैर्हस्यमानो मिलितवृन्दकैः ॥ ९७ ॥
ययौ दुर्योधनो यत्र राजा सिंहासनस्थितः । कार्यव्यग्रोऽस्ति तत्रैव नत्वा चैवमुवाच तम् ॥ ९८ ॥
कृष्णराजाऽऽज्ञयाऽत्रैव तिष्ठामि पथि सुस्थितः । शुल्काधिकारी मुक्तोऽस्मि प्रभुणा मम विष्णुना ॥ ९९ ॥
शुल्कं देहि महाराज ! पश्चाद् व्रज यथारुचि । अन्यथा गमनं नैव भावि ते प्रथमं ब्रुवे ॥ १०० ॥
ततोऽवदद् हसन्नुच्चैर्दुर्योधनमहीपतिः । किं ग्रहीष्यसि शुल्कं त्वं वाजिनो हस्तिनः किमु ? ॥ १०१ ॥
तदा किरातः स प्राह लम्बान् दन्तान् प्रदर्शयन् । न जाने जन्ययात्रायां सारं वस्तु किमस्त्विदम् ॥ १०२ ॥
यत् स्यात्सारतरं वस्तु दीयतां मम तद् ध्रुवम् । तदा दुर्योधनः प्राह प्रायो हास्यप्रियाः नृपाः ॥ १०३ ॥
अस्ति सारतरं वस्तु कन्यकोदधिनामका । सा मह्यं दीयतां सैव नोढोऽस्मि जन्मतो यतः ॥ १०४ ॥
हर्षमाप्स्यति कृष्णोऽपि यतः कृष्णसुतोऽस्म्यहम् । रस्येऽहं भोगसंभोगैरनया सह सन्ततम् ॥ १०५ ॥

१ भाषायां 'जान' इति । २ ओतुबिडाल । ३ ऊढो विवाहित

किरातेनेति च प्रोक्ते सर्वे हास्यपरा बभुः । हसन्ति भाण्डचेष्टायां नैव के हसितप्रियाः ॥ १०६ ॥
पुनः प्रोवाच सहठं किरातो दत्त कन्यकाम् । पश्चाद्यात च सर्वेऽपि नो चेद् यातुं ददामि न ॥ १०७ ॥
इत्युक्ते नृपतिः प्राह भटानाज्ञावशंवदान् । दूरे क्षिपन्तु धृत्वैनं गले ग्रथिलताऽऽकरम् ॥ १०८ ॥
उत्तिष्ठन्ते स्म ते यावत्तथा कर्तुं नृपाज्ञया । युद्धसज्जोऽभवत्तावद् दूरे गत्वाऽवदत् स तान् ॥ १०९ ॥
आयात यूयं के सन्ति मदग्रे युद्धकर्मठाः ? । दर्शयामि बलं सद्यो हसितस्य फलं पुनः ॥ ११० ॥
वदन्निति भटान् सर्वान् मुष्टिघातेन जर्जरान् । कियतां दन्तपातं च चकार स महाबलः ॥ १११ ॥
पश्यतीव हि भूपाले चिल्लो हारलतामिव । कन्यां जहार सद्यस्तां पश्यतामेव रक्षताम् ॥ ११२ ॥
विमाने मुञ्चति स्मैनां भयभीतां सवेपथुम् । उवाच नारदो वत्से ! मा भैषीः वस निर्भया ॥ ११३ ॥
अयं हि पुत्रः श्रीविष्णोः नाम्ना धाम्ना च विश्रुतः । प्रद्युम्नको धियां धाम कामरूपो महायशाः ॥ ११४ ॥
पुराऽस्मै कल्पिता दातुमासीत् पित्रा तवाऽथ च । विद्याधरपुरे मुक्तः सुरेणाऽऽजन्मतोऽपि हि ॥ ११५ ॥
अयं तु रुक्मिणीपुत्रस्तेन त्वज्जनकेन हि । दत्ता भानुकुमाराय सत्यभामाऽऽत्मजन्मने ॥ ११६ ॥
गच्छताऽथ पितुः पार्श्वे ज्ञात्वाऽऽत्मीयां हृताऽसि च । तेन त्वं तिष्ठ निःशंकं मत्पार्श्वे भव सुस्थिता ॥ ११७ ॥
प्रद्युम्नोऽपि किरातस्य रूपं मुक्त्वा स्वरूपभाक् । अभूच्चचाल पुरतो वायुवेगविमानगः ॥ ११८ ॥

१ वशंवदः वशवर्ती ।  २ ग्रथिलता मूर्खता ।

गच्छता तेन ददृशे प्रोच्चैः प्रासादसंततिः । अपृच्छन्नारदं केयं पुरीति विकसन्मनाः ? ॥ ११९ ॥
उवाच नारदो वत्स ! त्वत्पितुः शार्ङ्गिणः पुरी । तस्यामयं स्वर्णकुम्भः प्रासादो गरुडध्वजः ॥ १२० ॥
गरुडध्वजवप्तुस्ते दूरतो दृश्यतेतराम् । समुद्रविजयस्याऽयं प्रासादः सिंहकेतनः ॥ १२१ ॥
उच्चैर्गवाक्षः प्रासादो वसुदेवस्य भूपतेः । पितामहस्य ते वत्स ! गजकेतुर्विराजते ॥ १२२ ॥
जनकस्याग्रजस्याय प्रासादो नीलवाससः । नीलवासोध्वजः प्रोच्चैर्जालकश्रेणिराजितः ॥ १२३ ॥
उग्रसेनमहीभर्तुः प्रासादः कपिकेतनः । भामिन्याः सत्यभामायाः प्रासादो धवलीकृतः ॥ १२४ ॥
विवाहे भानुपुत्रस्य कदलीस्तम्भराजितः । नवीनोऽय यवाङ्कुरशरावश्रेणिबन्धुरः ॥ १२५ ॥
अन्यानि सार्थवाहानां वणिजामपि भूरिशः । हर्म्याणि रम्यरम्याणि शालीनि विविधैर्ध्वजैः ॥ १२६ ॥
पश्येममुच्चैः प्रासादं श्रीमदादिजिनेशितुः । जात्यजाम्बूनदश्रीककलशेन विराजितम् ॥ १२७ ॥
वायुना नातिमन्देन कम्प्यमानध्वजांशुकम् । जात्यगाङ्गेयगौरश्रीनाभेयप्रतिमान्वितम् ॥ १२८ ॥ (युग्मम्)
तथाऽयं शान्तिनाथस्य प्रासादः शोभतेतराम् । उच्चैः शिखरशोभिश्रीचलद्ध्वजपटः पृथुः ॥ १२९ ॥
अयं दूरस्थितैर्दृश्यः उच्चैः शिखरशोभितः । प्रवर्तमानतीर्थेशनमेर्नीलध्वजाञ्चितः ॥ १३० ॥
अयं श्रीनेमिनाथस्य द्वारिकापुरभूषणम् । जीवत्स्वामिप्रतिच्छन्दविराजिश्रीः सितध्वजः ॥ १३१ ॥

एवं पल्लवितस्थितान् पश्य द्विद्वांदशमितार्हताम्। अनेकगच्छदागच्छज्जनश्रोणीविभूषितान् ॥ १३२ ॥
रुक्मिण्याः सदनं पश्य मातुस्ते स्फाटिकाश्मभम् । राशीकमपि निःश्रीकं विना त्वां पुत्ररत्नकम् ॥ १३३ ॥
इत्युक्ते मदनः प्राह नारदं विकसन्मनाः । त्वमत्रैव क्षणं तिष्ठ विमाने कन्यया सह ॥ १३४ ॥
अहं तु यामि नगरीं क्रीडां कर्तुमना मनाक् । उवाच नारदो वत्स ! विलम्बो नोचितस्तव ॥ १३५ ॥
एकाऽपि घटिका मातुर्वत्स ! ते वत्सरायते । मातरं मिल तेन त्वं सपत्नीस्पर्द्धपीडिताम् ॥ १३६ ॥
प्रत्युवाच मुनिं सोऽथ हासपाटलिताधरः । अज्ञातो मिलितुं पित्रे नोत्सहेऽहं मुनीश्वर ! ॥ १३७ ॥
जानीयान्मां कथं पुत्रं स्वकीयं कंससूदनः । मत्येति च कथं ज्ञात्वा यावदोजो न पश्यति ॥ १३८ ॥
सिंहः सिंहबलेनैव ख्यातिमाप्नोति निश्चितम् । शृगालसिंहयोर्भेदः कोऽन्यथा वद मां मुने!? ॥ १३९ ॥
यास्याम्येव मुने ! तेन निदेशं प्राप्य तावकम् । पिताऽपि मार्गितो दद्याद् योग्यामाज्ञां तनूभवे ॥ १४० ॥
इति गाढहठं मत्वा याहीति स्फुरिताऽधरः । अवोचत्तस्य वैदग्ध्यात् भृशं सन्तुष्टमानसः ॥ १४१ ॥
विमानात्तत उत्तीर्यागच्छंश्च द्वारिकापुरीम् । उद्यानं पश्यति स्मादौ प्राच्यां दिशि च गोपुरात् ॥ १४२ ॥
आम्रनिम्बकदम्बादिवृक्षैः फलभरोन्नतैः । शोभितं हारदूर्वायाः मण्डपैश्छादितं पुरः ॥ १४३ ॥
नालीकेरीपतत्पक्वफलदन्तुरितक्षिति । दाडिमीफललब्धश्रि जम्बीरफलसंभृतम् ॥ १४४ ॥

१ नत्तारगिव भवति । २ द्राक्षायाः ।

क्वचिच्च चम्पकाशोकसंकुलं गन्धबन्धुरम् । क्वचिच्च मालतीपुष्पभ्रमद्भ्रामरवृन्दकम् ॥ १४५ ॥
क्वचिच्च केतकीपुष्पाऽऽमोदधाराप्रवर्षुलम् । शिखण्डिकलनिर्ह्रादं पतत्पक्षिकुलाकुलम् ॥ १४६ ॥ (पञ्चभिः कुलकम्)
प्रलम्बशृङ्खलाबद्धकपिभृत् पुरुषाकृतिः । विवेश स वनं धीमानूचे च वनपालकान् ॥ १४७ ॥
वनं कस्येदृशं रम्यमूचुस्ते वेत्रधारिणः । भामिन्याः सत्यभामायाः श्रीमत्कृष्णमहीपतेः ॥ १४८ ॥
तस्याः पुत्रविवाहाय रक्ष्यमाणं फलर्द्धिमत् । एतदस्ति वनं तस्मान्निवर्तस्व प्रवेशनात् ॥ १४९ ॥
उवाच स तदा तांश्च कपिरस्ति बुभुक्षितः । गृह्णन्तु मार्गितं द्रव्यं तृप्तो भवतु मत्कपिः ॥ १५० ॥
इत्युक्त्वा द्रविणं दत्त्वा मार्गितं कपिभृत् पुमान् । वनं विवेश चक्रे च लूनं सर्वफलैः क्षणात् ॥ १५१ ॥
निर्जगाम ततः सद्योऽभवदश्वधरः पुमान् । विवेश द्वारिकां सद्यो हास्तिकाश्वीयसंकटाम् ॥ १५२ ॥
तृणापणेषु गत्वा सोऽयाचिष्ट तृणपूलकान् । अश्वो बुभुक्षितोऽस्तीति वदन्न्यायविदां वरः ॥ १५३ ॥
तृणापणिन ऊचुस्ते कटिबन्धलविक्रकाः । भानोर्विवाह आयास्यज्जन्ययात्रार्थमुचिताः ॥ १५४ ॥
पशुग्रासकृते एते नार्पणीयास्ततो ह्यमी । अन्यत्र याहि याहि त्वं पोषयाऽश्वं तृणादिभिः ॥ १५५ ॥
इत्युक्ते द्रविणं दत्त्वा तान् प्रलोभ्यार्थतोऽधिकम् । अतृणीचकार सर्वास्तांस्तृणहट्टान् क्षणादपि ॥ १५६ ॥
ततो जगाम पानीयशालायां स पिपासितः । पानीयाध्यक्षकानूचे पातुं ददतु मे जलम् ॥ १-७ ॥

१ हास्तिक गजसमूह । २ आश्वीय घोटकगण ।

तृणाऽऽपणिवदूचुस्तेऽप्यतोऽदाद् द्रविणं घनम् । सश्रीको दानशौण्डश्च कुर्यात् कार्यं यथेप्सितम् ॥ १५८ ॥
स्वयं पिब जलं भूरि पाययाश्वं व्रज द्रुतम् । इत्युक्तः स चकाराऽऽशु मरुभूमिमिवाथ ताम् ॥ १५९ ॥
ततो जगाम वाहाल्यां दृष्ट्वा भानुकुमारकम् । वाहयन्तं परीक्षायै हयं यवनदेशजम् ॥ १६० ॥
दृष्ट्वाऽथ वाजिनं तं च राजपुत्रो हयप्रियः । ऊचिवान् कस्य तार्क्ष्योऽयं विक्रेतव्योऽथवा न हि ? ॥ १६१ ॥
प्रद्युम्नः प्रोचिवांस्तं च याचितार्थस्य लाभतः । विक्रेतव्यो मया राजन् ! काम्बोजोऽयं हयोत्तमः ॥ १६२ ॥
स प्राह मूल्यमादाय हयं मेऽमुं समर्पय । तदोवाच हयस्वामी परीक्ष्याऽमुं गृहाण भोः ! ॥ १६३ ॥
अन्यथा कृष्णराजो मां दण्डयेद् हि निरागसम्[1] । मूल्यं तदनु लास्यामि त्वत्तो मुदितमानसात् ॥ १६४ ॥
इत्युक्ते स स्वकीयाश्वं मुक्त्वा काम्बोजवाजिनम् । आरुरोह सपर्याणं नाटयामास भूरिशः ॥ १६५ ॥
पातयामास सोऽश्वस्तं सद्यो दन्तुरभूतले । पेतुर्दन्ताश्च सर्वेऽपि बीजानीव हि दाडिमात् ॥ १६६ ॥
गलद्रुधिरसंभारो हस्यमानोऽखिलैर्जनैः । त्रपापिनद्धवदनो यावत्तिष्ठति भानुकः ॥ १६७ ॥
तावदाह च हयवान् पुरुषो राजपुत्रकम् । अद्यापि हयशिक्षायां कुशलो नाऽसि किञ्चन ॥ १६८ ॥
अद्यापि मूर्ख एवाऽसि भूत्वा कृष्णकुलेऽपि किम् ? । लज्जितं हि त्वया सर्वं कुलं यदुनृपस्य तत् ॥ १६९ ॥
भानुस्तमाह जानासि हयं वाहयितुं स्वयम् । परोपदेशे कुशलो वर्तसे वा जडः स्वयम् ॥ १७० ॥

[1] निरपराधम् ।

तदाह त च भो भानो ! जाने क्रीडायितुं परम् । हद्धत्वान्न हि शक्तोऽस्म्यारोढुं ताक्ष्योंत्तमं पुनः ॥ १७१ ॥
पञ्चषाश्चेन्मिलित्वा मां हयमारोहयन्ति भोः ! । दर्शयामि निजां प्रज्ञां हयशास्त्रसमुद्भवाम् ॥ १७२ ॥
भानुः प्राह ततः पत्तीनारोहयत पञ्चषाः । मिलित्वैनं कलां जाने यथैतस्य वचास्विनः ॥ १७३ ॥
आरोहयति यावच्च श्लथगात्रो बभूव सः । पतन् भूमौ च निःसत्वश्चूर्णयामास तानथ ॥ १७४ ॥
आह भानुकुमार स मूर्खैरेभिस्तु पातितः । दर्शयामि निजां विद्यामारोहयसि चेत् स्वयम् ॥ १७५ ॥
अथ भानुकुमारस्तं हयारूढं चकार सः । वाजं कारयताऽनेन चूर्णितो भानुरेव हि ॥ १७६ ॥
उत्पत्य विद्यया सोऽगाददृश्यत्व क्षणादपि । रुदन् भानुकुमारोऽपि गतो मातृमुखो गृहम् ॥ १७७ ॥
प्रद्युम्नोऽथ द्विजीभूय राजमार्गे उपाविशत् । पुस्तकं वाचयामास सुधामधुरया गिरा ॥ १७८ ॥
आगाच्च दासी भामायाः कुब्जिका नामतस्तदा । कुब्जाङ्गी सान्वया तेन पृष्टा नामादिकं पुनः ॥ १७९ ॥
आचख्यौ सत्यभामायाः द्विज ! दास्यस्मि कुब्जिका । अतीव वल्लभा तस्याः लभ्यसम्बन्धतः परम् ॥ १८० ॥
जगाद च तदा विप्रो विद्यावानस्म्यहं खलु । क्षणात् त्वां सरलां कुर्वे कुब्जरोगप्रणाशनात् ॥ १८१ ॥
पतित्वा पादयोस्तस्य जगाद विनयान्विता । एवं कुरु महाभाग ! प्रसादस्ते भवत्वसौ ॥ १८२ ॥
इत्युक्ते स चकाराऽशु सरलां कुब्जिकां क्षणात् । मूर्ध्नि हस्तस्य दानेन मन्त्रजापपुरस्सरम् ॥ १८३ ॥
कुब्जत्वाऽपासनात् स्वस्य सद्यो विस्मयदर्शनात् । कस्य प्राघूर्णकोऽसीति पृच्छति स्म च सा द्विजम् ॥ १८४ ॥

उवाच मायाविप्रस्तां नाम्नी द्वे स्तो ममाऽनघे ! । मोदकप्रिय इत्याद्यं द्वितीयं वटकप्रियः ॥ १८५ ॥
मोदकाः प्रचुराः यत्र वटकाश्च सुगन्धयः । तस्य प्राघूर्ण एवाऽहं पृच्छसि त्वं तदा ब्रुवे ॥ १८६ ॥
सोचे तं सत्यभामायाः पाणिग्रहणमहोत्सवः । गृहे भानुकुमारस्य विद्यते निकटस्ततः ॥ १८७ ॥
लड्डुका कन्दुकाकाराः वर्तन्ते तत्र भूरिशः । एह्येहि विप्र ! सद्यस्त्वं भोजयामि यथारुचि ॥ १८८ ॥
वटका अपि तत्रैव सन्ति स्वादुतराः द्विज ! । नाम्नाऽन्वर्थं प्राप्नुहि त्वं भुक्त्वा भुक्त्वा यथेप्सितम् ॥ १८९ ॥
इत्युक्तः स जगामाऽथ भामासद्म तया सह । तोरणद्वारि मुक्त्वा तं साऽगान्मध्येगृहं मुदा ॥ १९० ॥
काऽसि त्वमिति पप्रच्छ भामा विस्मयभाग् हृदि । साऽथोचे कुब्जिका दासी तवास्मि प्रेमपात्रिका ॥ १९१ ॥
भामोचे मद्गृहाद्याहि धूर्ते ! वञ्चयसीति किम् । साऽस्ति कुब्जाकृतिः क्रूरा त्वं तु रूपाप्सरःसमा ॥ १९२ ॥
अभिज्ञानानि तस्याः सा पूरयामास गुह्यवित् । कथं कथय कुब्जत्वं गतं ते तत्क्षणादपि ॥ १९३ ॥
इत्युक्ता भामयाऽथोचे सा सर्वं विप्रचेष्टितम् । भामोचे याहि याहि त्वं विप्रमानय सत्वरम् ॥ १९४ ॥
गृहाङ्गणात्तमाकार्य भामाग्रे सा ययौ पुनः । ननाम विप्रं सा सद्यो भृशं विनयपूर्वकम् ॥ १९५ ॥
आशिषं प्रददौ विप्रो भव रूपवती चिरम् । रञ्जयस्व मनो विष्णोः पुनर्यौवनभाग् भव ॥ १९६ ॥
त्वत्प्रसादाद्भविष्यामि स्वामिन् ! तत्र न संशयः । इत्युक्त्वा सत्यभामा तमासनं महदर्पयत् ॥ १९७ ॥
सुखासनसमासीनं कृत्वा कृष्णाङ्गना जगौ । कुरु सत्यामाशिषं स्वां मयि रूपनिवेशनात् ॥ १९८ ॥

रुक्मिणी मे सपत्न्यस्ति तया विष्णुर्वशीकृतः । कृतकार्मण आयाति नैव गेहं मम प्रभो! ॥ १९९ ॥
जयामि रूपऋद्ध्या तां हरिरायाति सद्मनि । प्रेमरज्ज्वा बद्ध इव वृषो विप्र ! तथा कुरु ॥ २०० ॥
इत्थं बभाषे विप्रस्तां तथोक्तः स हसन्निति । कुरूपत्व विना नैव सुरूपत्व प्रजायते ॥ २०१ ॥
स्नानीयचूर्णयोगेन कुरूपो जायते पुमान् । प्रथम तदनु स्नानादम्बुना रूपभाग् भवेत् ॥ २०२ ॥
आदर्शो मणिरप्येव निस्त्रिंशो वसन तथा । रूपापादनवेलायां कुरूपाण्येव सर्वत· ॥ २०३ ॥
पश्चान्निर्मलतेजांसि भवेयुर्वस्तुयोगतः । तथा त्वं भव कृष्णाग्रमहिषि ! प्रथमं शुभे ! ॥ २०४ ॥
मम मन्त्रबलात् सद्यः शचीमपि विजेष्यसे । वार्तैव का च मानव्याः सततान्नभुजो ननु ॥ २०५ ॥
सत्योवाच तदा विप्र ! विधिं कं करवाण्यहम् । समादिश यथाज्ञातं मन्त्र तदनु शिक्षय ॥ २०६ ॥
तदोवाच स विप्रस्ता शिरो मुण्डय पूर्वतः । गत्वाऽपवरके शीघ्रं नग्ना भव च सर्वतः ॥ २०७ ॥
मष्या लिम्प समग्राङ्गं तैलकज्जलजातया । रोमकूपोऽपि गौरस्ते न तिष्ठतु मनागपि ॥ २०८ ॥
जीर्णीभूतस्यूतवासा भवाऽनु च ममाग्रतः । माप्नुह्यम्ब ! च मा लज्जामह पुत्रसमोऽस्मि यत् ॥ २०९ ॥
दीयमानं मया मन्त्र जप चैकाग्रमानसा । अग्रतः कुलदेवीनां यावज्जेमि[1] करोम्यहम् ॥ २१० ॥
इत्युक्ते सत्यभामा सा तेनोक्त हि तथाऽकरोत् । जां जां जां जा ज ज जां जामिति मन्त्र ददौ च सः ॥ २११ ॥

1 भोजनम् ।

विधिं समग्रमादिश्य भोजनार्थमुपाविशत् । मायाविप्रो गृहे तस्याः बुभुक्षाक्षामकुक्षिकः ॥ २१२ ॥
सत्या तु जापं कुर्वाणा तस्थौ मौनवती भृशम् । आदमोदं मोदकांश्च सोऽस्याद् विप्रः क्षुधातुरः ॥ २१३ ॥
मोदकादिरसवतीं विद्याशक्त्या समापयत् । अहं बुभुक्षितोऽस्मीति पूत्कुर्वन्नेव तस्थिवान् ॥ २१४ ॥
भक्षितं त्वयका सर्वमथ याहि द्विजेब्रुव ! । दास्यः समस्ता भामाया अवदन्निति यावता ॥ २१५ ॥
युष्माकं भक्षितं सर्वं न जीर्येत् क्रूरचक्षुषाम् । अतोऽत्रैव हि मुञ्चामि सर्वां रसवतीमिमाम् ॥ २१६ ॥
इत्युक्त्वा वमनं चक्रे क्रमभक्षितवस्तुनः । क्रमेण तेन विप्रः स गेहं दुर्गन्धि च व्यधात् ॥ २१७ ॥
उत्तिष्ठोत्तिष्ठ हे विप्राधम ! सर्वं विनाशितम् । गेहं तथाहि याहीति दा युक्तः स ययौ बहिः ॥ २१८ ॥
पुनर्बालमुनिर्भूत्वा ययौ प्रासादमुत्तमम् । प्रज्ञप्त्या विद्यया ज्ञातं रुक्मिण्याः शोकसंकुलम् ॥ २१९ ॥
तस्याऽऽसनार्थं गेहान्तर्ययौ सादरमानसा । उपाविशत् समागत्य कृष्णसिंहासनोत्तमे ॥ २२० ॥
तत्क्षणं निर्ययौ गेहादादाय च शुभासनम् । वन्दित्वा तं मुनिं प्रोचे मुञ्चासनमिदं यतः ॥ २२१ ॥
कृष्णो वा कृष्णपुत्रो वोपवेशार्हो भवेदिह । अस्याधिष्ठायको देवः सहते नान्यमेव हि ॥ २२२ ॥
तेनोत्तिष्ठ मुने ! सद्यः आसनात् कृष्णकल्पितात् । अस्मिन् योग्यासने तिष्ठ कार्यं चागमने वद ॥ २२३ ॥
बालो मुनिर्हसित्वोचे मातः ! बालतपस्व्यहम् । पराभवे प्रभुर्न स्याद् देवो मां प्रति शक्तिमान् ॥ २२४ ॥

१ भुक्त्वा भुक्त्वा । २ निन्द्यद्विज ! ।

पन्थानमतिलङ्घ्याऽहं समागां सद्म ते वहुम् । तेन श्रान्तोऽस्मि मा ब्रूहि मुञ्च दूरत आसनम् ॥ २२५ ॥
कियत्तपः कृतं स्वामिन् ! अथोवाच च रुक्मिणी । साधुराह महाभागे ! शृणु वार्तां मनोहराम् ॥ २२६ ॥
अहं बालमुनिर्बालतपस्वी बालपण्डितः । षोडशाब्द्यद्य सञ्जाता कुर्वतो मम तत्तपः ॥ २२७ ॥
मया जन्मत आरभ्य मातुस्तन्यं पपौ न हि । तपसस्तस्य सुश्रद्धे ! पारणं वर्ततेऽत्र मे ॥ २२८ ॥
रुक्मिण्यूचे महाभाग ! चतुर्थाद्वत्सरावधि । तपः श्रुतं मया जैनशासने मुनिपार्श्वतः ॥ २२९ ॥
षोडशाब्दं तपो नैव श्रुतं वदासि किं मृषा । तथोक्तः स मुनिः प्राह परतप्तिं करोषि किम् ॥ २३० ॥
यदि दित्ससि तद्देहि न चेद्याम्यन्यतः किल । तथोक्ते सा विलक्षोचे शोकान्नैवाऽस्ति पाचितम् ॥ २३१ ॥
स चोचे कृष्णगेहिन्यास्ते किं शोकस्य कारणम् ? । सोचे साधो ! षोडशाब्दी पुत्रस्य विरहेण मे ॥ २३२ ॥
जाता तथापि नायात इत्यहं कुलदेवताम् । आराधयं च विधिवत् पुत्रसङ्गमवाञ्छया ॥ २३३ ॥
शिरोबलिं कर्तुकामा मर्तुकामाऽस्मि शोकतः । इदानीं प्राहरं यावद् ग्रीवायां निसितासिना ॥ २३४ ॥
कुलदेवी तदा प्राह पुत्रि ! मा साहसं कुरु । रसाल एष कालिकामकालेऽपि फलिष्यति ॥ २३५ ॥
तदा त्वं पुत्रमायातं विद्धि नात्र च संशयः । इत्युक्त्वा सा तिरोधत्त मुदमाधामहं ततः ॥ २३६ ॥
मञ्जुमञ्जरितोऽद्याऽयं रसालः फलदः किल । तथापि पुत्रो नायातस्तेन दुःखेन दुःखिनी ॥ २३७ ॥

१ परितापम् ।

महातपस्वी त्वं साधो ! महाज्ञानी तथा ह्यसि । महोपकारी लोकानामतो होरां विलोकय ॥ २३८ ॥
कदाऽऽगमिष्यति पुत्रो मे वद साधो ! प्रियंवद ! । मुनीनां देवतानां च दर्शनं न वृथा भवेत् ॥ २३९ ॥
सूनोर्विरहशोकं मे सद्योऽपाकुरु तेन भोः ! । मुनिर्विलोक्य नासायाः मारुतं मोचिवान् पुनः ॥ २४० ॥
आयातमेव तं विद्धि मातः ! नात्र च संशयः । जल्पान्ति मुनयो नैव मृषां प्रातर्घना इव ॥ २४१ ॥
मुदिता रुक्मिणी प्रोचे तपस्विंस्ते ददामि किम् । ब्रूहि यद् रोचते तुभ्यं मानसं पृच्छ च स्वकम् ॥ २४२ ॥
त्वां दृष्ट्वा प्रेम पुत्रस्योल्लासमेत्यधिकाधिकम् । तेन लज्जां कृथा मा एवं मातरीव मयि व्रतिन् ! ॥ २४३ ॥
सोऽवादीत्तपसा ह्यस्मि षोडशाब्दीभवाऽमुना । कृशोऽहं तेन मे पेयां प्रयच्छाऽभिनवां प्रियाम् ॥ २४४ ॥
तथोक्ता मोदकान् साऽथ चूर्णयामास हेलया । प्राक्सिद्धान् पयसा युक्तांश्चकार च महामनाः ॥ २४५ ॥
ज्वलनं ज्वालयामास परं तस्य च मायया । ज्वलनः प्राज्वलन्नैव खिन्नाऽतीव बभूव सा ॥ २४६ ॥
छद्मसाधुस्ततः प्रोचे बुभुक्षाक्षामकुक्षिकः । न शक्तोऽहं क्षुधां सोढुं मोदकानेव देहि मे ॥ २४७ ॥
उवाच सा मदूद्रव्यकृताः कृष्णाय मोदकाः । अन्यश्चेदात्ति म्रियते तत्क्षणं दुर्जरा ह्यमी ॥ २४८ ॥
ततो बालमुनिः प्राह देहि मह्यं हि मोदकान् । कृपणाऽसि ततो नैव ददासि वद मा मृषा ॥ २४९ ॥
इत्युक्ते सा ददाति स्म शङ्कमानैकमोदकम् । एकमेव चकाराऽऽशु कवलं मोदकस्य सः ॥ २५० ॥
पुनर्द्वितीयं सा तस्मै क्रमतश्च तृतीयकम् । चकार तस्य कवलं न द्वितीयं हरेः सुतः ॥ २५१ ॥

दत्तं दत्तं स भुङ्क्ते स्म विस्मिता सा बभूव च । कोऽसावस्ति हि बलवान् हरेरपि महाबलात् ? ॥ २५२ ॥
कृष्णोऽपि हि न शक्तः स्यात् स्वादितु य द्वितीयकम् । मोदक बहुशो भुङ्क्ते मोदकान् बालकोऽपि सन् ॥२५३॥
अथ शान्तक्षुधो भुक्त्वा यावत् स चुलुक ललौ । इतश्च सत्यभामा ता तं जाप कुर्वती भृशम् ॥ २५४ ॥
आगत्य ते नराः प्रोचुरारामाद्यधिकारिणः । चक्रे स्वामिनि ! कश्चित् ते वन रिक्त फलादिभिः ॥ २५५ ॥
अतृणास्तृणशालाश्च निर्जलांश्च जलाशयान् । भानुकुमारं कोऽप्यश्वात् पातयामास दम्भतः ॥ २५६ ॥
दास्यः प्रोचुस्तथागत्य तस्य विप्रस्य चेष्टितम् । गृहमध्याद्विनिर्गत्य साऽपश्यदपचित्रिताम् ॥ २५७ ॥
शालां वान्त्याऽतिदुर्गन्धां पाकशालां च रिक्तताम् । मण्डकौदन-सर्पिर्भिः शाकैश्च विविधैर्निजाम् ॥ २५८ ॥
हा ! वञ्चिताऽस्मि केनापि कपटेन दुरात्मना । दुर्वासस च दुर्गन्धां मुण्डिता मा चकार यत् ॥ २५९ ॥
एनं व्यतिकरं यावन्नैव जानाति रुक्मिणी । आनाययामि तत्केशान् पणबन्धेन हारितान् ॥ २६० ॥
इत्थं मनसि सञ्चिन्त्य प्रेषयामास सत्वरम् । दासीः पटलिकाहस्ताः केशानयनहेतवे ॥ २६१ ॥
ऊचिरे ताः समागत्य हसन्त्यो रुक्मिणीं प्रति । स्वामिनी नः सत्यभामा त्वामादिशति मानिनी ॥ २६२ ॥
परिणेष्यति मे पुत्रो भानुर्भानुसमद्युतिः । केशानर्पय तेन त्व पणबन्धेन हारितान् ॥ २६३ ॥
इत्युक्ते ताभिरागत्याऽरोदीद् गाढस्वरं सशुकं । पृच्छति स्म मुनिर्बालो मातः ! त्वं किमु रोदिषि ? ॥ २६४ ॥

१ सोकसहिता ।

वार्तां सविस्तरां प्रोचे रुक्मिणी शोकविह्वला । यथाजानां नारदोक्तितप्रतिध्वनिमिवाऽथ सा ॥ २६५ ॥
मायामुनिस्तदा तासां कुन्तलैः पुष्पवासितैः । भृत्वा पटलिकां सद्यः प्रेषयामास ताः प्रति ॥ २६६ ॥
गीतगानं प्रकुर्वाणाः स्वामिन्यो यात वो गृहम् । अर्पयन्तु च तान् केशानिति शिक्षां प्रदाय सः ॥२६७॥ (अर्थतो युग्मम्)
सर्वास्ता मुण्डिता दृष्ट्वा भामा विस्मयभाग् जगौ । अरे ! किं जातमेतद् हि कर्म केनेदृशं कृतम् ? ॥ २६८ ॥
ता ऊचिरे रुदत्योऽथ सर्वं तस्य विचेष्टितम् । भामा भीमवती जाता दिवाकीर्तीन् समादिशत् ॥ २६९ ॥
यात रे ! रुक्मिणीगेहं बलात् कुरुत रुक्मिणीम् । मुण्डितां सपरीवारां केशानानयत द्रुतम् ॥ २७० ॥
परतन्त्राः समाजग्मुर्वेपमानशरीरकाः । साधुस्तानपि निर्लूनशिरोजानकरोद् द्रुतम् ॥ २७१ ॥
त्वक्छेदनिर्यद्रुधिरा आजग्मुस्तेऽपि तत्क्षणम् । पूत्कुर्वन्तश्च निन्दन्तो भामां मूर्खशिरोमाणम् ॥ २७२ ॥
निर्विचारा ततो भामा सद्योऽगादुपकेशवम् । जगाद दापय त्वं मे रुक्मिण्या मूर्धजान् द्रुतम् ॥ २७३ ॥
अभूस्त्वं प्रतिभूरत्र बलदेवश्च विश्रुतः । उत्थाय च स्वयं गत्वा मुण्डितां कुरु रुक्मिणीम् ॥ २७४ ॥
हासशीलो हरिः प्रोचे भामे ! त्वं मुण्डिता भव । इयतैव कृतं मेऽस्तु रुक्मिण्याः किं प्रयोजनम् ॥ २७५ ॥
रुक्मिण्याश्च पदे जाता त्वमेवासि हि मुण्डिता । अमुण्डिताऽस्तु त्वत्स्थाने रुक्मिणी शोभनं ह्यदः ॥ २७६ ॥
उच्छलन्ती ततः प्रोचे साक्षादेव हि सर्पिणी । मायाविन् ! मायया सर्वमाविनीतं कुलं कृतम् ॥ २७७ ॥

१ क्रोधयुक्ता । २ नापितान् ।

हास्यं मा कुरु हास्यस्य स्थानं नास्त्यत्र किञ्चन । अकालविहितं हास्य विपायते नृणां यतः ॥ २७८ ॥
भृशं तया प्रेरितोऽथ हरी रामं समादिशत् । भ्रातः ! त्व याहि रुक्मिण्याः गेहं तां च प्रबोधय ॥ २७९ ॥
पणबन्धे त्वया केशाः हारितास्तत्र साक्षिकाः । अहं हरिश्च संजाता दुर्योधन इति त्रयः ॥ २८० ॥
केशान् देहि स्वय तेन हठं मा कुरु रुक्मिणि ! । कथयेति गिरा सौम्यसुधामधुरया सुधीः ॥ २८१ ॥
इत्युक्तो हरिणा रामो यावदभ्येति तद्गृहम् । आचिन्त्यशक्तिमान् सोऽथ कृष्णरूपोऽभवत् तदा ॥ २८२ ॥
पुत्रः स्याद्धि पितुस्तुल्य इति सत्यापयन्निव । न्यायं च शास्त्रविदुरो विश्वविश्रुतपुण्यवान् ॥ २८३ ॥
रामस्तत्र हरिं प्रेक्ष्य निजसिंहासनस्थितम् । पुरः स्थितां रुक्मिणीं च ताम्बूलव्यग्रपाणिकाम् ॥ २८४ ॥
लज्जानम्रमुखो रामः सद्य एव समागमत् । स्थाने वलित्वा तत्रापि हरिं प्रेक्ष्य क्रुधाऽज्वलत् ॥ २८५ ॥
भ्रातर्यपि मयि स्वामिन् ! नोचिती हासशीलता । यन्मां प्रेष्य स्वयं गत्वा सिंहासनमुपाविशः ॥ २८६ ॥
अहं तु लज्जितो जातस्त्वं निर्लज्जः सदा ह्यसि । उद्धतानां कुतो लज्जा क्व वा विद्या प्रमादिनाम् ? ॥ २८७ ॥
इत्यूचानेऽथ हलिनि प्रोचिवान् देवकीसुतः । अहं तत्रागतो नास्म्यत्रार्थे पादौ स्पृशामि हि २८८ ॥
वसुदेवस्य च भ्रातुस्तवापि प्राणवल्लभ ! । वसुदेवाच्च भवतो नास्ति मे कश्चन प्रियः ॥ २८९ ॥
इति प्रबोधितो रामः स्वच्छचित्तोऽभवत् तदा । दुर्बोध्या खलु भामाऽभूत्सर्पिणीव दुराशया ॥ २९० ॥

१ विषमिवं भवति ।

किंब्रुवाणा ययौ गेहं कुर्वती हस्तचालनाम् । मुञ्चन्ती गरलोद्गारान् त्वराशिथिलनीविभृत् ॥ २९१ ॥
ओदनः शीतलः सद्यो भवेदुष्णीकृतोऽपि हि । उष्णिकोष्णा च न परं भजेत् शीतलतां यथा ॥ २९२ ॥ (युग्मम्)
हरिर्ययौ गृहे तस्याः सान्त्वनायै क्रुधाजुषः । तावच्च नारदोऽभ्येत्य रुक्मिणीं प्रत्यबोधयत् ॥ २९३ ॥
कृष्णप्रिये ! विजानीहि सुतं तव महाद्युतिम् । एनं प्रद्युम्ननामानं हर्षं प्राप्नुहि दर्शनात् ॥ २९४ ॥
मिलालिङ्गनदानेन स्वोत्सङ्गे कुरु चुम्ब च । प्रद्युम्नोऽपि निजं रूपमाविष्कृत्य ननाम च ॥ २९५ ॥
कुर्पासकं विनिर्भिद्य निर्ययौ प्रस्नवस्तदा । रुक्मिण्याः प्रेमसंभारादालिलिङ्ग च तं मुहुः ॥ २९६ ॥
तदोचे रुक्मिणी पुत्रं मिल त्वं पितरं स्वकम् । बलं च स्वपितुस्तुल्यं विश्वविश्रुततेजसम् ॥ २९७ ॥
प्रद्युम्नस्तामुवाचैवं न ज्ञाप्योऽम्ब ! पितुर्हरेः । अदृष्ट्वा मद्बलं तादृक् कथं प्रत्येति मां सुतः ? ॥ २९८ ॥
चमत्कारि बलं यावद् दर्शयामि स्वकं न हि । न ज्ञाप्यस्तावता मातः ! स्वयं ज्ञास्यति मद्बलात् ॥ २९९ ॥
परं श्रुत्वैव प्रत्येति कोकिलस्तनयं निजम् । काक–कोकिलयोर्भेदं को जानात्यन्यथा पुनः ? ॥ ३०० ॥
इत्युक्त्वा रुक्मिणीं सोऽथ रथे मायाप्रकल्पिते । अध्यारोह्याऽचलद्राजपथे लोकैर्निरीक्षितः ॥ ३०१ ॥
दध्मौ शङ्खं महाध्वानं बाढस्वरमदो वदन् । हरामि कृष्णमहिषीं रुक्मिणीं प्रेमभाजनम् ॥ ३०२ ॥
यः कश्चिद् बलवान् पुर्यां द्वारिकायां मदग्रतः । स आयातु च गृह्णातु रुक्मिणीं हस्ततो मम ॥ ३०३ ॥
कृष्णो वा बलदेवो वा तयोः पुत्रोऽथवाऽन्यकः । युद्ध्वा मया सहेमां च गृह्णातु मम हस्ततः ॥ ३०४ ॥

अन्यथा स्वगृहे गत्वा स्त्रीणां शरणतत्पराः । भवन्तु भवभीतास्ते कम्पमानशरीरकाः ॥ ३०५ ॥
इति श्रुत्वा महावीरा राजानश्चेलुरादरात् । हयारूढा गजारूढा रथारूढाश्च पत्तयः ॥ ३०६ ॥
प्रद्युम्नो हेलया सर्वानजैपीज्जितकास्यपि । लज्जानम्रमुखास्तेऽथ वलित्वा जग्मुरालयम् ॥ ३०७ ॥
अथ कृष्णःससेनाको बलदेवसमन्वितः । उग्रसेनादिभिः सार्द्धं चचाल चपलाचलः ॥ ३०८ ॥
हसन्नुवाच प्रद्युम्नो दन्तज्योत्स्नार्चिताधरः । याहि रे ! याहि कृष्ण! स्व धाम लज्जासमन्वितः ॥ ३०९ ॥
कंसादिवधजां कीर्तिं मा हार्षीर्हेलयाऽर्जिताम् । मामेककमनिर्जित्य विश्वाऽतुलितसाहसम् ॥ ३१० ॥
सत्यभामामुखाः सन्ति बह्व्यस्तेऽप्सरसां समाः । कामिन्यस्ताभिरेव त्वं भोगान् भुङ्क्ष्व स्ववेश्मगः ॥ ३११ ॥
अस्याः कृते किलैकस्याः कीर्तिदारान् विमुञ्च मा । अन्यथा द्वेपिजयजाः कीर्तिदारा हि नश्वराः ॥ ३१२ ॥
नायास्यतीयं हस्तेऽपि द्वय तत्ते गमिष्यति । विचारय च तेन त्व गच्छ धाम सुखं भज ॥ ३१३ ॥
इत्युक्ते कसविद्वेषी जगादाऽऽरक्तलोचनः । अरे ! रे ! किं ब्रवीपीद बल दर्शय दर्शय ॥ ३१४ ॥
इत्युक्ते विधया बलद्वसैन्यः स युयुधे चिरम् । कृष्णेन लज्जाकृष्णेन कान्तारत्नापहारतः ॥ ३१५ ॥
निरस्त्रं चकृवान् कृष्णं सद्यो विद्याबलात्-सुतः । निर्लूनदन्तो दन्तीव कापिः फालच्युतो यथा ॥ ३१६ ॥
निर्लूनपक्ष· पक्षीव द्रुमो निर्लूनशाखकः । निर्लूनदंष्ट्रो भुजगस्तथा कृष्णोऽभवाच्चिरम् ॥ ३१७ ॥
कोऽस्त्ययं मद्विजेता यो न सामान्यः पुमानयम् । नहि ज्ञातनरः किन्तु देवोऽयं सभवेदपि ॥ ३१८ ॥

मेषोन्मेषौ प्रकुर्वाणो दृश्यते तेन नो सुरः । किन्तु विद्याधरः कश्चिद्विद्यावलसमन्वितः ॥ ३१९ ॥
इत्थं विमर्शं कुर्वाणो हरिस्तस्थौ निरायुधः । स्पन्दते स्माऽथ तद्बाहुर्दक्षिणो दानदक्षिणः ॥ ३२० ॥
बलाय ज्ञापयामास बाहुस्फुरणमात्मनः । दक्षिणस्य स चाह स्म फलं तस्येष्टसंगमम् ॥ ३२१ ॥
तदा च नारदोऽभ्येत्याऽवादीत् कृष्णं ससंशयम् । केन त्वं युध्यसे विष्णोऽस्त्ययं ते रुक्मिणीसुतः ॥ ३२२ ॥
अहं प्रद्युम्ननामानं महाधीमानमानयम् । कालसंवरभूपालगेहात् षोडशवार्षिकम् ॥ ३२३ ॥
अथ प्रद्युम्न आगत्य निपतन्नुत्पतन्नयी । विनयी ननाम पादाब्जे जातानन्दाश्रुनिर्झरः ॥ ३२४ ॥
हरिश्च स्वाङ्कगं कृत्वा मुहुर्मूर्ध्नि चुचुम्ब तम् । अभ्यषिञ्चद् भृशानन्दनेत्राम्बुभरनिर्झरैः ॥ ३२५ ॥
ततो ननाम हलिनं हरिवच्चक्रिवान् स च । समुद्रविजयं सोऽपि वसुदेवं तथैव सः ॥ ३२६ ॥
युद्धभूमिस्तदा प्राप्ता सद्य आनन्दभूमिताम् । नटीव योगिनीरूपं मुक्त्वा रामप्रिया भवेत् ॥ ३२७ ॥
अथ विप्रान् समाहूय ज्योतिःशास्त्रविदो हरिः । प्रवेशमुहूर्तं पप्रच्छ तेऽपि सद्यः समादिशन् ॥ ३२८ ॥
कृष्णः प्रवेशयामास सद्यः कृतमहोत्सवाम् । पताकातोरणश्रीकां कुङ्कुमस्नानशीतलाम् ॥ ३२९ ॥
गवाक्षाऽऽसीनवनितां सम्यगास्तीर्णपुष्पकाम् । विलोकनोत्कैर्लोकौघसंकटां मथुलामपि ॥ ३३०
विलोकनरसाद्धावत्पतद्भूषणसञ्चयाम् । आनन्दस्य महीशस्य राजधानीमिवाऽनघाम् ॥ ३३१ ॥



१ उत्कः उत्कण्ठी ।

निर्निमेषैर्जनैः सर्वैः स्वर्गपूरनुकारिणीम् । जयन्तमिव प्रद्युम्नं प्राचीशः पुलकाङ्कितः ॥ ३३२ ॥ चतुर्भिः कुलकम् ।
अवाकिरन् पौरकन्यास्त च लाजैरखण्डितैः । मत्तद्विपसमारूढं ध्रियमाणातपत्रकम् ॥ ३३३ ॥
वीज्यमानं चलत्श्वेतचामरैः पार्श्वतः स्थितैः । अभितो वेष्टितं सर्वैर्यदुभिः सेवधिं किमु ? ॥ ३३४ ॥
इत्थ स्तुतिव्रतजातसंस्तुतो रुक्मिणीसुतः । ददद्दान सुवर्णस्य कल्पद्रुरिव कामितम् ॥ ३३५ ॥
आगान्मातृगृहे साक्षादानन्द इव मूर्तिमान् । पुण्यराशिरिव श्रीमान् यशोराशिः शरीरवान् ॥ ३३६ ॥
श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु–लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरित ललित चकार तत्राऽष्टमोऽयमगमत् किल चारुसर्गः ॥ ३३७ ॥



इति श्रीप्रद्युम्नचरिते महाकाव्ये प्रद्युम्नस्य द्वारिकागमन–मातृ–पितृमिलनवर्णनो नामाऽष्टमः सर्गः सम्पूर्णः ।

---

१ शचीश इत्यपि पाठ ।

## नवमः सर्गः

अथ प्रद्युम्नपुत्रस्य समागममहोत्सवः । पितृभ्यां क्रियमाणोऽस्ति वसुदेवाऽऽदिभिस्तथा ॥ १ ॥
आगाद् दुर्योधनस्तत्र पूत्कूर्वन् भग्नसैन्यकः । सभायां द्वारिकाभर्तुः शचीभर्तुरिव श्रिया ॥ २ ॥
स्वामिन् ! केनाऽपि मे पुत्री हृताऽऽभरणभूषिता । पुर्याः बहिर्जन्ययात्रास्थितोत्पाट्य बलादपि ॥ ३ ॥
उवाच विष्णुर्भो राजन् ! नाहं जाने यतोऽस्मि न । सर्वज्ञस्त्वमतः शुद्धिं कुरु प्रेष्य निजान्नरान् ॥ ४ ॥
तदोवाच श्रियाः पुत्रः प्रज्ञप्त्या विद्यया ह्यहम् । शुद्धिं कृत्वा समानेष्ये सुतां चिन्तां ततस्त्यज ॥ ५ ॥
इत्युदित्वा विलम्ब्याथ नारदेन समानयन् । दुर्योधनाय कुरवे ददावतुलसाहसः ॥ ६ ॥
तच्चरित्रमथ ज्ञात्वा कन्याहरणमुख्यकम् । बलवन्तं सुतं ज्ञात्वा कृष्णस्तं दातुमैहत ॥ ७ ॥
पित्रा च दीयमानां तां नेच्छति स्म श्रियाः सुतः । भ्रातृजाया यतो ह्येषा ततो मे नौचितीभवेत् ॥ ८ ॥
इति प्रद्युम्नवचसा प्रीणितः श्रीपतिश्च ताम् । ददौ भानुकुमारस्य वीवाहमहपूर्वकम् ॥ ९ ॥
प्रद्युम्नोऽथ निजाः सर्वा आनयत् संपदस्ततः । विद्याधरपुरात् स्त्रीश्च सकला रतिमुख्यकाः ॥ १० ॥
इन्द्राऽनुजोऽपि विद्याभृन्महीभृत्कन्यका वराः । उदवाहयत् सहर्ष विद्या-भुज-बलोर्जितम् ॥ ११ ॥
अथ प्रद्युम्नगीतानि छन्दांसि सुमहान्ति च । वैणिकैर्मागधैस्तत्र गीयमानानि सर्वतः ॥ १२ ॥

तादृशि च चरित्राणि पवित्राणि महीतले । शृण्वती सत्यभामाऽभूदीर्ष्याकलुषिताऽऽशया ॥ १३ ॥
मम पुत्रस्य नामाऽपि नैव जानाति कश्चन । जीवतोऽपि मृतस्यैव हीनपुण्यस्य सर्वदा ॥ १४ ॥
रुक्मिण्यपि ततः पुत्राद् गीयमानगुणाऽजनि । सर्वत्र विश्रुता चैव शिवेवाऽरिष्टनेमिनः ॥ १५ ॥
अधमात् पुत्रकादस्मान्मा जानाति न कश्चन । जीवन्त्यपि मृतेवाऽस्मि शरद्वल्लीव तापतः ॥ १६ ॥
इति चिन्तातुरा सत्याऽपतज्जर्जरमञ्चके । मुञ्चन्ती लम्बनिःश्वासानन्तस्तापेन कोष्णितान् ॥ १७ ॥
अत्रान्तरे हरिस्तत्र समागात् प्रेमयान्वितः । दृष्ट्वा तां च तथाऽवस्थां कारण पृच्छति स्म सः ॥ १८ ॥
किं दुःखं देवि ! हे सुभ्रु ! कस्य वा ते पराभवः । कस्मिन् वस्तुनि वाञ्छा ते वदेच्छापूरकोऽस्म्यहम् ॥ १९ ॥
गाढदुःखभराक्रान्ताऽवदत् सा गद्गदस्वरम् । नाऽस्ति मेऽद्य पराभूतिः पट्टराज्ञ्यास्तव प्रभो ! ॥ २० ॥
रत्नादिवस्तुसारेषु नास्तीहा सर्वथा मम । त्वंच चिन्तामणेः सर्वो वर्तते सारसग्रहः ॥ २१ ॥
परं प्रद्युम्नसदृशः स्वामिन् ! मे नास्ति नन्दनः । तेन तत्सदृशं पुत्रं देहि मे चिन्तितप्रदम् ॥ २२ ॥
अन्यथाऽहं मरिष्यामि दुःखाऽऽकुलितमानसा । सापत्न्यव्यवहारोऽस्ति दुःशकः किल सुभ्रुवाम् ॥ २३ ॥
व्याजहार ततः कृष्णो देवि ! मा भव दुःखिता । मथुरातः सहायाऽसि सुख–दुःखस्य मेऽनघे ॥ २४ ॥
वाञ्छितं ते करिष्यामि शीघ्रमेव समुद्यतः । नास्ति मे दुष्करं किञ्चिद्देवाऽऽराधनतः किल ॥ २५ ॥

१ प्रथम्यन्तमेतत् । २ स्त्रीणाम् ।

इति व्याहृत्य कृष्णोऽगाद् धाम स्वं चिन्तयन् विधिम् । पुत्राऽर्थे सत्यभामाया धाम भाग्यस्य जङ्गमम् ॥ २६ ॥
उत्पन्नबुद्धिः कृष्णोऽथ तपश्चक्रेऽष्टमं व्रती । आरराध महाभक्त्या त्रिदशं नैगमेषिणम् ॥ २७ ॥
अचिन्त्यसिद्धेस्तपसः प्रभावादाविरास सः । त्रिदिर्नी(नी) पौषधस्यान्ते दिव्यवेषधरः सुरः ॥ २८ ॥
उवाच कृष्णं राजंस्त्वं किमर्थं स्मरसि स्म माम् । उवाच कृष्णो भामायां प्रद्युम्नसदृशं सुतम् ॥ २९ ॥
वाञ्छामि तत् स्मृतोऽसि त्वमिष्टं दैवतमात्मनः । इत्युक्ते सोऽतिसन्तुष्टो जगाद च जनार्दनम् ॥ ३० ॥
यस्यां भवति पुत्रेच्छा प्रियायां तां भजस्व भोः ! । आमोच्य कण्ठे मुक्तानां हारं तस्याः सुधोज्ज्वलम् ॥ ३१ ॥
प्रद्युम्नसदृशो भावी सूनुस्ते पुण्यवान् भृशम् । अत्रार्थे भव विश्वस्तो नान्यथा देवभाषितम् ॥ ३२ ॥
इत्युक्त्वा सोऽर्पयद् हारं मुक्ताद्युतिमनोहरम् । तिरोदधे तदाऽऽज्ञात इदं प्रीतेर्हि लक्षणम् ॥ ३३ ॥
उत्थाय शुचिना स्नात्वाऽम्भसा तीर्थभवेन सः । तपसोऽष्टमस्य पुण्यां पारणां पायसीं व्यधात् ॥ ३४ ॥
प्रज्ञप्त्या ज्ञातवृत्तान्तः प्रद्युम्नोऽतुलविक्रमः । ऊचिवान् रुक्मिणीमम्बां हारमादत्स्व तं स्वयम् ॥ ३५ ॥
मत्तुल्यस्ते सुतो भावी भ्राता मेऽस्तु पराक्रमी । रुक्मिण्यूचे त्वयैवाहं कृतार्थाऽस्मि सुतेन भोः ! ॥ ३६ ॥
सिंहमातैकपुत्रा स्यात् सुखं जीवति तेन सा । भूरिभिर्न सुतैः कार्यं यौवनक्लेशकारिभिः ॥ ३७ ॥
तदोचे रुक्मिणीं पुत्रो मातः ! ते काऽस्ति वल्लभा । सपत्नीष्वपि सर्वासु प्रेमपात्रं सदाऽपि हि ॥ ३८ ॥

१ क्रियाम् ।

तां निवेदयितेनाऽह तस्यै पुत्रं ददे मुदा । सकलेष्वपि कार्येषु स स्यान्मम सहायकः ॥ ३९ ॥
अम्बा जगाद हे वत्स ! मम जाम्बुवती सखी । विरहे ते सहायाऽभूद् भामासापत्न्यसंकटे ॥ ४० ॥
जाम्बुवत्यै सुतं देहि तेन त्वं शक्तिमान् यदि । जगाम धाम धिमान् स ओमिति प्रतिपद्य तत् ॥ ४१ ॥
अथ विद्याप्रभावेण चक्रेऽसौ जाम्बवत्सुताम् । भामारूपधरां सद्यो न सिध्येद्विद्यया हि किम् ? ॥ ४२ ॥
सभोगसमयं ज्ञात्वा सत्यास्थानेऽथ रुक्मिणी । प्रेषयामास सदने हरेस्तां जाम्बवत्सुताम् ॥ ४३ ॥
संध्यायां स्फारशृङ्गारां तां विलोक्य समागताम् । निधाय कण्ठकन्दल्या हारं त देवतार्पितम् ॥ ४४ ॥
रमयामास दाशार्हो बलवान् बलवीर्यकः । सिंहः सिंहीमिव स्वैरं करीव करिणीमिव ॥ ४५ ॥
महाशुक्रात् परिच्युत्य देवः कैटभसंज्ञकः । आययावुदरे तस्याः सुतत्वेन तदैव सः ॥ ४६ ॥
भुक्ता सिंहेन सिंहीव हस्तिनीव च हस्तिना । सगर्भा स्व ययौ धाम तं हार विभ्रती सती ॥ ४७ ॥
अथ सा सत्यभामाऽपि स्फारशृङ्गारशोभिनी । ताम्बूलं बिभ्रती हस्ते ययौ सभोगसद्मनि ॥ ४८ ॥
कृष्णो विचिन्तयामास भुक्ता मुक्ता मयाऽधुना । गताऽपि किं बालित्वाऽगाद्यद्वास्मि छलितः किमु ॥ ४९ ॥
कयाऽपि भामारूपेण किं वा मे चिन्तयाऽनया । वृत्तान्त नैव जानाति यतः कश्चन गोपितम् ॥ ५० ॥
भोगाऽतृप्ता भवेयुर्यत् स्त्रियो हि नवयौवनाः । तेनैवेयमसन्तुष्टा भूयोऽपि सुरतार्थिनी ॥ ५१ ॥
आगता निष्फला माऽस्तु विचिन्त्येति तया सह । रन्तुं प्रवृत्ते सद्यो वासुदेवो महाबलिः (लः) ॥ ५२ ॥

संभोगसमयं ज्ञात्वा प्रद्युम्नः सत्यया सह । वादयामास बलवान् भम्भां क्षोभकरीं तदा ॥ ५३ ॥
श्रुत्वा वाढस्वरां भम्भां विश्वप्रक्षोभकारिणीम् । क्षुभितो भवति स्माऽऽशु केशवोऽपि हि तत्क्षणम् ॥ ५४ ॥
भावोऽभूद् भयभीतस्य भम्भाध्वानं निशाम्यतः । उत्थाय सद्यः सभयो बहिरागत्य सद्मनः ॥ ५५ ॥
केनेयं ताडिता भेरीत्यपृच्छत् स्वं परिच्छदम् । अवादयदिमां नाथ ! रौक्मिणेयो महाबली ॥ ५६ ॥
इत्युक्ते तेन दाशार्हश्चिन्तयामास चेतसि । हा हाऽद्य छलिता भामा महाशक्तिभृताऽमुना ॥ ५७ ॥
सुतः सापत्न एकोऽपि सपत्नीशतकार्यकृत् । वने मृगारिरेकोऽपि हन्यात्किं न बहून् मृगान् ? ॥ ५८ ॥
भामया सह संभोगः सभयो भवति स्म यत् । ततो भावी सुतो भीरुर्निश्चिकायेति केशवः ॥ ५९ ॥
अन्यस्यै विहितं कार्यमन्यस्याः फलितं यतः । अवश्यं भाविनो भावा भवेयुर्नान्यथा क्वचित् ॥ ६० ॥
गतोऽथ रुक्मिणीसद्मन्यपश्यज्जाम्बवत्सुताम् । भूषितां तेन हारेण कुचद्वन्द्वविलोठिना ॥ ६१ ॥
सासूयं प्रेक्षमाणं तं काकोचे जाम्बवत्सुता । किमीक्षसे त्वं वक्राक्षं किं नाऽस्मि तव पत्न्यहम् ॥ ६२ ॥
सहासं हरिरप्यूचे दिव्यो हारः कुतस्तव । ऊचे सा त्वत्प्रसादेन सर्वं मे सुलभं प्रभो ! ॥ ६३ ॥
रात्रौ यत्तु कृतं कार्यं तदद्यैव हि विस्मृतम् । त्वयैव हारो दत्तो मे विस्मृतोऽद्यैव किं तव ? ॥ ६४ ॥
इत्युक्त्वा सा समाचख्यौ सिंहशावप्रवेशनम् । कुक्षौ स्वप्ने हरिस्तुष्टः साधु साध्विति चाऽवदत् ॥ ६५ ॥
अस्मात् स्वप्नात् सुतो भावी विश्वाऽतुल्यपराक्रमः । प्रद्युम्नः किं द्वितीयस्ते रूपेण च सुधारुचिः ॥ ६६ ॥

इत्युक्त्वा च ययौ विष्णुरहो च्छलपरायणः । रुक्मिण्याः सुत एकोऽपि कार्यं कीदृक् चकार सः ॥ ६७ ॥
कुरुते कार्यमेकोऽपि सिंहो यत् क्षणतो बली । मृगास्तु शतशस्तन्न कुर्युर्वर्षशतैरपि ॥ ६८ ॥
चिन्तयन्निति चित्तेऽस्थान्नैनं भावं जगाद च । भामायै स्त्रीस्वभावं हि जानन् शास्त्राऽब्धिपारगः ॥ ६९ ॥
पूर्णे च समयेऽसूत सुतं सा जाम्बवत्सुता । प्राचीव व्योममाणिक्यं शमीव च विभावसुम् ॥ ७० ॥
नाम चक्रे हरिस्तस्य शाम्ब इत्यं जगत्प्रथम् । सारथेरपि तनुजौ भवतः स्म तदैव हि ॥ ७१ ॥
दारुको जयसेनश्च नाम चक्रे तयोः पुनः । सुबुद्धिर्मन्त्रिणश्चापि नाम्ना सूनुरजायत ॥ ७२ ॥
क्रमेण सत्यभामाऽपि सुत सुते स्म भानुकम् । परं स भयशीलत्वाद् भीरुनाम्नैव पप्रथे ॥ ७३ ॥
अन्यासामपि पत्नीनां तनया नयशालिनः । अभूवन्ननुकूले हि दैवे स्युः सम्पदुर्भयः ॥ ७४ ॥
वर्धते स्म सम शाम्बो मन्त्रिणः सारथेरपि । सुतैः सहाऽष्टवर्षीयो जातः पुष्टिं परां भजन् ॥ ७५ ॥
कलाः समस्ता जग्राह लीलयैव हि सद्गुरोः । प्राज्ञानां हि कलाभ्यासः क्रीडामात्र प्रजायते ॥ ७६ ॥
अथाऽश्रौषीत् सुतां भ्रातुर्वैदर्भी नाम रुक्मिणः । स्त्रैणगर्वकपां कान्त्या जयन्तीमिव वज्रिणः ॥ ७७ ॥
निजपुत्रस्य योग्येयमिति प्रैषीन्नरं पुरे । स्वजन्मनः प्रियालापं लेखहस्त वचस्विनम् ॥ ७८ ॥
गत्वा प्रणम्य भक्त्या स ऊचिवान् रुक्मिणं प्रति । लेखं समर्प्य हृल्लेखाद्वाचिक तज्जगाद च ॥ ७९ ॥

१ सूर्यम् । २ अग्निम् । ३ स्वजन्मन पुरे इति सबन्धः ।

देव ! त्वां रुक्मिणी वक्ति भगिनी प्रेमपूर्वकम् । अकृतश्च त्वया राजन् ! परं दैवकृतोऽभवत् ॥ ८० ॥
कृष्णेन साकं संयोगो मम क्रमेमनोरमः । अथास्तु त्वत्कृतो भ्रातः ! वैदर्भ्यास्तनुजेन मे ॥ ८१ ॥
विद्यावान् बलवान् सूनुः प्रद्युम्नो विश्वविश्रुतः । वैदर्भी तं वरं प्राप्य प्राप्नुतां सन्ततिं वराम् ॥ ८२ ॥
प्राग्जातां वैरवार्तां तां स्मरन्नथ जगाद तम् । कोपाटोपभराज्जातभृकुटीभङ्गभीषणः ॥ ८३ ॥
अहं रुक्मी प्रदास्यामि चाण्डालाय वरं सुताम् । न पुनर्गोपपुत्राय प्रद्युम्नाय कदाचन ॥ ८४ ॥
गोपस्य पत्नी त्वं भूत्वा लज्जसेऽद्यापि न स्वसः ! । पितरौ वञ्चयित्वा स्वौ कृत्वा कपटपाटवम् ॥ ८५ ॥
मद्वैरिणे पुनर्दत्त्वा लज्जयामि कुलं किमु । त्वयैव तत्र गतया कृतमस्त्वियता स्वसः ! ॥ ८६ ॥
वाचिकं कथयेर्दूत ! रुक्मिण्या इति सत्वरम् । इत्थं विसृष्टवान् दूतमदत्त्वैव हि भोजनम् ॥ ८७ ॥
दूतोऽपि गत्वा रुक्मिण्यै शंसति स्माऽपमानितः । परं वचनचातुर्यात् संस्कृतं तद्विधाय च ॥ ८८ ॥
अमानिता भृशं भ्रात्रा लज्जिताऽभूत् सुदुःखिता । अब्जिनीव निशारम्भे कौमुदीव दिवामुखे ॥ ८९ ॥
अत्रान्तरे समागत्य प्रद्युम्नो मातरं निजाम् । नमति स्माऽऽतुरां दृष्ट्वाऽपृच्छद् दुःखस्य कारणम् ॥ ९० ॥
त्रिखण्डाऽधिपतिः कृष्णः कान्तस्ते प्रीतिमान् पटुः । सुतोऽहं च जगज्जेता संयोजितकरोऽस्मि ते ॥ ९१ ॥
तथापि मातः ! किं दुःखं तवाऽस्ति वद सत्वरम् । अपनीय क्षणाद्येनाऽनृणोऽभूवं प्रमोदभाक् ॥ ९२ ॥
इत्युक्ते रुक्मिणी प्राह वार्तां सर्वां यथाभवाम् । भूत्वा चाण्डाल एवाऽहं परिणेष्यामि तत्सुताम् ॥ ९३ ॥

१ मम क्रमेण सामर्थ्येन भाग्येन वा मनोरमः । २ तद्वाचिकम् ।

प्रतिज्ञायेति सक्रोधो निर्जगाम गृहात्ततः । गत्वा च ज्ञापयामास भ्रात्रे शाम्बाय सत्वरम् ॥ ९४ ॥
द्वितीयं तन्मन इव सोऽप्यभूदुत्सुकः क्षणात् । जग्मतुस्तौ विमानेन सद्यो मातुलपत्तनम् ॥ ९५ ॥
चण्डालरूपौ तौ भूत्वा कृत्वा चाण्डालिकां करे । चतुष्पथे गायतः स्म किनराविव सुस्वरौ ॥ ९६ ॥
जह्रतुः पौरचेतांसि ज्ञातौ तौ रुक्मिणा ततः । आहूय गाययामास स्वोत्संगस्था सुतां दधत् ॥ ९७ ॥
हृष्टचेता अपृच्छच्च समायातौ कुतो युवाम् । तावूचतुश्च प्रथमात् स्वर्गात् श्रीद्वारिका पुरीम् ॥ ९८ ॥
निर्मितां स्वःपतेर्वाचा धनदेन प्रमोदतः । कृते श्रीवासुदेवस्य वीक्षितुं तां किलागतौ ॥ ९९ ॥
ततः क्रमादिहायातौ श्रुत्वा त्वन्नगरीं वराम् । कौतुकं वीक्षितुं स्वर्गान्निर्गतौ स्वो यतो नृप ! ॥ १०० ॥
अत्रान्तरे च वैदर्भी तौ पप्रच्छ मनस्विनी । युवां किं तत्र कृष्णस्य जानीथो रुक्मिणीसुतम् ॥ १०१ ॥
प्रद्युम्नमित्यथ प्राह शाम्बो बिम्बसमाधरः । प्रद्युम्नं को न जानीते स्त्रैणकार्मणरूपकम् ॥ १०२ ॥
यया महत्तपस्तप्तं पूर्वस्मिन्नेव जन्मनि । सैवाऽऽप्नुयाद्वरं तं हि सती वरत्रिलोचनम् ॥ १०३ ॥
श्रुत्वा सोत्कण्ठिता जज्ञे प्रद्युम्नकृतनिश्चया । तदा च रुक्मिराजस्य मत्तेभश्छिन्नबन्धनः ॥ १०४ ॥
अधावत जनं हन्तुं पातयन्हट्टसन्ततिम् । करमुच्छालयन् स्वैरं क्रोधान्धो मूर्तिमान् यमः ॥ १०५ ॥
पूच्चकार जनः सर्वश्चन्द्रशालास्थितो गृहे । न शशाक परं रोद्धुं नदीपूरमिवाऽऽगतम् ॥ १०६ ॥
श्रुत्वा तद्रुक्मिनृपतिर्पटहं पर्यदापयत् । यः कश्चिदेनं गृह्णीयाद् बध्नीयाच्च वशीकृतम् ॥

ददामि तस्याऽभीष्टं हि वस्तुजातं ततश्च तौ । पटहं दध्रतुः प्रीत्या गीत्या तं चक्रतुर्वशम् ॥ १०८ ॥
वशीकृत्य समारुह्य निजालानं बबन्धतुः । चमत्कारं नृपो दृष्ट्वा हृष्टोऽभून्मानसे निजे ॥ १०९ ॥
आकार्य स्वनरान्प्रेष्य रुक्म्यूचे तौ मुदाऽऽकुलः । याचेथां यद् मनोऽभीष्टं निर्विलम्बं ददामि तत् ॥ ११० ॥
इत्युक्ते प्राहतुस्तौ च देहि मां दुहितां निजाम् । नास्त्यस्मदालये पाककारिका विदुषीदृशी ॥ १११ ॥
तत् श्रुत्वा कर्णयोर्वज्रपातप्रभमिदं वचः । रुक्मी क्रोधभराक्रान्तस्तौ पुरान्निरवासयत् ॥ ११२ ॥
अथाह शाम्बः प्रद्युम्नं क्रीडया ह्यनया कृतम् । भूयान् विलम्बः क्षमते मातुर्दुःखावहो न हि ॥ ११३ ॥
वैदर्भीं परिणीयाऽथ गम्यते नगरे निजे । तयोर्वार्तयतोरेवमाजगाम निशाऽसिता ॥ ११४ ॥
निद्रापरेषु लोकेषु विद्यया रुक्मिणीसुतः । शाम्बं विमुच्य तत्रैव वैदर्भीसदने ययौ ॥ ११५ ॥
सुप्तां सप्तमभूम्यां सः स्वकीयविरहासहाम् । चक्रवाकीमिवैकान्तां पश्यति स्म शुभाननाम् ॥ ११६ ॥
पदप्रहारात्तस्याशु जागर्ति स्म विलोक्य तम् । पप्रच्छ कोऽसि कोऽसीति कथमागा इह ध्रुवम् ? ॥ ११७ ॥
मा स्म भैषीः प्रिये ! सोऽहं प्रद्युम्नो रुक्मिणीसुतः । रुक्मिण्या प्रेरितस्त्वां हि परिणेतुमिहागमम् ॥ ११८ ॥
इत्युक्त्वा रुक्मिणीलेखं हस्ते कृतकमार्पयत् । वाचयामास चतुरा कलानीराधिपारगा ॥ ११९ ॥
चिन्तयामास सा हृष्टा त्रपाऽवनतकन्धरा । अहो ! सुघटितं चक्रे दैवेन हि शुभेन मे ॥ १२० ॥
विलोक्य वाचि मूकां तां लज्जयाऽधोमुखीं सतीम् । भावं विज्ञाय चित्तस्थं वह्निं प्रादुश्चकार सः ॥ १२१ ॥

विद्याबलेन वीवाहसामग्रीपूर्वकं तदा । विधाय पाणिग्रहणं साक्षीकृतविभावसु ॥ १२२ ॥
आमुक्तकङ्कणः श्वेतदुकूलां कृतभूषणाम् । रमयामास तां स्वैरं नानासुरतकेलिभिः ॥ १२३ ॥
मदनः किं प्रतीक्षेत सामग्रीमिलने सति । क्रीडाजुषोस्तयोरेवं सद्योऽगात् सा विभावरी ॥ १२४ ॥
निशाशेषं निरीक्ष्याऽथ प्रद्युम्नः मोचिवान् वधूम् । याम्यहं देवि ! शाम्बस्य पार्श्वे भ्रातुः कनीयसः ॥ १२५ ॥
पितृभ्यां स्वजनेनाऽथ पृच्छ्यमानाऽपि मा ब्रवीः । ध्रुवं मौनवती स्थेया मौनं हि शरणं वरम् ॥ १२६ ॥
त्वद्देहरक्षा विहिता विद्ययाऽस्ति मयाऽनघे ! । नास्ति कश्चिदुपद्रोतु समर्थस्ते मनागपि ॥ १२७ ॥
इत्युक्त्वाऽथ ययौ कार्ष्णिर्भ्रातुरन्तिकमादरात् । वैदर्भी सुरतश्रान्ताऽखिलरात्रेश्च जागरात् ॥ १२८ ॥
सुष्वाप सुखशय्यायां घोरनिद्रामुपागता । प्रगेऽपि न जजागार दधत्युद्वाहलक्षणम् ॥ १२९ ॥
धात्री तदीया तत्राऽगाद् दृष्ट्वा वीवाहलक्षणम् । प्राप चेतश्चमत्कारं भयभ्रान्ता च साऽभवत् ॥ १३० ॥
गत्वा सवेपथुः प्राह जनन्यै तद्धि चेष्टितम् । जननी ज्ञापयामास राज्ञे सुप्तोत्थिताय च ॥ १३१ ॥
राजा राज्ञी च संभ्रान्तौ तावागत्य विलोक्य तत् । पृच्छतः स्म सुतां सर्वं बलाज्जागरितां तदा ॥ १३२ ॥
सा च मौनवती तस्थौ मूकेव धवशिक्षया । भृशं पृष्टाऽपि न ब्रूते पितृभ्यां स्म मनागपि ॥ १३३ ॥
ततः क्रोधभराक्रान्तो रुक्मी दध्यौ मनस्यदः । अदत्ताऽपि हि कन्येयं यूना भुक्तवती कृता ॥ १३४ ॥
जाता कुलकलङ्कायाऽधमेयं निन्द्यकार्यकृत् । चाण्डालाभ्यां वरं ताभ्यां ददामि वरमार्गिताम् ॥ १३५ ॥

पालयामि वचः स्वीयं सत्यव्रतमहाधनः । विचिन्त्येति नरान् प्रेष्याऽजूहवत्तौ क्रुधोद्धुरः ॥ १३६ ॥
आगतौ तौ प्रति प्रोचे दीयते कन्यका मया । गृहीत्वा यातं तत्रैव न यत्राऽस्या हि दर्शनम् ॥ १३७ ॥
प्राहतुस्तौ ततो हृष्टौ वैदर्भी त्रपया नताम् । हे राजपुत्रि ! गेहे त्वमावयोरागता सती ॥ १३८ ॥
विक्रयं चर्मरज्जूनां जलौकोग्रहणं तथा । संमार्जनीनां संदर्भं करिष्यसि दिवानिशम् ॥ १३९ ॥
तदाऽऽगच्छ न चेत्तिष्ठेत्युक्ते ताभ्यां च साऽब्रवीत् । कारयिष्यति यद्दैवं कृतं पूर्वं शुभाऽशुभम् ॥ १४० ॥
तदेवाऽहं करिष्यामि नाऽतिक्रम्यं पुराकृतम् । दमयन्ती रामपत्नी जाता दैववशाद् ध्रुवम् ॥ १४१ ॥
वार्तैव मादृशां का तन्मां लात्वा चलतं युवाम् । स्थानं यथेप्सितं यामः कुर्मो भाग्यपरीक्षणम् ॥ १४२ ॥
तौ ततस्तामुपादाय क्षणाज्जग्मतुरन्यतः । पश्चात्तापपरो रुक्मी रोदिति स्मेति पर्षदि ॥ १४३ ॥
हे पुत्रि ! किं कृतं कार्यं मन्मनोरथपादपः । समूलोन्मूलितोऽकस्मादविचारितकृत्यतः ॥ १४४ ॥
स्वयंवरेण वीवाहश्चिन्तितोऽभून्मया ध्रुवम् । द्रव्यकोटिव्ययात्तादृग्राजपुत्रेण निश्चितम् ॥ १४५ ॥
चाण्डालौ हि त्वया प्राप्तौ न तत्प्रातिकृतिः खलु । कर्मणामर्जितानां हि पूर्वजन्मनि विद्यते ॥ १४६ ॥
पुत्रि ! त्वं क्वाऽसि वैदर्भि ! संयोगः कुत आवयोः । मया क्रोधान्धकेनाप्यविमृश्यैव च कारिणा ॥ १४७ ॥
कृतस्तेऽनुचितो योगो निन्दनीयो जनेऽखिले । चण्डालाभ्यां यतो दत्ता प्रेमपात्रं त्वमीदृशी ॥ १४८ ॥
त्वया विना ममोत्सङ्गो रिक्तोऽयं नैव शोभते । विना मणिं यथा स्वर्णभूषणं न मनोहरम् ॥ १४९ ॥

रुक्मिण्या च भगिन्या मे याचिताऽपि स्वसूनवे । न दत्ताऽपि च दत्ताऽसि चण्डालाभ्यां जडत्वतः ॥ १५० ॥
निद्रामलभमानोऽथ शुश्राव मुरजध्वनिम् । सुप्तेषु नागरेषूच्चैर्निशीथे तमसां चिते ॥ १५१ ॥
चिन्तयामास चित्ते स कस्य गेहे त्वियान्महः । मम दुःखदिनेऽप्येव मृदङ्गध्वनिरुत्कटः ॥ १५२ ॥
विलोकयत रे भृत्या कस्य गेहेऽस्त्ययं महः । ते च शब्दानुसारेण जग्मुः स्वामिनिदेशतः ॥ १५३ ॥
प्रासादं सप्तभौमं ते स्वर्णप्राकारसुन्दरम् । ददृशुर्द्वारपालैश्चाकीर्णं गोपुरमण्डितम् ॥ १५४ ॥
पृच्छन्ति स्म द्वारपालान् कस्येदं सौधमीदृशम् । कश्चास्मिन् राजपुत्रोऽस्ति सगीतं कारयन् हि यः ॥ १५५ ॥
ऊचुस्ते द्वारिकाधीशवासुदेवस्य नन्दनः । प्रद्युम्नः शाम्बसहितः कृतवीवाहमङ्गलः ॥ १५६ ॥
वैदर्भ्या सह रमते सुतया रुक्मिभूपतेः । श्रुत्वा ते मुदिताः सर्वे गत्वाऽऽचख्युर्महीभुजे ॥ १५७ ॥
सद्यः प्रमुदितो जज्ञे सर्वाङ्गपुलकं दधत् । अमात्यान् प्रेष्य बहुशः सद्यस्तावानिनाय सः ॥ १५८ ॥
चारणैर्भूरिभिः पठ्यमानाऽनेकाऽवदातकौ । वैदर्भीसहितौ नैकपदातिपरिवारितौ ॥ १५९ ॥
ऋद्ध्या परमया तत्राऽऽजग्मतुर्नृपपर्षदि । राजाऽपि परमप्रेम्णा भृशं सदकरोच्च सः ॥ १६० ॥
महाभाग्याऽसि पुत्रि ! त्वं यया प्राप्तो ह्ययं वरः । इति प्रशंसन् वैदर्भी स्वोत्सङ्गस्था मुदाऽकरोत् ॥ १६१ ॥
तुरङ्गमान् गजांश्चैव बहून्याभरणानि च । दत्त्वा तौ सुतया सार्द्धं विससर्ज महीपतिः ॥ १६२ ॥
अथ सम्पूर्णकार्यत्वात् प्रमदाकुलमानसौ । निर्विलम्बं महोत्साहौ रथारूढौ प्रचेलतुः ॥ १६३ ॥

अल्पैरेव दिनैः प्राप्तौ पुरीं श्रीद्वारिकाभिधाम् । गवाक्षास्थितनारीभिः प्रेक्ष्यमाणौ वधूयुतौ ॥ १६४ ॥
रुक्मिणीनयनानन्दशशिनौ कृतमङ्गलौ । प्रवेशं चक्रतुः सौधे दिने परमशोभने ॥ १६५ ॥
आगत्य रुक्मिणीपादौ नमतः स्म वधूयुतौ । रुक्मिण्यपि वधूं दृष्ट्वा परमप्रेमभागभूत् ॥ १६६ ॥
नवयौवनया सार्द्धं वैदर्भ्योचितयोगया । रममाणः स्म जानाति न कालं मुदिताशयः ॥ १६७ ॥
हेमाङ्गदमहीपालपुत्रीं शाम्बोऽतिसुन्दराम् । सुहारिण्यभिधां तत्र परिणिन्ये पटूत्सवम् ॥ १६८ ॥
अथ क्रीडापरः शाम्बो रोदयामास भीरुकम् । भामापुत्रं सहजातं निर्बलं बलवत्तरः ॥ १६९ ॥
हारायित्वा धनं द्यूते जग्राह च बलादपि । मुद्रिकां बहुभूषां च लाति स्म तदनर्पणे ॥ १७० ॥
रुदन् गत्वा स आख्यच्च मातुः शाम्बविचेष्टितम् । निर्बलो यत् सुतो गत्वा मातुः शरणमाश्रयेत् ॥ १७१ ॥
भामाऽपि वासुदेवाय सोऽपि जाम्बवतीं प्रियाम् । तदा जाम्बवती प्राहाऽलीकमेषा प्रजल्पति ॥ १७२ ॥
शाम्बः दुर्विनयो नैवाऽश्रावि कश्चिन् मयाऽनघ[1] ! । सुकुमारतरः शाम्बो नैव वेत्ति कलिं कचित् ॥ १७३ ॥
एषा सपत्नीमात्सर्यात् सदाऽलीकवदावदा । रुक्मिण्या सह मैत्रीत्वात् स्पर्द्धतेऽपि मया सह ॥ १७४ ॥
हरिरूचे न जानाति जननी स्वसुतानयम् । बालस्याऽपि हि सिंहस्य गजा विद्युः पराक्रमम् ॥ १७५ ॥
दर्शयिष्यामि शाम्बस्याऽन्यायं[2] प्रस्मरं जने । अहर्निशं शृणोम्येवं तस्य दुर्ललितं पुरे ॥ १७६ ॥

१ हे कृष्ण ! । २ अनयमन्यायम् ।

एकस्मिन् समये जातः कृष्ण आभीररूपभृत् । ऊर्णानिवसनाऽऽभीरीरूपा जाम्बवती कृता ॥ १७७ ॥
मस्तके दधि-दुग्धादिभाण्डानि दधती सती । कृष्णाभीरं पुरस्कृत्याऽविशत् श्रीद्वारिकां पुरीम् ॥ १७८ ॥
दधि-दुग्धादि गृह्णीत पूत्कारमिति कुर्वती । रममाणेन शाम्बेन दृष्टा रूपवती च सा ॥ १७९ ॥
शाम्बो जातस्मरावेशः आभीरीं चाऽब्रवीदिति । एह्येहि दुग्धं गृह्णामि मूल्यं दत्त्वा यथोचितम् ॥ १८० ॥
पृष्ठे लग्ना जगामैषा कियत्पन्थानमेव हि । शून्यदेवकुले गत्वा शाम्ब आह्वास्त तामथ ॥ १८१ ॥
आहूताऽपि न यावत्सा शून्यदेवकुलेऽविशत् । हस्ते जग्राह तां गाढं नेतुकामो बलादपि ॥ १८२ ॥
साऽवोचन्नैव वेक्ष्यामि शून्यं देवकुलं यदि । गृह्णासि दुग्धमत्रैव गृहाण न बलं कुरु ॥ १८३ ॥
वसुदेवसुतो राजा जयति न्यायनिष्ठुरः । स चेद् ज्ञास्यति तेऽन्यायं कष्टं भाव्यतिदुस्सहम् ॥ १८४ ॥
मुञ्च मुञ्चेति मां सद्यस्तदा शाम्बोऽब्रवीदिति । किं करिष्यति कृष्णो मा ज्ञातोऽस्ति मयका बहु ॥ १८५ ॥
याहि पूत्कुरु तस्याग्रे नैव मुञ्चाम्यहं शुभे ! । इत्युक्त्वाऽऽकृष्टुमारेभे करे निवसनं दधत् ॥ १८६ ॥
एनं व्यतिकरं दृष्ट्वा तमाभीर उवाच च । रे गृह्णासि किं मद्भार्यां कृष्णे सत्यपि राजनि ॥ १८७ ॥
तदा लकुटमुत्पाट्य शाम्बस्तं हन्तुमुद्यतः । ज्ञातं कृष्णेन बालोऽसौ हनिष्यत्येव निश्चितम् ॥ १८८ ॥
अहं तु बालं किं हन्मीत्यतो रूपं विमुच्य तौ । बभूवतुर्मुख्यरूपं दधानौ प्रेमशालिनौ ॥ १८९ ॥

१ न्यायप्रवीण ।

दृष्ट्वा तौ पितरौ शाम्बः पिधायाऽऽस्यं पलायितः । लज्जमानो गृहे गत्वा सुष्वाप शयनीयके ॥ १९० ॥
उवाच कृष्णः स्वां पत्नीं दृष्टेयं सुकुमारता । सुतस्य सुकुमारस्य त्वया स्वस्य दृशाऽद्य भोः ! ॥ १९१ ॥
ईदृशं चेष्टितं चाहं शृणोमि प्रतिवासरम् । किं कुर्वे त्वस्य बालस्य त्वयि प्रेमनियन्त्रितः ॥ १९२ ॥
इत्युपालभ्य तां कृष्णः स च सा च गृहं गतौ । द्वितीयेऽह्नि प्रभाते तं प्रणामायाऽप्यनागतम् ॥ १९३ ॥
वीक्ष्याऽऽकारयितुं प्रैषीन्नरानाप्तान् जनार्दनः । आकारितः समागाच्च कीलिकां घट्यन्नयम् ॥ १९४ ॥
कृत्वा प्रणामं तस्थौ च सुमुखः कीलिकाकरः । कृष्णेन पृष्टोऽभाषिष्ट वचनं निष्ठुरं ह्यदः ॥ १९५ ॥
ह्यस्तनं मत्कृतं योऽद्य व्यलीकं कथयिष्यति । तस्याऽऽनने मया क्षेप्या कीलिका घटिता यतः ॥ १९६ ॥
इत्युक्ते प्रज्वलत्क्रोधो हरिस्तं प्रत्युवाच च । बालेनाऽपि त्वया पाप ! नगरी मे विनाशिता ॥ १९७ ॥
कियदागोऽपि सोढव्यमुन्मत्ततनुजन्मनः । पुरं विमुच्य याहि त्वं मा दर्शय मुखं तव ॥ १९८ ॥
शशंस मातुरागत्य पितुराज्ञां तथाकृताम् । प्रद्युम्नस्य च दुर्लङ्घ्यां वेणीमिव नदीशितुः ॥ १९९ ॥
प्रद्युम्नो बान्धवप्रेम्णा ददौ शाम्बाय गच्छते । नाम्ना प्रज्ञप्तिकां विद्यां दत्त्वा शिक्षां न्यवर्तत ॥ २०० ॥
प्रद्युम्नोऽपि तथा भीरुं भापयामास ताडनात् । तथैव हस्तादाच्छिद्य गृह्णाति स्म च मोदकान् ॥ २०१ ॥
निर्बलो भीषणो भीरुर्भामाऽग्रे रोदिति स्म तत् । पृष्टोऽभाषिष्ट सकलं प्रद्युम्नस्य विचेष्टितम् ॥ २०२ ॥

१ कुर्वन् ।

भामाऽथ गाढपूत्कारा समागत्याऽवदत्तराम् । शाम्बवत् किं न निर्यासि बहिः पुर्याः सुदुर्मते ! ॥ २०३ ॥
हसित्वोवाच भामां स रे मातः ! कुत्र याम्यहम् । साऽवदच्च श्मशाने त्वं गच्छ यत्राऽस्ति तेऽनुजः ॥ २०४ ॥
पुनर्बभाण प्रद्युम्नो ललितं हसितं वचः । वद मातः ! कदाऽऽगम्यं मया सा चाऽब्रवीदिति ॥ २०५ ॥
यदा शाम्बं करे कृत्वाऽऽनयामि नगरीमिमाम् । महत्या संपदा साकं तदाऽऽगम्य त्वयाऽपि च ॥ २०६ ॥
ओमिति प्रतिपेदानः प्रद्युम्नो नगराद्बहिः । जगाम विरहासोढा शाम्बस्य मिषमाप्य तत् ॥ २०७ ॥
प्रद्युम्नमागतं श्रुत्वा शाम्बस्त्वरितमाययौ । किं वसन्तं विना कामस्तिष्ठेत् कृष्णश्च सात्वतम् ॥ २०८ ॥
क्रीडतः स्म मिलित्वोभौ वायु-वह्नी इव ध्रुवम् । क्रीडया नैकविधया समानबलसाहसौ ॥ २०९ ॥
श्मशानभूमौ मृतकदाहशुल्कं यथेच्छया । गृहीत्वा ददतुर्दग्धुं नगरीमृतकानि तौ ॥ २१० ॥
एवं रीत्या तिष्ठतः स्म विप्रलम्भाऽसहावुभौ । सुखं दुःखे च मित्रेण सहैव रुचिरे यतः ॥ २११ ॥
इतश्च भामाऽवसरं प्राप्य प्रमुदिता सती । क्रीडां चकार विविधां कृष्णेन सह सन्ततम् ॥ २१२ ॥
ताभ्यां गताभ्यां निर्विघ्नं संप्राप्य प्रमुदेतराम् । भोजनार्थी यथा प्राप्य निर्मक्षिकगृहं प्रति ॥ २१३ ॥
अथ सा भीरुपुत्रार्थे कन्यैकोनशतं वरम् । अमेलयच्चटद्रूप यूनां कामद्रुपल्लवम् ॥ २१४ ॥
एका यदि मिलेत्कन्या विवाहं कारयामि तत् । एकस्याः कन्यकायाः सा कृते प्रैषीन्नरान् बहून् ॥ २१५ ॥
वयः कुलानुरूपां तां भामा नाप परं क्वचित् । ताम्यन्ती तत्कृतेऽस्थाच्च रतिं नो लभते स्म सा ॥ २१६ ॥

एवं वृत्तान्तमाचख्यौ विद्या प्रज्ञप्तिनामका । प्रद्युम्नस्वामिनः स्वस्य चारीव हि यथाभवम् ॥ २१७ ॥
विकुर्व्य सेनां प्रद्युम्नो गजा-ऽश्व-रथ-पत्तिभिः । तादृक्पटकुटीर्दत्वा द्वारिकाया बहिः स्थितः ॥ २१८ ॥
विख्यातमकरोन्नाम जितशत्रुरिति स्वकम् । शाम्बं चकार कन्यां स जयन्तीमिव रूपतः ॥ २१९ ॥
इतस्ततो भ्रमन्ती सा क्रीडति स्म सखीवृता । तादृग्निवसना तादृग्रूपाऽऽभरणभूषिता ॥ २२० ॥
दधती कबरीं श्यामां कामस्य करवालिकाम् । श्री(यू)नो मारयितुमिव शाणोल्लीढां शितत्विषम् ॥ २२१ ॥
मस्तके बिभ्रती चुडारत्नं कथयती च किम् । यूनः प्रति जगद्वासान् कुमारीरत्नमस्म्यहम् ॥ २२२ ॥
कर्णयोः कुण्डले स्वर्णमणिमालाविभूषिते । निर्जितौ मुखकान्तिभ्यां पुष्पदन्ताविवागतौ ॥ २२३ ॥
शरदर्द्धशशाङ्कः किं यस्या भालो विराजते । प्रवालमेव जानेऽहं यस्या ओष्ठाधरौ स्फुटम् ॥ २२४ ॥
किं दन्ता दाडिमस्याऽहो वीजानां पङ्क्तिके उभे । मुखचन्द्रप्रकाशोऽयं स्मितमस्या विराजते ॥ २२५ ॥
यस्याः कपोलौ राजेते क्रमपीनत्वशालिनौ । किमु कामकुमारस्य स्थिते गण्डोपधानके ॥ २२६ ॥
मुक्ताफलानां हारेण मणीनां हारितां पुनः । जाह्नवी-यमुनायोगात्तीर्थं किं कण्ठकन्दली ॥ २२७ ॥
यस्यां त्रिपथगानद्यां बाहू किं लतिके उभे । यस्या बस्तिप्रदेशेऽस्ति निर्वातं स्मरमन्दिरम् ॥ २२८ ॥
स्मररत्योर्विवाहे किं विधिश्चक्रे निवेशनम् । कदलीस्तम्भयोरूर्वोः क्रमपीनत्वमाप्तयोः ॥ २२९ ॥

---

१ पत्तिरिव । २ यथातथम् । ३ जगति वसनशीलान् । ४ सूर्याचन्द्रमसौ ।

यस्या जङ्घे विराजेते क्रमात् प्रतलताश्रये । स्तनवास्तिनितम्बानां गुरुत्वाय स्वयंभुवा ॥ २३० ॥
आभ्यां सकाशादादाय चक्रे किं दलसञ्चयः । यस्या गुल्फावदृश्यत्वविधां साधयतः स्म किम् ॥ २३१ ॥
यस्याः करौ च चरणावीषद्रक्ततलमञ्जुलौ । चित्रं रागममुञ्चानौ यूनां रागं वितेनतुः ॥ २३२ ॥

॥ चतुर्दशभिः श्लोकैः शाम्बकुमारीरूपवर्णनम् ॥

एकदा भीरुधात्र्या सा ददृशे नयनामृतम् । गत्वाऽऽख्याति स्म सा भामां निपतन्मस्तका वरा ॥ २३३ ॥
भामा मैषीन्नरान् स्वीयान् वस्त्राभरणभूषितान् । जितशत्रुनृपाभ्यर्णे याचितुं तां कुमारिकाम् ॥ २३४ ॥
ते नराः सम्यगागत्य नेमुर्विनयपूर्वकम् । आचख्युः सत्यभामा त्वां कृष्णाग्रमहिषी वरा ॥ २३५ ॥
याचते कन्यकामेनां भीरोरर्थे सुतस्य हि । कन्यानां शतमेकोन मेलितं तु तया वरम् ॥ २३६ ॥
अनयाऽऽगतया स्याच्च शतं पूर्णं मनोरथम् । एतच्चित्ते निधेहि त्वं वाचिकं सत्ययाऽर्पितम् ॥ २३७ ॥
कन्यां प्रदेहि स्यादेवं वासुदेवोऽपि तुष्टिमान् । यत् षोडशसहस्राणां पत्नीनां साऽस्ति मुख्यतः ॥ २३८ ॥
इत्युक्ते जितशत्रुस्तानुवाच विनयोत्तमम् । एवमस्तु परं भामाऽङ्गीकुर्याद्वचनद्वयम् ॥ २३९ ॥
मदीयं चेत्तदा नूनमाद्यं शृणुत भो जनाः ! । सत्यभामा स्वय हस्ते कन्यां कृत्वा पुरं विशेत् ॥ २४० ॥
चतुष्पथेषु पश्यत्सु जनेषु पुरवासिषु । वाद्यमानेषु तूर्येषु सकलेषु महामहम् ॥ २४१ ॥
द्वितीय तु विवाहेऽस्याः कर वरकरोपरि । कारयेन्निश्चितं गत्वा यूय पृच्छत तामिति ॥ २४२ ॥

कृत्वा ताम्बूलदानादि विसृष्टास्ते सभासदः । गत्वाऽऽख्यान्ति स्म भामायै भामाऽपि प्रत्यपद्यत ॥ २४३ ॥
द्विजदत्तमुहूर्त्तेन भामाऽथ सपरिच्छदा । रथारूढा ययौ तत्र भूत्या परमया मुदा ॥ २४४ ॥
जितशत्रुनृपोऽप्यागात् संमुखं बहुमानयुक् । ददौ प्रवरवस्त्राणि भूषणानि च सादरम् ॥ २४५ ॥
कन्यां दत्त्वा विसृष्टा साऽनुगमादिपुरस्सरम् । विशन्ती तां करे कृत्वा भामा कन्यां व्यलोकत ॥ २४६ ॥
भामायाः परिवारोऽपि सकलः स्वामिनीव सः । प्रज्ञप्त्या अनुभावेनाऽन्यो जनः शाम्बमेव ताम् ॥ २४७ ॥
एवं च बहुमानेन भामया दक्षिणे करे । गृहीतः प्राविशत् शाम्बो महर्द्ध्या द्वारिकां पुरीम् ॥ २४८ ॥
अन्योऽन्यं लोकवाक्यानि शृण्वंस्तन्वन् मुदां भरम् । चतुष्पथस्थैर्लोकैः स स्तूयमानो मुहुर्मुहुः ॥ २४९ ॥ (युग्मम्)
काचित् पुरन्ध्री वक्त्येतद् भामया हि वरं कृतम् । सुतोद्वाहे स्वकं पुत्रं मानयित्वा समानयत् ॥ २५० ॥
काचिद्वक्ति च मुख्यत्वमाप्ताऽनेन गुणेन हि । वासुदेवपुरन्ध्रीषु सकलास्वपि सर्वदा ॥ २५१ ॥
काचिद्वक्ति च भामाऽस्ति प्रकृत्या सुन्दरा सदा । सन्तापिता हि शाम्बेन वह्निनेव जलं पुनः ॥ २५२ ॥
अभूदुष्णा परं तेन वरं जातं मिथोऽथ च । प्रीतिर्द्वयोर्यत्सञ्जाता कालेन बहुनाऽपि हि ॥ २५३ ॥
आयास्यत्यथ प्रद्युम्नः श्रुत्वा शाम्बं समागतम् । अथवा शाम्बवद्भामा तमपि ह्यानयिष्यति ॥ २५४ ॥
एवं नानागिरः शृण्वन्नन्तरा हासमुद्वहन् । करे गृहीत आगच्छद्भामावीवाहमण्डपम् ॥ २५५ ॥
अपसव्यं करं गृह्णन् भीरोर्वामेन पाणिना । उपरिस्थेन च स्वेन शाम्बः कपटवासभूः ॥ २५६ ॥

एकोनशतकन्यानां पाणीन् दक्षिणपाणिना । गृह्णानो युगपद्वह्निं परितस्त्रिः परिभ्रमन् ॥ २५७ ॥
चकार वीवाहविधिं सर्वं विधिवदुत्तमम् । कन्यास्तु शाम्बं पश्यन्त्यः प्रापुर्हर्षमनुत्तरम् ॥ २५८ ॥
धन्या वय स्मः प्राप्ताः स्मो या वर रूपमन्मथम् । साक्षान् मन्मथ एवैष किं वाऽस्य मन्मथाऽनुजः ॥ २५९ ॥
इत्यन्तश्चिन्तयन्त्यस्ता वृत्तोद्वाहाः समुत्थिताः । वीवाहमण्डपाद् जग्मुरनु शाम्बं महर्षुलाः ॥ २६० ॥
वासवेश्म जगामाऽथ शाम्बस्ताभिरनुत्तरम् । तत्रैव भीरुमायान्त भृकुट्यैव न्यपेधयत् ॥ २६१ ॥
भूत्वा श्याममुखो गत्वा मातुः सर्वं न्यवेदयत् । स्तनधयाना मूर्खाणां मातैव शरण यतः ॥ २६२ ॥
साऽश्रद्दधाना तत्रागाद्धसन्त त ददर्श च । अम्बाम्बेति वदन् गत्वा ननाम चरणौ प्रति ॥ २६३ ॥
भृकुट्या रोषपूर्वां सा जगाद परुषं वचः । केनाऽऽनीतोऽसि रे पाप ! मायाविश्वविडम्बक ! ॥ २६४ ॥
उवाच शाम्बो हे मातः ! त्वयैवानीत आगतः । हस्ते कृत्वा बलाल्लोकः साक्षी सर्वोऽत्र विद्यते ॥ २६५ ॥
य यं तत्राऽऽगत लोकं पृच्छति स्म जनः स च । शाम्बाऽनुवादवचन जगाद स्मितपूर्वकम् ॥ २६६ ॥
लोका मिलित्वा सर्वे तामूचुर्विनयपूर्वकम् । भामे ! त्वयैवानीतोऽसौ कन्याश्च परिणायितः ॥ २६७ ॥
भवस्यथ कुतः कोपपरा शाम्बोपरि ध्रुवम् । पीत्वा जलं गृहप्रश्नसदृश किं करोष्यदः ॥ २६८ ॥
पूत्कार कुर्वती भामा न्यायवेश्म हरेर्ययौ । हरिश्च बलदेवश्च समुद्रविजयादयः ॥ २६९ ॥
सभासारास्तथाऽन्येऽपि मिलिताः स्मितपूर्वकम् । सर्वं वृत्तान्तमाकर्ण्य मूलतोऽपि यथाभवम् ॥ २७० ॥

कन्यकाः सकला विष्णुर्ददौ शाम्बाय सूनवे । शाम्बो लात्वा निजं धाम जगाम मुदिताशयः ॥ २७१ ॥
जाम्बवत्युत्सवं चक्रे वहन्ती पुलकं तनौ । सत्यं लोकोऽर्जति द्रव्यं भुङ्क्ते तद्भाग्यवज्जनः ॥ २७२ ॥
सर्वा अपि वधूव्यस्ता आगत्य मुदिताशयाः । जाम्बवत्यै नमश्चक्रुः पादग्रहणपूर्वकम् ॥ २७३ ॥
अचिराद् भवन्तु वधूः पुत्रवत्य इति स्फुटाम् । आशिषं ददती जाम्बवती मोदभरं दधौ ॥ २७४ ॥
भूरिभामवती भामा पूत्कुर्वाणा गृहं ययौ । जातनिष्फलसर्वाशा यायात्कोपं कथं न हि ॥ २७५ ॥
विधिः क्रीडापरो नित्यं वर्तते हासकौतुकी । न स्वं[2] तस्यै[3] किमप्यस्ति रत्नस्वर्णादिकं यतः ॥ २७६ ॥
परमन्यार्जितं दत्तेऽन्यस्मै वैदग्ध्यपाटवात् । स्वामित्वं जगतोऽकृष्ट इति चित्रं महत्तरम् ॥ २७७ ॥
पूर्णप्रतिज्ञः प्रद्युम्नस्तदनन्तरमाययौ । इत्थमेव पुनः क्रीडापरौ तत्र बभूवतुः ॥ २७८ ॥
जाते प्रभाते शाम्बोऽथ ययौ पितामहं गृहम् । ननाम वसुदेवस्य चरणौ विनयानतः ॥ २७९ ॥
उवाच वसुदेवस्तं दम्भं किं कृतवानसि । वञ्चिता सत्यभामा किं त्वया कपटसद्मना ॥ २८० ॥
इत्युक्ते स हसन् प्रोचे तात ! भ्रान्त्वा भुवं बहुम् । चिरेणोढाः स्त्रियः सर्वाः कष्टेन महता त्वया ॥ २८१ ॥
क्वचिच्च बन्धनं प्राप्तं कुतश्चिच्च पलायनम् । अम्बुनि[4] ब्रुडनं क्वाऽपि क्वचिद्वेषविडम्बनम् ॥ २८२ ॥
एवं तात ! त्वया सर्वाश्चिरेणोढा इमा स्त्रियः । मया तु मुषिता भामा लीलयैव यतः शृणु ॥ २८३ ॥

---

१ भाग्यवान् जनः । २ धनम् । ३ विधेः । ४ जले ।

तथा द्रव्यव्ययोऽकारि कन्याः सर्वाश्च मेलिताः । विशिष्टरूपलावण्याः कृते भीरुसुतस्य हि ॥ २८४ ॥
लीलयैव मया सर्वा गृहीता न्यायतः किल । एनां मम कला विद्धि विश्वविस्मयकारिणीम् ॥ २८५ ॥
इत्यत्क्रातिदुर्मत्त माह स्मानकदुन्दुभिः । रे कूपभेक ! निर्मान पित्रा निष्काशितोऽपि हि ॥ २८६ ॥
समागतः कथं वक्त्र दर्शयन् लज्जसेऽपि न । अह तु वीरमानित्वाद्वीरवृत्त्या हि निर्गतः ॥ २८७ ॥
भ्रातृणामनिवेद्यैवागतश्च महदाग्रहात् । द्विसप्ततिसहस्राणां कन्यकानां विवाहवान् ॥ २८८ ॥
नैकविद्याधराधीशसेविताह्रिकजद्वयम् । भ्रातृभिर्दत्तसन्मानसम्मुखागमनादिभिः ॥ २८९ ॥ ( युग्मम् )
इति गाढरुपाऽऽक्रुष्टो वसुदेवेन धीमता । लज्जयाऽभूच्च निम्नास्यः शुशोच स्व मनस्यदः ॥ २९० ॥
पितामहेन हा कीदृग् विवादः किं कृतो मया । मेरु-सर्षपयोः को वा वादः समुपतिष्ठते ॥ २९१ ॥
इत्यागत्य पदोर्लग्नः क्षामयामास तत्क्षणात् । पितामहमुवाचैवं सयोजितकरः शिशुः ॥ २९२ ॥
क्षन्तव्य तातपादैर्मे वालदुर्ललित ह्यदः । लोकोत्तरगुणास्ताताः क चाहं वालकीटकः ॥ २९३ ॥
क मेरुः क च वल्मीकः क सूर्यो ज्योतिरिङ्गणः । क चेन्द्रश्चेन्द्रगोपश्च दृष्टान्तोऽस्त्ययमावयोः ॥ २९४ ॥
इत्थ सविनये तस्मिन् दुन्दुरासीत् कृप.परः । पृष्ठौ दत्त्वा स्वक हस्तं विससर्ज गृह प्रति ॥ २९५ ॥
इत्थ क्रीडापरौ नित्यं रेमाते निजलीलया । लोकोत्तरगुणौ कामशाम्बौ शत्रुविवर्जितौ ॥ २९६ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु–लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार, तत्राङ्कसङ्ख्य[1] इति सर्ग इयाय पूर्तिम् ॥ २९७ ॥

इति श्रीजम्बुद्वीपप्रज्ञप्तिसूत्रस्य प्रमेयरत्नमञ्जूषानामबृहद्वृत्तिकारक–महोपाध्यायश्रीशान्तिचन्द्रगणीनां शिष्योपाध्याय–श्रीरत्नचन्द्रगणिभिर्विरचिते श्रीभक्तामरस्तव–श्रीकल्याणमन्दिर–श्रीदेवाःप्रभो–श्रीमद्धर्म–श्रीऋषभवीरस्तव–श्रीकृपारसकोश–श्रीअध्यात्मकल्पद्रुम–श्रीनैषधमहाकाव्य–श्रीरघुवंशमहाकाव्यवृत्ति-श्रीसम्यक्त्वसप्ततिकाप्रकरणबालावबोधानां भ्रातृप्रेमवहमाने श्रीप्रद्युम्नचरिते महाकाव्ये शाम्बजन्म–प्रद्युम्न–वैदर्भीपाणिग्रहण–शाम्बकन्यैकोनशतपाणिग्रहणवर्णनो नाम नवमः सर्गः सम्पूर्णः ।





१ नवसङ्ख्याकः ।

# दशमः सर्गः ।

इतश्च वणिजस्तत्र द्वीपतो यवनाख्यतः । क्रयाणकान्युपादाय व्यापारार्थं समाययुः ॥ १ ॥
तत्राऽन्यवरवस्तूनि विक्रीय वरलाभतः । चेलुर्विशेषलाभाय पुरं राजगृहं प्रति ॥ २ ॥
कम्बलान् रत्नपूर्वांश्चोपादायाऽतित्वराजुषः । प्राप्ता राजगृहं तेऽथ पुरं मगधशासितुः ॥ ३ ॥
वणिग्भिस्तत्र वास्तव्यैरानीता मगधेशितुः । पुत्रीजीवयशोगेहे मणिस्वर्णादिसङ्कुले ॥ ४ ॥
अदर्शयंश्च तस्यैते महर्घ्यान् रत्नकम्बलान् । शीतस्पर्शास्तु ग्रीष्मेऽपि शीते चोष्णान् महत्यपि ॥ ५ ॥
मार्गित मूल्यमप्राप्तास्ते च पूच्चक्रिरे भृशम् । द्वारिकां हि विहायाऽत्राऽऽयामो हा ! किं वृथैव हि ॥ ६ ॥
तदा पप्रच्छ तान् पुत्री जरासंधमहीपतेः । का द्वारिका पुरी तत्र को वा राजा क्व मण्डले ? ॥ ७ ॥
ऊचुस्ते किं न जानासि पुरीं तां द्वारिकामपि । तत्र कृष्णमहीपालं सुराष्ट्राराष्ट्रभूषणम् ॥ ८ ॥
तव पत्युर्निहन्तारं यादवेश्वरमुद्धतम् । न वेत्सि तमपि त्वं वा तर्हि किं ज्ञातवत्यसि ? ॥ ९ ॥
इति श्रुत्वाऽपतद् भूमौ पविनेव हता क्षणात् । हा ! किं जीवति मे स्वामिनिहन्ताऽद्याऽपि राज्यभुक् ॥ १० ॥

१ वज्रेण ।

पूत्कुर्वती ययौ गेहे रुदती मुक्तकुन्तला । पितुर्मगधनाथस्य गत्वा तस्मै न्यवेदयत् ॥ ११ ॥
स्वामिन्नद्यापि मे भर्तुर्हन्ता जीवति राज्यभुक् । देशे सुराष्ट्रानाम्नीह द्वारिकायाः पुनः पतिः ॥ १२ ॥
विसृजाऽद्यैव मां तात ! ज्वलदग्निप्रवेशनम् । करिष्यामि न जीवामि भर्तृहन्तरि जीवति ॥ १३ ॥
जगादाऽथ जरासन्धो मा रोदीः पुत्रि ! मद्वचः । शृणु तान् रोदयिष्यामि सकलानप्यहं यदून् ॥ १४ ॥
परमेतन्महत् कार्यं विलम्बेनैव जायते । राजप्रसादवत्तत्त्वं तिष्ठ भद्रं भविष्यति ॥ १५ ॥
अकृष्णबलदेवं तज्जगदद्य करोम्यहम् । अदापयत् प्रयाणाय भम्भामिति वदन् क्रुधा ॥ १६ ॥
सहदेवादयः पुत्रास्ततः सज्जा महौजसः । पितुः पृष्ठे भवन्ति स्म शिशुपालादयो नृपाः ॥ १७ ॥
तदा दुर्योधनाद्याश्च कुरवः सकला अपि । तथा हिरण्यनाभोऽपि सामन्ताश्च सहस्रशः ॥ १८ ॥
पत्तयश्च परे लक्षास्तमनुव्रजनाऽऽदराः । भवन्ति स्म सहस्रांशुमिव रश्मिगणाः क्षणात् ॥ १९ ॥
अश्वमारोहतस्तस्य मूर्ध्नो मौलिस्तदाऽपतत् । क्षुतं चाऽजनि वक्त्रस्य संमुखं जयदुर्मुखम् ॥ २० ॥
प्रादुरास सधूमोऽग्निः पस्पन्दे वामलोचनम् । एतान्यगणयंश्चैवं चचाल स महीपतिः ॥ २१ ॥
मन्त्रिभिर्वार्यमाणोऽपि तथाऽन्यैश्च हितैषिभिः । न मन्यते स्म हठवांस्तानपि क्रोधविह्वलः ॥ २२ ॥
विधौ विरुद्धे सकलाः कान्ति-कीर्ति-मति-श्रियः । प्रयान्ति सरसः शोषे यथा जलजपङ्क्तयः ॥ २३ ॥
अविच्छिन्नप्रयाणेन जरासन्धश्चचाल च । नारदो ज्ञापयामास द्वारिकायां जनार्दनम् ॥ २४ ॥

आगच्छन्तं जरासन्ध श्रुत्वा शार्ङ्गकरो ज्वलन् । क्रुधा प्रयाणवादित्रं वादयामास तत्क्षणात् ॥ २५ ॥
ततः सर्वे मिलन्ति स्म यद्वः क्रोधदुर्धराः । आज्ञप्ताश्च मुकुन्देनाऽभवन् सज्जा युयुत्सवः ॥ २६ ॥
ततो ज्योतिर्विदा प्रोक्ते दिने सर्वातिशायिनि । देवकी-रोहिणीभ्यां च कृतमङ्गलपूर्वकम् ॥ २७ ॥
विष्णुः प्रयाणमकरोदुत्सादि(हि)तमनास्ततः । आनुकूल्यविधानेन पक्षिभिश्चापमुख्यकैः ॥ २८ ॥
प्रतिप्रयाण शकुनप्रेरणोत्साहवान् हरिः । सानिपल्ल्या जगामाऽथ स्थितिं तत्रैव चाऽकरोत् ॥ २९ ॥
ततः परं जरासन्धसैन्यमास्ति मदोद्धतम् । चतुर्भिर्योजनैर्दूरे युयुत्सुभटसङ्कुलम् ॥ ३० ॥
उभयोः सैन्ययोः पूर्वं रणतूर्यनिनादयोः । सग्रामो भवति स्माऽऽशु नासीरभटयोरथ ॥ ३१ ॥
अथ विद्याधराः केचिद्वसुदेववशीकृताः । हरेर्बले समाजग्मुः प्रणामं चाक्रिरेतराम् ॥ ३२ ॥
दत्तासना निविष्टास्ते समुद्रविजय नृपम् । ऊचिरे नृपते भ्रातुर्वयमानकदुन्दुभेः ॥ ३३ ॥
गुणगृह्याः सेवकाः स्मो हित वच्मस्तथाऽपि ते । बालादपि हित ग्राह्यमिति वाक्यं प्रमाणय ॥ ३४ ॥ (युग्मम्)
समुद्रविजयादिष्टास्तेऽथोचुर्विनयाऽऽनताः । वैताढ्यपर्वते सर्वे विद्याधरनरेश्वराः ॥ ३५ ॥
जरासन्धस्य निर्देशादायान्ति हि युयुत्सवः । जरासन्धस्य सैन्ये ते विद्या मन्त्र-बलोर्जिताः ॥ ३६ ॥ (युग्मम्)
स्वामिन्नायान्ति ते यावद्भुधास्तान् प्रसत्वरम् । गत्वा वय त्वदाज्ञप्ता मन्त्रसाहाय्यसंयुताः ॥ ३७ ॥
यद्यर्पयासि सेनान्य वसुदेव तवाऽनुजम् । प्रद्युम्न-शाम्बसहित महाभाग्यसमन्वितम् ॥ ३८ ॥

अन्यथा चागतेपूचैस्तेषु भावी सुदुस्सहः। जरासन्धो महावातैर्मिलितोऽग्निरिवाऽधिकम् ॥ ३९ ॥
वरमुक्तं वरमुक्तमिति स्तुत्वा मुहुर्मुहुः। मन्त्रं कृत्वाऽथ मुरिणा समुद्रविजयो नृपः ॥ ४० ॥
वसुदेवं समाहूय तैरुक्तं प्रतिवोध्य च। तैः समं प्रेषयामास पौत्राभ्यां निर्विलम्बकम् ॥ ४१ ॥ (युग्मम्)
गच्छते वसुदेवाय प्रददौ प्रेमवान् भृशम्। जन्मस्नात्रे सुरेन्द्रेण बाहौ बद्धां महौषधिम् ॥ ४२ ॥
तदाऽवसरमासाद्य नेमिनाथो सुवारिणीम्। दत्तं हि समये स्वल्पं महाप्रेम्णे भवत्यहो ॥ ४३ ॥ (युग्मम्)
भ्रातरं वसुदेवं तं चलन्तमनुगम्य च। शिक्षां दत्त्वा निवृत्याऽऽगात् समुद्रविजयो नृपः ॥ ४४ ॥
अथोचे डिम्भको मन्त्री जरासंधं महाबली। स्वामिन्! युद्धकृते सज्जो भव त्वं निर्विलम्बकम् ॥ ४५ ॥
कया रीत्या विधातव्यं कर्तव्या रचना च का?। इत्युक्ते मगधाधीशस्तमूचे मन्त्रिणं प्रति ॥ ४६ ॥
चक्रव्यूहो विधातव्यो दुर्भेद्यो वैरिभूभुजाम्। बले निजे नियोज्याश्च यथायोग्यं महीभुजः ॥ ४७ ॥
तदादेशाद् द्रुतं चक्रे मन्त्रिमुख्यस्तथैव तम्। सहस्रारं महाराजसहस्रेण सुरक्षितम् ॥ ४८ ॥
तत्र चागत्य मगधस्वामी संग्रामकोविदम्। हिरण्यनाभनामानं सेनानीत्वे न्ययोजयत् ॥ ४९ ॥
जरासंधबले चक्रव्यूहं श्रुत्वा जनार्दनः। दुर्भेदं गरुडव्यूहं कारयामास मन्त्रिभिः ॥ ५० ॥
स्थाने स्थाने सुतान् सर्वान् योजयामास दुःसहान्। अन्यांश्च नृपतीन् सर्वान् पञ्चपाण्डवमुख्यकान् ॥ ५१ ॥
अनाधृष्णिं हरिर्वृद्धभ्रातरं रणदुर्धरम्। सेनानीत्वेऽभ्यपिञ्चच स्वर्णपट्टप्रदानतः ॥ ५२ ॥

एवं व्यतिकरं वज्री विज्ञायाऽवधिना स्वयम् । युयुत्सुं भ्रातृसंबन्धाद्विज्ञायाऽरिष्टनेमिनम् ॥ ५३ ॥
मातलिं सारथिं प्रैषीत् सरथं शस्त्रसंयुतम् । त एव स्वामिभक्ता हि ये स्युः समयवेदिनः ॥ ५४ ॥
आगते सारथौ तस्मिन् रथारूढे महस्विनि । नैकशस्त्रान्विते क्षुब्धं जरासंधस्य तद्बलम् ॥ ५५ ॥
उदिते सहस्ररश्मौ ज्योतिश्चक्रमिवाऽखिलम् । वैनतेये यथा दृष्टे नागस्येव कुलं पुनः ॥ ५६ ॥ (युग्मम्)
यादवस्य बलं सर्वं मुमुदे कमलं क्षणात् । तस्मिन् रवौ समुदिते जरासंधस्य भूभुजः ॥ ५७ ॥
बलं सङ्कुचितं जज्ञे कुमुदं च तदाऽद्भुतम् । यदुसैन्ये दिनो जज्ञे रात्रिः सैन्ये परस्य तु ॥ ५८ ॥ (युग्मम्)
अथ प्रारेभिरे युद्धं भटा नासीरयायिनः । सैन्ययोरुभयोराशु शस्त्राशस्त्रि कराकरि ॥ ५९ ॥
भुजाभुजि चिरं चक्रुः स्वस्वस्वामिनि पश्यति । अभज्यन्त जरासंधभटैर्यदुभटा अथ ॥ ६० ॥
नश्यतस्तान् स्थिरीचक्रे गरुडध्वज उच्चकैः । सपताकं करं कुर्वन्नारुह्य मदसिन्धुरम् ॥ ६१ ॥
महानेमिरनाधृष्णिर्मध्यमः पाण्डवस्तथा । त्रयः सज्जीभवन्ति स्म महावीर्या महाभुजाः ॥ ६२ ॥
त्रयोऽपि शङ्खं ते स्वं स्वं दध्मुर्नादातिशायिनम् । शङ्खत्रयस्वनेनैव तासमापुर्जिघांसवः ॥ ६३ ॥
ववृषुस्ते त्रयो बाणान् युगपद्वारिदा इव । वारिणीव तदा पेतुः क्षुद्रवृक्षा इवाऽरयः ॥ ६४ ॥
प्रवेशं चक्रिरे ते च व्यूहमध्ये महाबलाः । वन्यद्विपा इव वनमध्ये विश्वभयङ्कराः ॥ ६५ ॥

१ गरुडे । २ शत्रौ । ३ शब्देन ।

स्वयं मार्गं प्रकुर्वाणाः कल्लोला इव वारिधेः । चक्रव्यूहं द्विधा चक्रुस्तत् पश्चात्सैनिका अपि ॥ ६६ ॥
चक्रव्यूहं हतं दृष्ट्वा रुक्मी दुर्योधनस्तथा । रौधिरिश्च जरासंधप्रेरितास्तत्र उत्थिताः ॥ ६७ ॥
पार्थं दुर्योधनोऽरौत्सीदनाधृष्णिं तु रौधिरिः । महानेमिं तथा रुक्मी महाबलनृपैर्युतः ॥ ६८ ॥
द्वन्द्वयुद्धं वितन्वाना द्विपा इव परस्परम् । न्यवर्तन्त चिरं नाऽपि क्रोधभूताऽऽश्रिता इव ॥ ६९ ॥
महानेमिर्महोत्साहो निरस्त्रं रुक्मिणं व्यधात् । हतप्रायं च तं दृष्ट्वा पेतुरेते महीभुजः ॥ ७० ॥
शत्रुन्तपाद्यास्तन्मध्ये सप्तसङ्ख्यास्तरास्विनः । कुर्वन्त एव बाणानामासारं जयकाङ्क्षिणः ॥ ७१ ॥
दुर्जयांस्तान् रिपून् दृष्ट्वा पार्थमुख्यान् महौजसः । शक्तिं मुमोच दुःसोढां शत्रुन्तपनृपो बली ॥ ७२ ॥
आगच्छन्तीं च तां दृष्ट्वा विविधायुधपाणयः । अन्तरा निपतन्ति स्म रोद्धुं शीघ्रं सहस्रशः ॥ ७३ ॥
अथोचे मातलिर्नेमिं शृणु स्वामिन् ! तपोबलात् । बलीन्द्रात् प्राप राजाऽयं शक्तिं संहारकारिणीम् ॥ ७४ ॥
इयं वज्रेण भेद्या स्यात् शस्त्रेणान्येन नैव च । इत्युक्त्वा नेमिनाऽऽदिष्टो मातलिः सारथिस्ततः ॥ ७५ ॥
महानेमेः शरे वज्रं योजयामास तत्क्षणम् । महानेमिर्विमुच्याऽऽशु तं शरं लक्षवेधिनम् ॥ ७६ ॥
पातयति स्म तां शक्तिं विफलां भूतले पुनः । विशस्त्रं विरथं चक्रे शत्रुन्तपमहीभुजम् ॥ ७७ ॥
तदा यदुभटाः सर्वे समं जागरिता इव । युद्धसज्जाश्च तैः सार्धं बभूवुः बाणवर्षिणः ॥ ७८ ॥
युगपद् यदुवीरैस्ते भग्नास्त्रेसुरितस्ततः । हिरण्यनाभं सेनान्यं नश्यन्तः शरणं ययुः ॥ ७९ ॥

अथ भीमा-ऽर्जुनौ वीरौ द्विरूपः किमुतान्तकः ? । बलदेवसुताः साक्षाद् यमपुत्रा इवोद्धताः ॥ ८० ॥
धावन्ति स्म धार्त्तराष्ट्रान् वर्षन्तः शरधोरणीः । नश्यन्ति स्म ततः सर्वे कौरवा शूकरा इव ॥ ८१ ॥
पार्थश्चकार भूच्छाय बाणश्रेणिभिरुल्वणम् । गाण्डीवनादैर्भीष्मैश्च भटास्त्रेसुर्दिशो दिशम् ॥ ८२ ॥
अथ दुर्योधनो वीरः कियद्भी राजभिः सह । किरीटिन रुरोधाऽऽशु विमुक्तक्षत्रियव्रतः ॥ ८३ ॥
शकुनिः सहदेव च भीम दुःशासनोऽपि च । उलूको नकुल शल्यः मथम पाण्डव तथा ॥ ८४ ॥
दुर्मर्षणादयः षट् च द्रौपदीतनुजन्मनः । अन्ये नृपा रामपुत्रान् भपणा इव चित्रकान् ॥ ८५ ॥
अन्योऽन्य वर्षतां तेषां बाणान् कालः कियान् गतः । अथाऽर्जुनोऽवधीत् सूतं रथ रथ्यानपि क्षणात् ॥ ८६ ॥
वर्म चाऽपातयद्भूमौ देहशेष चकार च । पत्तिवद्धार्त्तराष्ट्रोऽभूद् विलक्षो दिग्विलोककः ॥ ८७ ॥
उत्पन्नबुद्धिरुत्पत्याऽध्यारोहत् शकुने रथम् । शल्यो बाणेन चिच्छेद धर्मपुत्ररथध्वजम् ॥ ८८ ॥
धर्मपुत्रोऽपि शल्यस्य सशर धनुराच्छिदत् । अन्यद्धनुरुपादाय शल्यः पुनरुपागमत् ॥ ८९ ॥
तदाऽऽद्यपाण्डुपुत्रोऽपि शक्तिं शल्याय दुःसहाम् । मुञ्चति स्म परैरोद्धुमशक्यां वज्रिवज्रवत् ॥ ९० ॥
आगत्य साऽवधीत् शल्यं गोधामिव तडित् क्षणात् । हते च शल्ये नेशुश्च कांदिशीका नृपास्ततः ॥ ९१ ॥
वृकोदरोऽपि वृद्धस्य भ्रातुः किं स्पर्द्धयाऽवधीत् । दुर्योधनाऽनुजं सद्यो दुःशासनमपि क्षणात् ॥ ९२ ॥

१ धोरणी श्रेणी । २ सारथीन्।

जैन

केशाकर्षणवैरं तत् पाञ्चाल्याः सोऽग्रहीदिति । अङ्गीकृतं करोत्येव मानी समयमाप्य हि ॥ ९३ ॥
सहदेवोऽपि चिक्षेप हन्तुं शकुनिमेव च । जीवितान्तकरं बाणं भ्रात्रोः किं स्पर्द्धया द्वयोः ॥ ९४ ॥
हतं शकुनिमालोक्य तमप्राप्तमथाऽच्छिदत् । दुर्योधनः स्वबाणेन क्षुरप्रेण च लीलया ॥ ९५ ॥
सहदेवस्तदोवाच रे सुयोधन ! मायया । अद्यापि रमसे द्यूतवन्नास्ति तव दोर्बलम्[1] ॥ ९६ ॥
अथ तिष्ठ त्वमप्यत्र युवां हन्म्येकहेलया । नरकेऽपि वियोगोऽस्तु युवयोर्नैव मित्रयोः ॥ ९७ ॥
इत्युक्त्वा सहदेवोऽथ द्वाभ्यां युद्धोद्धतोऽभवत् । पाण्डुपुत्रस्य किं द्वौ वा सहस्रं तृणवत् यतः ॥ ९८ ॥
दुर्योधनं शरैश्चक्रे व्याकुलं गाढवृष्टिभिः । करकैर्घनवत्पान्थं सोऽथ क्रोधाकुलोऽभवत् ॥ ९९ ॥
सहदेवं निहन्तुं द्रागमुञ्चन्मन्त्रसंस्कृतम् । बाणं धनंजयोऽपश्यदागच्छन्तं त्वराजुषम् ॥ १०० ॥
गारुडेषुं विमुच्याऽऽशु चिच्छेद समये छली । क्षणं विश्रम्य शकुनिर्धनुर्गृह्णन्नथाऽऽययौ ॥ १०१ ॥
ववर्ष च शरान् वाढं सहदेवस्य संमुखम् । मोघीबभूवुः सर्वेऽपि परं पुण्यप्रभावतः ॥ १०२ ॥
परिश्रान्तमथ ज्ञात्वा सहदेवोऽपि तं क्षणात् । रथं रथ्यान् शिरश्चाऽप्यवधीत्तस्य गदायुधः ॥ १०३ ॥
अनुजस्य ह्रियेवाऽथ नकुलोऽपि गदायुधः । उलूकं विरथीकृत्याऽकरोद्दिक्प्रान्तगामिनम् ॥ १०४ ॥
दुर्मर्षणादयः षट् च द्रौपदेयैः समं चिरम् । चक्रुर्युद्धं शरैर्नानाप्रकारैर्जयकाङ्क्षिणः ॥ १०५ ॥

१ भुजबलम् ।

लज्जन्तां पितरोऽस्माकं मेति कृष्णोद्भवा अपि । कांदिशीकांश्च तांश्चक्रुराशुगाशुगवृष्टितः ॥ १०६ ॥
शिश्रियुः शरणं तेऽथ वराकाः कौरवेश्वरम् । सुयोधनोऽपि संभूय नृपैः पार्थमयोधयत् ॥ १०७ ॥
किरीट्यपि वृतो रामपुत्रैरुष्णमहा इव । किरणैस्तापयामास सद्यः कुरुवरूथिनीम् ॥ १०८ ॥
अथ पार्थश्छलं लब्ध्वा जयद्रथशिरोऽच्छिदत् । शिरश्छिन्नं पपाताऽथ फलं तालतरोरिव ॥ १०९ ॥
हते जयद्रथे तस्मिन् धार्तराष्ट्रो भयाकुलः । शुशोच बाढं मनसा बहिः साहसमुद्वहन् ॥ ११० ॥
दुर्योधनं तथा वीक्ष्य कालपृष्ठं धनुर्दधत् । दन्तैर्दन्तच्छदं चर्वन्नाययौ कर्ण उद्धतः ॥ १११ ॥
कुत्राऽसि रे ! किरीटिंस्त्वं मा याहि रणभूमितः । आगतोऽस्मि तव द्वेषी कर्णोऽहं कालपृष्ठभृत् ॥ ११२ ॥
अथाऽब्रवीदर्जुनोऽपि द्रुतमागच्छ रे सखे ! । जयद्रथवियोगस्ते माऽस्तु मित्रे मयि ध्रुवम् ॥ ११३ ॥
अन्यच्च शृणु राधेय ! रे रे कर्ण ! सुदुर्मते ! । जीवन्नपि हि मां किं त्वं न पश्यसि पुरः स्थितम् ॥ ११४ ॥
तद् ज्ञायते मृतत्वस्य प्रादुरासीत् पुरस्तव । चिन्हं दीपस्य सकोचो गच्छतोऽस्त यथा भवेत् ॥ ११५ ॥
अथ तौ चक्रतुर्युद्धं देवैरपि कुतूहलात् । विलोक्यमानौ विशिखान् वर्षन्तौ न विरेमतुः ॥ ११६ ॥
अपसस्रुस्तदा देवा भिया माऽस्मान् लगान्त्विति । कदाऽपि कर्णो जेताऽभूत्कदाचित् पुनरर्जुनः ॥ ११७ ॥
पुष्पवृष्टिं सुराश्चक्रुरेवमेव क्षणे क्षणे । अथाऽवसरमासाद्य रथं पार्थो द्विधाऽकरोत् ॥ ११८ ॥

१ आशुगानां बाणानाम्, आशुगा शीघ्रा या वृष्टि, ततः । २ सूर्य । ३ सेनाम् । ४ मरणस्य ।

रथ्यान् जघान तदनु सारथिं च धनुस्ततः । चिच्छेद च निरस्त्रस्य शिरोऽपि रथिजन्मिनः ॥ ११९ ॥
हते च कर्णे विधुरो जातो दुर्योधनो भृशम् । रुरोदाऽनुजनैः सार्द्धं मुक्तकण्ठं मुहुर्मुहुः ॥ १२० ॥
यदवः पाण्डवाश्चाऽपि सिंहनादं वितेनिरे । नृत्यन्ति स्म मण्डलेन मृदङ्गध्वनिपूर्वकम् ॥ १२१ ॥
अथाऽऽगत्य गदापाणिर्भीम ऊचे सुयोधनम् । अरे ! किं रुदनं कर्तुमागतोऽसि रणाङ्गणे ॥ १२२ ॥
आगच्छ त्वमहं सद्यो वियोगं सुहृदा सह । रवेः सुतेन गदया पातयामि कृपापरः ॥ १२३ ॥
उत्तिष्ठोत्तिष्ठ रे भ्रातः ! नायं कालस्तवोचितः । रुदनस्य गदां पाणौ कुरुष्व सुहृदं मिल ॥ १२४ ॥
अथ दुर्योधनः क्रोधादुत्तस्थौ सेनया सह । वृकोदरं हन्तुमना धावति स्म गदाधरः ॥ १२५ ॥
वृकोदरः पूर्ववैरं स्मरन्नथ रुषारुणः । अश्वान् गजान् रथांश्चैवमन्तराऽऽपततोऽच्छिदत् ॥ १२६ ॥
न कोऽप्यासीद्भटस्तादृग् यो भीमस्य पुरो भवेत् । गृह्णन्ति स्म दिशः सर्वे पलायनपराः क्षणात् ॥ १२७ ॥
ह्रियैव वीरमानित्वात्तस्थावेकः सुयोधनः । ऊचेऽथ पावनी रुष्टः फलितं मे मनोरथैः ॥ १२८ ॥
यदेकाकी मयाऽऽप्तोऽसि वाञ्छितो बहुभिर्दिनैः । अथ भक्तिं करिष्यामि यादृगस्ति त्वया कृता ॥ १२९ ॥
उप्तमेव हि लूयेत राद्धं यत्तच्च भुज्यते । अमित्रेणाऽपि मित्रेण कृतं यच्च तदाप्यते ॥ १३० ॥
इत्युक्ते धार्तराष्ट्रोऽपि निर्धूमाऽग्निरिवाऽज्वलत् । आजगाम च भीमेन सह योद्धुं गदाधरः ॥ १३१ ॥

१ भीमः ।

उभावेव चिरं युद्धं चक्रतुः क्रोधपर्वतौ । परं विरेमतुर्नैव मेषाविव गजाविव ॥ १३२ ॥
मल्लाविव महाबाहू भुजास्फोटेन राजितौ । पादयोश्चालनास्फोटात् कम्पयन्तौ क्षमातलम् ॥ १३३ ॥
श्रान्तं कृत्वा चिरं भीमश्चकर्तोरुयुगं क्षणात् । दुर्योधनस्य पाञ्चाल्याः पूर्ववैरं स्मरन् स्मरन् ॥ १३४ ॥
दुर्योधनश्चिरं तस्य वेदनामधिसोढवान् । स्वेनैव भुज्यते कर्म कृतं स्वेन मदात् किल ॥ १३५ ॥
दुर्योधने विपन्नेऽथ निर्नाथा कौरवी चमूः । हिरण्यनाभं सेनान्य शरण समाश्रिश्रियत् ॥ १३६ ॥
अङ्गेशे[1] कौरवेशे च गते सान्धाऽभवच्चमूः । वाम-दक्षिणनेत्राभ्यां गताभ्यामिव तत्क्षणम् ॥ १३७ ॥
हिरण्यनाभः सेनानीराजगाम रणाक्षितौ । अनाधृष्णिश्च सेनानीरितः प्रादुरभूत्तदा ॥ १३८ ॥
पाण्डवा यदवश्चापि परिवव्रुश्चमूपतिम् । नक्षत्राणि ग्रहाश्चैव पार्वणामृतरोचिषम्[2] ॥ १३९ ॥
क्रुद्धो हिरण्यनाभोऽथ धावति स्म यदून् प्रति । शरान् ववर्ष करकानकालाब्द इव द्रुतम् ॥ १४० ॥
तदा च यदवो नेशुः कांदिशीका इतस्ततः । जयसेनस्तदोत्तस्थौ रणायाऽग्रेसरोऽभवत् ॥ १४१ ॥
हिरण्यनाभोऽभाषिष्ट सामुद्रे ! किं सुदुर्मते ! । समुद्रविजयं दुःखे मृत्वा त्वं पातयस्यरे ! ॥ १४२ ॥
अन्ये हि बहवः सन्ति यदवो युद्धकर्मठाः । अपसृत्य मयाहि त्वं मा मुमूर्षुः पुरो भव ॥ १४३ ॥
जयसेन उवाचाऽथ विब्रवीषि किमत्र रे ! । बलं दर्शय वाचा किं वृथा गर्जसि मूर्खवत् ॥ १४४ ॥



१ कर्णे । २ पर्वचन्द्रम् ।

इत्युक्त्वा योद्धुमारेभे समुद्रविजयात्मजः । हिरण्यनाभसेनान्या सह वर्षन् शरान् बहून् ॥ १४५ ॥
हिरण्यस्य रथं छिन्दन् सारथिं च क्षणादपि । अवधीत् स समुत्पत्य रथान्तरमथाऽविशत् ॥ १४६ ॥
तदा हिरण्यनाभोऽपि जयसेनस्य सारथिम् । रथ्यांश्च स्यन्दनं चाऽपि छिनत्ति स्म क्षणाद्बली ॥ १४७ ॥
क्रुद्धोऽथ जयसेनोऽपि वर्षति स्म शिलीमुखान् । हिरण्यः फलकं दत्त्वा मुखाग्रे निकटः स्थितः ॥ १४८ ॥
कालेन करवालेन जयसेनममारयत् । जयसेने हते हा ! हा ! यदुसैन्येऽभवद्रवः ॥ १४९ ॥
बान्धवो जयसेनस्य महीजय इतिप्रथः[1] । अधावत करे कृत्वा खड्गं पादचरः शितम् ॥ १५० ॥
हिरण्यो दूरतो गत्वा क्षिप्त्वा बाणं क्षुरप्रकम् । चकर्त्त तस्य मूर्द्धानं सोऽपि पृथ्व्यां पपात च ॥ १५१ ॥
अनाधृष्णिस्ततः कम्पमानाऽधर इहाऽपतत् । प्रतिश्रुत्य हिरण्यस्य वधं सर्वाऽस्त्रभृद्रथः ॥ १५२ ॥
अन्येऽपि यदवोऽन्यैश्च जरासन्धनृपैः सह । युध्यन्ते स्म शरासारैः सूर्योऽपि ददृशे न तैः ॥ १५३ ॥
संज्ञया भगदत्तोऽथ प्राग्ज्योतिषनरेश्वरः । गजारूढो महानेमिं धावति स्म स्मयाकुलः[2] ॥ १५४ ॥
उवाच भोः ! महानेमे ! समागच्छ पुरो मम । आवां युध्यावहे कायमर्पयामि सुराङ्गनाम् ॥ १५५ ॥
इत्युक्त्वा प्रेरयामास सिन्धुरं तस्य संमुखम् । लघुहस्तो महानेमिर्गजं पादतलेऽवधीत् ॥ १५६ ॥
क्षणादेव पपातोर्व्यां गजेन सह मानवान्[3] । हस्यमानोऽखिलैर्योधैश्चमूयुगलवर्तिभिः ॥ १५७ ॥

१ इति प्रथा यस्य सः । २ गर्वाकुलः । ३ मानी ।

अभिमानो हि पाताय क्षणादेव प्रजायते । एष एव हि दृष्टान्तो बुधैस्तत्र निदर्शितः ॥ १५८ ॥
महानेमिरुवाचैवं पतित त्वा न हन्म्यहम् । भगदत्त ! भगक्रीडा स्त्रीभिः सह कुरुष्व तत् ॥ १५९ ॥
इतो भूरिश्रवा युद्धसज्जः सात्यकिनाऽभवत् । जरासधचमूवर्ती कृष्णसेनाग्रवर्तिना ॥ १६० ॥
कुर्कुटाविव तौ लग्नौ विरामं आपतुर्न च । देवैरपि वीक्ष्यमाणौ सहासं व्योमवर्तिभिः ॥ १६१ ॥
महानेमिरथोवाच सात्यके ! किं विलम्बसे । इम सुराङ्गनासंगलालसं त्व द्रुतं कुरु ॥ १६२ ॥
इति प्रेरणया वृद्धसाहसोऽथ च सात्यकिः । निपात्य भूमौ मुष्टिभ्यां मृत्पिण्डामिव मर्दयन् ॥ १६३ ॥
गतप्राणं करोति स्म वव्रुस्तं च सुराङ्गनाः । जहृषुर्यादवाः सर्वे हस्ततालान् भृशं ददुः ॥ १६४ ॥
भूरिकर्णे हते तस्मिन् हाहारवमयं बलम् । जरासधस्य सहसा भवति स्म शुचाऽऽकुलम् ॥ १६५ ॥
सात्यकिं यदुनाथश्च चिरादालिङ्ग्य तस्थिवान् । यतः कार्यकरः पूज्यः पूज्यानामपि जायते ॥ १६६ ॥
अथाऽजायत सेनान्योरुभयोरपि सैन्ययोः । हिरण्यनाभा-ऽनाधृष्ण्योः शराशरि भुजाभुजि ॥ १६७ ॥
कराकरि चिर युद्धं सुरैर्विद्याधरैरपि । वीक्षणीयं निर्निमेष मुक्तसर्वान्यकार्यकैः ॥ १६८ ॥
खड्गखेटकभृत् क्रोधादनाधृष्णिमधावत । हिरण्यनाभः सहसा हन्तुकामोऽभिमानवान् ॥ १६९ ॥
दृष्ट्वा निकटमायातमनाधृष्णिश्छली बली । अपिधान शिरो दृष्ट्वा छिनत्ति स्म शिताऽसिना ॥ १७० ॥

1 त्वाम् ।


॥ १६५ ॥

परिवव्रुरनाधृष्णिं यदवः पाण्डवा अपि । रजसां मार्जनं चक्रुरुत्तरीयाञ्चलेन च ॥ १७१ ॥
शरीरं सकलं तस्य वर्मापनयपूर्वकम् । विलोकन्ते स्म बुद्ध्या ते मा प्रहारा भवन्त्विति ॥ १७२ ॥
अथ सर्वे भयत्रस्ता जरासंधीयपार्थिवाः । शरणाय जरासंधं याति स्म सपरिश्रमाः ॥ १७३ ॥
परिभ्रम्य चिरं सूर्यः श्रमात् किं भवनेच्छया । पश्चिमाब्धिं प्रयाति स्म स्नानं हि श्रमनाशनम् ॥ १७४ ॥
अथ सर्वे ययुः स्थानं स्वं स्वं क्षुत्तृष्णिपीडिताः । भम्भाध्वानिं मुदा चक्रुः कृष्णाऽग्रे यदवोऽखिलाः ॥ १७५ ॥
मन्त्रिभिर्मन्त्रयित्वाऽथ शिशुपालं महीपतिम् । जरासंधश्चमूपत्वेऽभ्यषिञ्चत् पुण्यवर्जितः ॥ १७६ ॥
प्रभातेऽथ निजं व्यूहं शिशुपाल उपेयिवान् । जरासंधो ददौ तस्मै स्वर्णपट्टं महीभृते ॥ १७७ ॥
गरुडव्यूहमप्येषोऽनाधृष्णिश्च समागमत् । सम्यग् विधाय निर्भीको ज्ञातकृष्णशुभोदयः ॥ १७८ ॥
अथोऽवोचज्जरासंधो मन्त्रिणं हंसकं प्रति । उपलक्षय सर्वान् मे नामग्राहं यदूनिमान् ॥ १७९ ॥
नामशेषान् यथा कुर्वे गणनापूर्वकं स्वयम् । ममास्यम्बुकृतस्नाना यान्त्वमी हि त्रिविष्टपम् ॥ १८० ॥
इत्युक्ते हंसकः प्राह सावधानमनाः शृणु । दर्शयामि यदून् सर्वान् दाशार्ह-हलिमुख्यकान् ॥ १८१ ॥
कृष्णाश्वरथमारूढः कृष्णोऽयं गरुडध्वजः । नीलाऽश्वेन रथेनैष नीलवासास्तदग्रजः ॥ १८२ ॥
अयं च स्वर्णवर्णाऽश्वः समुद्रविजयः किल । यदूनां वृद्ध एवैषः वर्तते भूरिभाग्यवान् ॥ १८३ ॥
पाटलाऽश्वस्यन्दनेनाऽनाधृष्णिर्वारणध्वजः । नीलाश्वरथमारूढः पाण्डुपुत्रो युधिष्ठिरः ॥ १८४ ॥

श्वेताश्वेन रथेनायं मध्यमः पाण्डवोऽर्जुनः । गदापाणिरयं भीमो नीलाश्वरथसंस्थितः ॥ १८५ ॥
अथ नकुलवर्णाभहयस्यन्दनमाश्रितः । नकुलः पाण्डवस्तस्य पार्श्वेऽयं श्वेततार्क्ष्यकः ॥ १८६ ॥
सहदेवः पाण्डवोऽयं कुल्माषाश्वस्तु सात्यकिः । इन्द्रार्पितरथेनाऽय नेमिनाथो वृषध्वजः ॥ १८७ ॥
महानेमिममुं विद्धि कुमुदाभं तुरंगमम् । मन्यस्व हंसतुरगमुग्रसेनममुं नृपम् ॥ १८८ ॥
भूयांसः सन्ति यदवो नानाहयरथध्वजाः । नामतस्तु कथं वाच्या यतः सन्ति सहस्रशः ॥ १८९ ॥
इति श्रुत्वा जरासंधो वधं कंसस्य सस्मरन् । स्यन्दनं प्रेरयामास सम्मुख राम-कृष्णयोः ॥ १९० ॥
जरासन्धस्य तनयो यवनो जवनाश्वयुक् । अक्रूरादीन् सुतान् हन्तुं वसुदेवस्य तत्क्षणम् ॥ १९१ ॥
स्यन्दनं प्रेरयामास शरान् वर्षन् क्रुधाऽरुणः । रामभ्राता सारणोऽथ त रुरोध पुरो भवन् ॥ १९२ ॥
भनक्ति स्म रथं सद्यो यवनः सारणस्य च । सारणोऽभ्यर्णमागत्य यवनस्य शिरोऽच्छिदत् ॥ १९३ ॥
जरासन्धस्य पुत्रेऽस्मिन् हते यवननामनि । गोपालैरिव यदुभिः कृष्णगोपो ननर्त च ॥ १९४ ॥
अथ क्रुद्धो जरासन्धो दृष्ट्वा सुतवधं दृशा । धावति स्म यदून् हन्तुं मृगानिव मृगद्विपन् ॥ १९५ ॥
जरासन्धेन तत्काल हता रामसुता दश । अन्ये यदुभटाश्चापि संख्यां कर्तुं क्षमेत कः ? ॥ १९६ ॥
यदुसेना पलायिष्ट जरासन्धाधमादिव । तत्पृष्ठतोऽन्वधाविष्ट कर्षुं जगदयादवम् ॥ १९७ ॥

१ भवनो वेगी ।

सेनानीः शिशुपालोऽथ हसन्नूचे जनार्दनम् । नहोतदस्ति गोपाल ! गोकुलं किन्तु युद्धभूः ॥ १९८ ॥
मर्माविधा गिरा विद्धः शिशुपालस्य भूभुजः । आश्वास्य नश्यतः स्वीयान् कृष्णस्तत्र पुरोऽभवत् ॥ १९९ ॥
शिशुपालस्समागत्य रुणद्धि स्म जनार्दनम् । कृष्ण ऊचे त्वमेवाद्यो यमस्य कवलो भव ॥ २०० ॥
द्वितीयस्तु तव स्वामी कवलो भविता ध्रुवम् । इत्युक्त्वा शिशुपालेन युध्यते स्म महाबलः ॥ २०१ ॥
चेदीशोऽपि शरान् वर्षन् करकानिव वारिदः । न श्रान्तस्तु हरिश्छिन्दन् लक्षवेधी महाभुजः ॥ २०२ ॥
शरवर्षणमुज्झित्वा चेदीशोऽभूत् गदाकरः । कृत्वा कौमोदकीं हस्ते गदां स्वीयां हरिर्बभौ ॥ २०३ ॥
कौमोदिक्या बभञ्जाऽऽशु गदया स्यन्दनं हरिः । पदातिः स पुरोभूय खड्गपाणिर्युधेऽभवत् ॥ २०४ ॥
हरिः सिंह इवोत्प्लुत्याऽग्रहीत् तस्य करादसिम् । चिच्छेदाऽऽशु शिरस्तस्याऽसिना तेनैव भूभृतः । २०५ ॥
पुण्ये नष्टे भवेत् सर्वमन्यथै(स्यै)व धनादिकम् । शस्त्रस्यैव हि का वार्ता स्वशस्त्रं स्वस्य घातकम् ॥ २०६ ॥
शिशुपालवधक्रुद्धो जरासन्धोऽभ्यधावत । यदूंश्च सकलान् हन्तुमना इति वदन् मुखे ॥ २०७ ॥
मा म्रियध्वं मा म्रियध्वं मुधैव यदवोऽखिलाः । ममाऽर्पयत गोपालौ बलकृष्णाऽभिधानकौ ॥ २०८ ॥
ततः कृष्णस्तमूचे रे ! विब्रवीषि मुधा किमु । अग्रेस्थितौ स्वौ गोपालौ त्वमागत्य गृहाण भोः ! ॥ २०९ ॥
न चेदावां हि गृह्णावस्त्वां मर्तुमिव वाञ्छकम् । इति मत्युक्तिरोषान्धो धावति स्म जनार्दनम् ॥ २१० ॥
जरासन्धसुता अष्टाविंशतिर्हलिनं प्रति । जरासंधं निषिध्याथैकोनसप्ततिसूनवः ॥ २११ ॥

कृष्णं रुरुधुरग्रस्थाः पितुस्तत् स्थाम पश्यतः । तैः सम समरो घोरो वव्धे हलि-कृष्णयोः ॥ २१२ ॥
तानष्टाविंशतिं रामो हलेनैव ममर्द च । कथाशेषा अजायन्त चूर्णिता मुशलेन ते ॥ २१३ ॥
सुतानामियतां दृष्ट्वा संहारं युगपद् दृशा । प्राप्नोति स्म हृदि क्षोभं धुरि धैर्यवतामपि ॥ २१४ ॥
बलवान् बलदेवोऽथ मगधाधीशमूचिवान् । अरे ! किं शोचसि प्राज्ञ ! युध्यागत्य मृतान् सुतान् ॥ २१५ ॥
सज्जो भव मया सार्द्धमित्युक्ते मगधेश्वरः । उदस्थात् सिंहवत्क्रुद्धस्ताडयन् गदया यदून् ॥ २१६ ॥
अन्तरा पतितं रामं हन्ति स्म गदया बलात् । हृदये लग्नया बाढं मूर्च्छितो न्यपतत्तया ॥ २१७ ॥
ववाम रुधिरं वक्त्राद् दृष्ट्वा निपातितं बलम् । हाहाकारपरा जाता यदवो निखिला अपि ॥ २१८ ॥
द्वितीयं च गदाघातं यावदागत्य मुञ्चति । तावदर्जुन आगत्याऽरौत्सीच्च मगधप्रभुम् ॥ २१९ ॥
वर्षन् शिलीमुखांस्तीक्ष्णांस्तावत् कृष्णः क्रुधा ज्वलन् । प्रेक्ष्य रामस्य वैधुर्यं पतितस्य हि मूर्च्छया ॥ २२० ॥
एकोनसप्ततिं पुत्रानवधीदेकहेलया । जरासन्धस्य भूपस्य पक्षानिव गरुत्मतः ॥ २२१ ॥
तांश्च पुत्रान् हतान् दृष्ट्वाऽचिन्तयन्मगधाधिपः । मृतप्रायेण रामेण किं हतेन ममाऽथ च ॥ २२२ ॥
मृगेणेवाऽर्जुनेनाऽथ किं हतेन मृगद्विषः । ततश्च तावुभौ मुक्त्वा हन्तुं कृष्णं समागतः ॥ २२३ ॥
तस्मिन् क्रुद्धे महाबाहौ साक्षाद्यम इवागते । हाहाकारपराः सर्वे भवन्ति स्म भयद्रुताः ॥ २२४ ॥
अथ प्रोचेऽरिष्टनेमिं शक्रसारथिमातलिः । हत एव बलः स्वामिन् ! कृष्ण च निहनिष्यति ॥ २२५ ॥

अयं शस्त्रभृतः शक्रप्रेषितः स्यन्दनो मुधा । किमर्थमहमागां च वलं दर्शय तन्मनाग् ॥ २२६ ॥
उज्झितोऽयं त्वया स्वामिन्नयं निर्यादवं जगत् । करिष्यति यथा सिंहो वनं निःश्वापदं बलात् ॥ २२७ ॥
नीरागोऽसि जगत्स्वामिन् ! यद्यप्याजन्मतोऽपि हि । तथाऽपि व्यवहारोऽयं रक्षणीयस्त्वयाऽनघ ! ॥ २२८ ॥
द्विषता हन्तुमारब्धं नोपेक्ष्यं कुलमात्मनः । इत्युक्तश्चेन्द्रसूतेन शङ्खमादात् करे निजे ॥ २२९ ॥
दध्मौ मेघध्वनिं शार्कं शङ्खं स्वामी मनाग् बलात् । चुक्षुभुस्तेन नादेन राजानो मगधेशितुः ॥ २३० ॥
कृष्णस्य कटकं सर्वं क्षणाज्जातं विकस्वरम् । घनाघनेन वृष्टेन यथा सर्वो वनस्पतिः ॥ २३१ ॥
आज्ञया नेमिनाथस्य प्रेरयामास सारथिः । रथं शाक्रं वैरिबले मनोवेगं महाबलम् ॥ २३२ ॥
आदाय च धनुः शाक्रमधिज्यमकरोत् प्रभुः । ववर्ष शरधाराभिः सर्वत्र भ्रमयन् रथम् ॥ २३३ ॥
रथानभाङ्क्षीत् केषांश्चित् केषाञ्चित् मुकुटानपि । कार्मुकाणि च केषाञ्चिल्लीलामात्रं प्रभुर्व्यधात् ॥ २३४ ॥
प्रहारं कर्तुं कः शक्तो भवेत् स्वामिपुरः स्थितः । न शक्तो वीक्षितुमपि यथा तरणिमुद्यतम् ॥ २३५ ॥
एकोऽपि हि जगन्नाथोऽभाङ्क्षील्लक्षं क्षमाभुजाम् । एकोऽपि हि मृगारातिः मृगाणामिव तत्क्षणात् ॥ २३६ ॥
प्रतिविष्णुर्जरासन्धो विष्णुना वध्य एव हि । इत्युपेक्षित एवाऽसौ तस्थिवान् दूरतः स्थितः ॥ २३७ ॥
कियन्तं कालमेवं हि रुद्ध्वाऽस्थाद् भ्रमयन् रथम् । प्रतिविष्णोर्बलं स्वामी जीवहिंसापराङ्मुखः ॥ २३८ ॥
कियत्समयविश्रामं प्राप्याऽथ यदुसैनिकाः । लब्धोत्साहा युयुधिरे वैरिभिर्भग्नसाहसैः ॥ २३९ ॥

अत्रान्तरे पाण्डुपुत्राः शेषानपि कुरून् प्रति । कुर्वन्ति स्म कथाशेषान् योद्धुकामानुपागतान् ॥ २४० ॥
बलोऽपि स्वस्थीभूतः सन्नुत्तस्थौ युधि संस्थितः । करे हलं च मुसलं कुर्वन् हन्ति स्म भूरिशः ॥ २४१ ॥
जरासन्धोऽथ दाशार्हमाह्वास्त समराङ्गणे । आगच्छ रे ! मया सार्द्धं युध्यस्व किं परैर्हतैः ? ॥ २४२ ॥
मायया जीवसि त्वं रे हतः कंसश्च मायया । मायां विना बलं काऽपि न श्रुतं तव गोप ! रे ॥ २४३ ॥
अथ माया मया नाश्या प्राणैस्सह बलादियम् । प्रतिज्ञां पूरयिष्यामि दुहितुर्मे तवान्तकृत् ॥ २४४ ॥
अथ कृष्णो हसन्नूचे जरन् ! त्वं विब्रवीषि किम् । मया तव बलं ज्ञात मरणाभिमुखस्य हि ॥ २४५ ॥
हीनाङ्ग्या इव मरणाऽभिमुख्याः पक्षनिर्गमः । प्रतिज्ञां पूरयिष्यामि सुताया अहमेव ते ॥ २४६ ॥
हते त्वयि चिताऽग्नौ ते तस्याः सद्यः प्रवेशनात् । असमर्थेन नाऽपूरि त्वया तु चिरकालतः ॥ २४७ ॥
इति वाक्तर्पणजाग्रत्क्रोधाऽग्निर्मगधेश्वरः । वर्षति स्म शरासारं प्रावृडम्भोदवद्भृशम् ॥ २४८ ॥
इतस्ततः करोति स्म कृष्णस्तं चण्डवायुवत् । उभावपि चिरं युद्धं चक्राते संप्रसारतः ॥ २४९ ॥
खेचरा सुसदश्चैवाऽसुराश्च शतशो दिवि । विलोकन्ते स्म दूरस्था मुक्तान्यविषयेक्षणाः ॥ २५० ॥
आयसैरायसास्त्राणि दैवतान्यपि दैवतैः । प्रतिहन्ति स्म दाशार्हो मगधेशमहीक्षितः ॥ २५१ ॥
एवं सर्वाऽस्त्रवैफल्ये जाते मगधभूपतिः । चक्रं सस्मार दुर्वारं सर्वशस्त्रशिरोमणिम् ॥ २५२ ॥

१ क्षुद्रपिपीलिकाया. । २ समरक्षात् ।

सहस्रसुरसंसेव्यं सहस्रारसमन्वितम् । आगत्य हस्तालङ्कारतयाऽजायत भूपतेः ॥ २५३ ॥
भ्रमयित्वा भृशं पूर्वं मुञ्चति स्म महीशिता । स्खलितुं तत् समागच्छन् सावधानाः सहस्रशः ॥ २५४ ॥
पाण्डवप्रमुखास्तस्थुर्गदामुद्गरपाणयः । परं प्रस्खलितुं शक्यं नैव केनाऽपि तद्भवेत् ॥ २५५ ॥
क्रमेण खे समागत्य कृष्णं वक्षस्यताडयत् । गृह्णाति स्म स्वहस्तेन स्थितं च स्वीयवस्तुवत् ॥ २५६ ॥
पुष्पवृष्टिं सुराश्चक्रुरयं नवमश्चक्रभृत् । भरतार्द्धमहीभोक्ता निहन्ता प्रतिचक्रिणः ॥ २५७ ॥
इति ब्रुवाणा व्योमस्था हस्ततालपुरस्सरम् । एवमेव जगत्सृष्टिर्वर्ततेऽनादिकालिकी ॥ २५८ ॥
यतः—" कुमुदवनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुदमूलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिललितानां हा विचित्रो विपाकः " ॥ २५९ ॥
अथ जातकृपः कृष्णो मगधेश्वरमूचिवान् । भो राजन् ! भव मूर्खस्त्वं विचार्य च गृहं व्रज ॥ २६० ॥
ममाऽऽज्ञामुररीकृत्य राज्यं मगधदेशजम् । भुङ्क्ष्व जीव चिरं यस्मात् मरणं नास्ति ते हितम् ॥ २६१ ॥
इत्युक्ते मगधाधीशः प्रोचिवान् यादवेश्वरम् । राज्यं यातु श्रियो यान्तु यान्तु प्राणा विनश्वराः ॥ २६२ ॥
एकैव कीर्तिर्मा यातु मृते सत्यपि निश्चला । मुञ्च चक्रं विचार्याऽलं यज्ज्ञाव्यं तद्भविष्यति ॥ २६३ ॥
तच्चक्रं भ्रमयित्वाऽथ मुमोचाऽऽशु गदाऽग्रजः । गत्वा चकर्त मूर्धानं स्वामिनः प्रतिचक्रिणः ॥ २६४ ॥
सति पुण्योदये सर्वमात्मीयं स्यात् परस्य हि । पुण्ये नष्टे भवेद्वस्तु स्वकीयमपि चान्यसात् ॥ २६५ ॥

मृत्वा जगाम नरके चतुर्थे मगधेशिता । पुष्पवृष्टिं व्यधुर्देवास्ततः प्रमुदिताशयाः ॥ २६६ ॥
नवमो वासुदेवोऽयमुत्पन्न इतिघोषिणः । कृष्णस्योपरि मुदिताश्चक्रुश्च जिनपध्वनिम् ॥ २६७ ॥
अथ सर्वे जरासंधराजानो नेमितीर्थपम् । आगत्य शरणं भेजुरूचुश्च विनयाननाः ॥ २६८ ॥
तदैव हि जयो ज्ञातः स्वामिन्निन्द्राऽनुजन्मनः । इन्द्रादिष्टो रथं लात्वा त्वत्कृते सूत आययौ ॥ २६९ ॥
एकोऽपि विष्णुः स्याद् हन्ता प्रतिविष्णोरिति स्थितिः । किं पुनः प्राप्तसाहाय्यो जगन्नाथस्य ते प्रभो ! ॥ २७० ॥
अथ त्वत्-शरणं प्राप्तानस्मान् जीवय जीवय । इत्युक्ते सान्त्वनापूर्वमकार्षीत् सुस्थितांश्च तान् ॥ २७१ ॥
सर्वान् भूपान् सहाऽऽदाय कृष्णान्तिकमुपाययौ । कृष्णोऽपि सबहुमानं गाढालिङ्गनपूर्वकम् ॥ २७२ ॥
पप्रच्छागमने हेतुं नेमिराख्यच्च तं तथा । वचसा नेमिनाथस्य स्वीचक्रे प्रणतांश्च तान् ॥ २७३ ॥
सन्तो मदीयास्तिष्ठन्तु मा कुर्वन्तु भयं मम । यज्जातं तत्तु जातं भो ! न स्मार्यमथ किंचन ॥ २७४ ॥
इत्युक्त्वा हस्तदानेन तेषां पृष्ठौ विशेषतः । ताम्बूलादिप्रदानेन सच्चकार भृशं हरिः ॥ २७५ ॥
मगधाधीशतनयं सहदेवं न्यधाद् हरिः । पितुः पट्टे तुरीयांशं दत्त्वा मगधनीवृतः ॥ २७६ ॥
अथाऽर्यमा पयोराशौ प्रतीच्याः प्रययौ तदा । परिभ्रम्य चिरं श्रान्तः स्नातुकाम इवाऽपरम् ॥ २७७ ॥
मातलिं नेमिनाथोऽपि विससर्ज गतश्च सः । सर्वेऽपि यदवः स्वं स्वं पटधाम ययुर्मुदा ॥ २७८ ॥
द्वितीयेऽह्नि प्रभातेऽथ तिस्रः खेचर्य आययुः । हृष्टा आगत्य ता ऊचुः समुद्रविजयान्वितम् ॥ २७९ ॥

कृष्णं तत्र स्थितं चेति वृत्तान्तं शृणु ते पितुः । श्रीमतो वसुदेवस्य वचसस्तत्प्रेषिता वयम् ॥ २८० ॥
तदेतः स्थानतः स्वामिन् ! पौत्राभ्यां खेचरैश्च तैः । विजयार्द्धगिरिं प्राप युद्धं चाऽजायताऽरिभिः ॥ २८१ ॥
नीलकण्ठमुखा विद्याधरास्तत्पूर्वविद्विषः । वसुदेवेन सर्वे ते योद्धुकामा उपागमन् ॥ २८२ ॥
अथोचुर्युस्तने घस्रे इत आगत्य देवताः । जरासंधस्य चक्रेणाऽऽगतेन स्वकरं प्रति ॥ २८३ ॥
हतस्तेनैव भूपालो जरासंधो मुरारिणा । नवमोऽयं वासुदेव इत्यऽजायत दैववाक् ॥ २८४ ॥
श्रुत्वैतत् खेचराः सर्वे भवन्ति स्माऽतिदुःखिताः । रणं त्यक्त्वा ययुर्भूपं नाम्ना मन्दररंहसम् ॥ २८५ ॥
व्यजिज्ञपंश्च संभूय कृत्यमस्मान् समादिश । राजा मंदरवेगोऽपीत्युक्तस्तानूचिवानिति ॥ २८६ ॥
आयात सर्वे भो ! यूयं वसुदेवं मया सह । विज्ञप्य तं पुरस्कृत्य प्रणमामो हरिं प्रति ॥ २८७ ॥
उपदापाणयो जग्मुः प्रणेमुः परया मुदा । प्रद्युम्नाय ददौ पुत्रीं शाम्बायाऽन्ये महीभुजः ॥ २८८ ॥
अथ ते वसुदेवेन सहाऽऽयान्ति खचारिणः । इत्याख्यातुं पुरस्तेन प्रेषिताः स्मो वयं प्रभो ! ॥ २८९ ॥
कथिते ताभिरेवं च विमानानि सहस्रशः । प्रादुरासुः क्षणाद् व्योम्नि दुन्दुभिध्वानबन्धुरम् ॥ २९० ॥
समीपेऽथ समागत्य विमानानि विमुच्य च । उपदापाणयो नेमुर्विनयानतमौलयः ॥ २९१ ॥
कृष्णस्तु सहसोत्थाय विनयी संमुखं ययौ । ननाम पितरं भक्त्या पुरस्कृत्याऽऽजगाम च ॥ २९२ ॥
सिंहासनसमासीनं दण्डावर्तपुरस्सरम् । प्रद्युम्नशाम्बावागत्य नमतः स्म पदाम्बुजम् ॥ २९३ ॥

नामग्राहं तु प्रद्युम्नस्तान् सर्वान् खेचरेश्वरान् । हरेर्विज्ञपयामास तत्कृतोपायनानि च ॥ २९४ ॥
यूय मदीयाः स्थ इति राज्यं स्व स्वं यथासुखम् । चिर पालयत माज्ञा अपास्तभयवेपथुः ॥ २९५ ॥
इत्युक्त्वा ते विसृष्टाश्च तान् विमानान् ययुर्मुदा । कृष्णोऽथ जयसेनादेः प्रेतकार्यं शुचाऽकरोत् ॥ २९६ ॥
सहदेवो जरासधप्रभृतीनां ततोऽकरोत् । पितुः पत्युर्जीवयशा वीक्ष्य मृत्यु स्वहेतुकम् ॥ २९७ ॥
स्वजीवितं ज्वलनसात्करोति स्म शुचाऽऽकुला । तत्रानन्दपरं चक्रे हरिरानन्दलाभतः ॥ २९८ ॥
अथ भूपैः खेचरैश्च स सर्वं भरतार्द्धकम् । साधयामासिवांश्चागान्मगधेषु चमूभृतः ॥ २९९ ॥
शिलां कोटिशिलां नाम्ना योजनोत्सेधराजिताम् । विस्तारेणाऽपि तन्मानां देवताधिष्ठितां सदा ॥ ३०० ॥
सव्येन बाहुनोदध्रे चतुरङ्गुलमुच्चकैः । पश्यत्सु तेषु भूपेषु निर्निमेष खगेषु च ॥ ३०१ ॥
तां भुजाग्रे दधावाद्यो मूर्ध्नि विष्णुर्द्वितीयकः । गले तृतीयस्तूर्यस्तूरःस्थले हृदि पञ्चमः ॥ ३०२ ॥
कट्यां षष्ठः सप्तमस्तूर्वोराजानुकमष्टमः । चतुरङ्गुलमन्त्योऽवसर्पिण्यां यत्पतद्बलाः ॥ ३०३ ॥
ततश्च पश्चाद् व्यावृत्त्य साधयन् नृपतीन् बहून् । तोरणैः कृतशृङ्गारां द्वारिकां समुपागमत् ॥ ३०४ ॥
सर्वे मिलिता राजानो महोत्सवपुरस्सरम् । राज्याभिषेक तीर्थाम्बुमहौषध्यादिभिर्व्यधुः ॥ ३०५ ॥
खेचरान् पाण्डुपुत्रांश्च परानपि महीभुजः । वस्त्राभरणैः सत्कृत्य विससर्ज स्वनीवृते ॥ ३०६ ॥

१ स्वदेशाय ।

वासुदेवाय राजानो रत्नोपायनपूर्वकम् । कन्ये द्वे ढौकयामासुः प्रत्येकं भरतार्द्धजाः ॥ ३०७ ॥
स्वयं षोडशसहस्राः कृष्णः कन्या उपायत । बलायाऽदात् सहस्राण्यष्टौ शेषास्तनुजन्मनाम् ॥ ३०८ ॥
अथ ते यदवः प्राप्तराज्या मुदितमानसाः । स्वच्छन्दं रैवतकेषु रमन्ते स्म वनादिषु ॥ ३०९ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु–
लब्धप्रतिष्ठवरवाचकरत्नचद्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार,
तत्रागमद्दशमसर्ग इह प्रसिद्धः ॥ ३१० ॥

इति श्रीप्रद्युम्नचरिते महाकाव्ये जरासन्धवधी श्रीकृष्णराज्यप्राप्तिवर्णनो नाम दशमः सर्गः समाप्तः ।



## एकादशः सर्गः ।

इतश्च द्वारिकापुर्यां धनसेनोऽभिधानतः । नभःसेनाय तनुजामुग्रसेनात्मजन्मने ॥ १ ॥
ददौ हर्षेण कमलामेलाख्यां रूपरोहिणीम् । नभःसेनस्य सदने नारदर्षिरथाऽऽययौ ॥ २ ॥
विवाहव्यग्रमनसा न ज्ञातो नैव पूजितः । ततोऽमर्षभराक्रान्तो यथाऽऽयातस्तथा ययौ ॥ ३ ॥
नभःसेनस्य कर्तुं स विप्रियं चिन्तयन् हृदि । हलिनो निषधाख्यस्य पुत्रस्य सदनेऽन्यदा ॥ ४ ॥
याति स्म कृतसन्मान उपाविष्टः शुभासने । पृष्टः सागरचन्द्रेण निषधस्य तनूभुवा ॥ ५ ॥
दृष्टं किमप्यपूर्वं भो देवर्षे ! भ्रमता त्वया ? । स्मितपूर्वमवादीत् स स्वार्थसिद्धिं विचारयन् ॥ ६ ॥
रे बाल ! पृच्छसि त्वं किं मयाऽत्रैव पुरे महत् । आश्चर्यं धनसेनस्य कन्यकाऽदर्शि रूपतः ॥ ७ ॥
दृष्ट्वाऽचिन्तयमेवाऽहं कस्य पुनः कृते व्यधात् । विधिरेनां मयासेन सर्वां गुणमयीमिव ॥ ८ ॥
नामतः कमलामेलामर्थतश्च तथैव ताम् । त्वां दृष्ट्वा चिन्तयाम्येव सत्यमेतत्कृतेऽकरोत् ॥ ९ ॥
परं प्रदत्ता तत्पिता नभःसेनाय साम्प्रतम् । उग्रसेनस्य पुत्राय स्थिता चिन्ता ततस्तथा ॥ १० ॥
अथोपायाल्लभेथास्त्वमित्याशिषमुदीरयन् । प्रययौ सागरो रक्तस्तस्यां भृशमजायत ॥ ११ ॥
तस्या नामैव जग्राह हसन् क्रीडन् यथेच्छया । भुञ्जानोऽपि शयानोऽपि रात्रावपि दिवाऽपि च ॥ १२ ॥



नारदस्तु ततः स्थानात् ययौ त्वरितमेव हि । कमलामेलासदने तयाऽपूजि विदग्धया ॥ १३ ॥
आश्चर्यमपि पृष्टस्तामूचे कपटवासभूः । बालेऽद्भुते मया दृष्टे पुर्यामत्रैव सम्प्रति ॥ १४ ॥
कुरूपेषु नभःसेनः सुरूपेषु तु सागरः । इत्युक्त्वोत्पत्य स मुनिः प्रययौ स्थानमीप्सितम् ॥ १५ ॥
विदग्धस्त्रीस्वभावेन रागं साऽधत्त सागरे । नभःसेनं समुत्सृज्य बकं हंसीव हंसवत् ॥ १६ ॥
सागराय स तद्रागं शशंस स्वककार्यकृत् । यो यत्कार्यचिकीर्[1] जागरूकः स तत्र हि ॥ १७ ॥
सागरं ग्रथिलं प्रेक्ष्य स्वजना इत्यचिन्तयन् । केनोपायेन यात्येतद्ग्राथिल्यं सागरस्य हि ॥ १८ ॥
इति चिन्तापरे लोके शाम्बो मित्रमुपेयिवान् । आगत्य पृष्ठतस्तस्थौ हस्ताभ्यां चक्षुषी स्थगन् ॥ १९ ॥
सागरः प्राह कमलामेले ! त्वमसि किं प्रिये ! । स आह नाहं कमलामेलाऽस्मि मित्र ! सागर ! ॥ २० ॥
किं त्वमहं कमलामेलामेलकोऽस्मि सुहृत्तव । तदाऽब्धिर्मुक्तचक्षुः सन् दृष्ट्वा शाम्बमुवाच च ॥ २१ ॥
वरं जातं वरं जातं साम्प्रतं यदिहाऽऽगतः । जाने त्वमेव कमलामेलां मे मेलयिष्यसि ॥ २२ ॥
विममर्श तदा शाम्बः कथमेतद्भविष्यति । प्रतिपन्नं मया चैतद् ध्रुवं निर्वाह्यमेव हि ॥ २३ ॥
प्रज्ञप्तेरनुभावेन सर्वं कार्यं भविष्यति । विमृश्येति नभःसेनपाणिग्रहमहाहनि ॥ २४ ॥
वयस्यैर्बहुभिः सार्धं जगामोद्यानमुत्तमम् । आनयन्ति स्म कमलामेलां तत्र सुरंगया ॥ २५ ॥

१ कर्तुमिच्छुः चिकीः ।

गायन्तश्च हसन्तश्च वादयन्तश्च दुन्दुभिम् । तां च सागरचन्द्रेण विधिना पर्यणाययत् ॥ २६ ॥
अथ चोभयपक्षीया अपश्यन्तः कनीमिमाम् । सर्वत्राऽऽलोकयामासुर्द्वारिकायां वनेषु च ॥ २७ ॥
क्रमात् प्रापुस्तदुद्यानं विलोकन्ते स्म तत्र ताम् । प्रज्ञप्त्या विद्यया रूपं परावृत्त्य तु ते स्थिताः ॥ २८ ॥
जल्पन्ति स्म न ते भीत्या यदूनां मद्यपायिनाम् । एते हि मारयन्त्येव पीतमद्या वयःस्थिताः ॥ २९ ॥
निवृत्त्यैतः क्षणाद्गत्वा पूत्कारं चक्रुरग्रतः । सभास्थितयदुपतेरन्याय इति भाषिणः ॥ ३० ॥
हरिणा न्यायनिष्ठेन पृष्टा आहुर्यथातथम् । हरिरागाच्च तान् सर्वान् हन्तुकामोऽनया सह ॥ ३१ ॥
अभूत् शाम्बस्तदाऽभीतः प्रादुर्भूय स्वरूपतः । कमलामेलया युक्तं सागरं च करेऽग्रहीत् ॥ ३२ ॥
गले कृतोत्तरासङ्गो न्यपतत् पितृपादयोः । ऊचे मनाक् क्रुधं कृत्वा किं रे बाल ! त्वया कृतम् ॥ ३३ ॥
शाम्बो विहस्य प्रत्यूचे यत् कुर्वे तत् प्रसादतः । पितृपादस्य नो चेद्वा कश्चिदन्यः करोतु किम् ? ॥ ३४ ॥
कृष्णोऽप्यनेन वचसा रञ्जितोऽभूत्तदा हृदा । एकः स्वकीयस्तनुजो मृष्टं वाक्यं वदन् पुनः ॥ ३५ ॥
एकश्च घृतपूरोऽथ शर्कराचूर्णपूरितः । एकश्चाम्ररसः किं वा सघृतः कस्य नो प्रियः ? ॥ ३६ ॥
हसित्वा हरिरप्यूचे बालकस्य क्रियेत किम् । परं च कन्यारागोऽस्ति न त्वयीपद्यीत्यतः ॥ ३७ ॥
नभःसेन ! मयाहि त्वं कनीमन्यां विलोकय । कुरु पाणिग्रहं सद्यः तत् तेऽविघ्नं करिष्याति(ते) ॥ ३८ ॥
इत्युक्त्वा प्रियवाक्यानि नभःसेनमबोधयत् । ददौ सागरचन्द्राय कमलां कमलोपमाम् ॥ ३९ ॥

अथ प्रियायां वैदर्भ्यां प्रद्युम्नस्य सुतोऽजनि । ददौ कृष्णोऽभिधानं चाऽनिरुद्ध इति हर्षवान् ॥ ४० ॥
अथाऽभ्यस्तकलाशास्त्रो यौवनं प्राप्तवान् शुभम् । पितुः पितामहादीनां वल्लभः समजायत ॥ ४१ ॥
अभूत् शुभनिवासाख्ये तदोल्वणपराक्रमः । विद्याधरेश्वरो वाण उषा तस्य सुताऽभवत् ॥ ४२ ॥
विदग्धा चिन्तयामास पितृदत्तो वरो मम । यादृशस्तादृशो माऽस्तु मद्हृदः प्रतिकूलकृत् ॥ ४३ ॥
अनुरूपवरेप्सुः सा गौरीदेवीमपूजयत् । जापं च प्रत्यहं चक्रे तद्विद्यायाः शुचिस्त्रिधा ॥ ४४ ॥
सन्तुष्टाऽथाऽवदत्तां तु प्रद्युम्नतनुजो वरः । कृष्णपौत्रो वरस्तेऽस्तु तादृग्रूपपराक्रमः ॥ ४५ ॥
तस्याः पित्राऽथ वाणेन गौर्या देव्याः पतिः सुरः । शंकराख्यः समाराधि पूजानैवेद्यपूर्वकम् ॥ ४६ ॥
अजेयत्वमदात् सोऽपि वाणस्य समराङ्गणे । गौरीदेवी पतिं प्रोचे त्वमदाः कथमस्य हि ॥ ४७ ॥
अजय्यत्वं, मया यस्माद्दत्तोऽस्ति मदनोद्भवः । अनिरुद्धो वरः पुत्र्या उषाया अस्य संप्रति ॥ ४८ ॥
स तु वाणमनिर्जित्य न प्राप्योऽस्ति कथंचन । विरुद्धवरदानं तद्विहितं चान्यथा कुरु ॥ ४९ ॥
स्त्रीप्रधानः सुरः सोऽपि गत्वा वाणं पुनर्जगौ । स्त्रीकार्यादन्यतोऽजय्यो भव त्वामिति वैरिणाम् ॥ ५० ॥
इत्येवाऽस्त्विति वाणेन प्रतिपन्नं प्रमोदतः । भवितव्यं भवत्येव नान्यथा भवितव्यता ॥ ५१ ॥
भाविनं भावमुद्दिश्य वेधा अपि प्रवर्तते । वात्यानुरोधनो यद्वत्तृणं भ्रमति सर्वतः ॥ ५२ ॥
अथोषा वद्वृधे नित्यं यौवनेन श्रिया पुनः । प्रावृट्सरिज्जलेनेव शोभया च निरन्तरम् ॥ ५३ ॥

ततः क्रमाऽऽगता माया पौत्रमेनमपि श्रिता । ततः पापं मयोच्छेद्य हत्वा त्रीनपि साम्प्रतम् ॥ ६८ ॥
हरिर्जगाद किं वक्षि मिथ्यैतद्वसुधा तथा । कन्या चोभे अपि स्यातां बलिनः खलु हस्तगे ॥ ६९ ॥
परकीया भवेत्कन्या तद्धृतौ दोष एव कः । वय च बलिनो भूत्वा हराम कन्यका इति ॥ ७० ॥
तयोर्युद्धमभूत्तीव्र पश्यता द्युसदामपि । कृष्णस्तु बाणांश्चिच्छेद मध्यादर्द्धेन्दुबाणतः ॥ ७१ ॥
क्षणान्निरस्त्रो बाणोऽभूत्कृतो बाह्वोरजायत । युद्धं तयोर्बलवतोर्मल्लयोरिव तच्चिरम् ॥ ७२ ॥
चिर नियुध्य तं श्रान्तो(न्त) कृष्णोऽतुलपराक्रमः । अश्रान्तः सर्वयुद्धेषु यमसादकरोत् क्षणात् ॥ ७३ ॥
हरिर्हली च प्रद्युम्नोऽनिरुद्धश्चोपया सह । द्वारिकायां ययुः पश्च प्रमोदमहपूर्वकम् ॥ ७४ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु—
लब्धमतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार,
सर्गोऽत्र शकरमितः सुखमाप पूर्तिम् ॥ ७५ ॥

इति श्रीप्रद्युम्नचरिते महाकाव्ये सागरचन्द्रकमलामेलापाणिग्रहण–उपाहरण–बाणवधवर्णनो
नामैकादशः सर्गः सम्पूर्णः ।

अथ सा याच्यमानाऽपि भूचरैः खेचरैस्तथा । परं वाणो ददौ नैव वरातिशयकाम्यया ॥ ५४ ॥
अथाऽनिरुद्धे रक्ता सा ध्यायन्ती पतिभावतः । नयति स्म कियत्कालमुपायं हृदि तन्वती ॥ ५५ ॥
एकदा समयं वीक्ष्य चित्रलेखां सखीं जगौ । गत्वाऽनिरुद्ध आनेयस्त्वया मत्प्रेमवद्धया ॥ ५६ ॥
सा विदग्धा सखी गत्वाऽनिरुद्धमपि रागिणम् । तस्या गुणान् समाख्यायाऽकरोद्वैदग्ध्ययोगतः ॥ ५७ ॥
तया सह समागाच्चाऽनिरुद्धः प्रेमयन्त्रितः । कृत्वा विवाहं गान्धर्वं सुलग्ने तामुपायत ॥ ५८ ॥
रममाणस्तया तस्थौ नानाविधरतश्रिया । यामिनीं यामवत् तां च गृहीत्वा स प्रगेऽचलत् ॥ ५९ ॥
अनिरुद्धोऽहं प्रद्युम्नपुत्रः पौत्रश्च शाङ्गिणः । उषां हरामि गच्छामि द्वारिकायां तया सह ॥ ६० ॥
वाणो वा यदि वाऽन्योऽपि धन्वी खड्गी मदग्रतः । आयातु पश्यतु वलं नाहं छन्नं प्रयामि तत् ॥ ६१ ॥
इति वाढस्वरं जल्पन् प्रययावुषया सह । ततो वाणोऽन्वधाविष्ट कुर्वन् वाणासनं ज्यया ॥ ६२ ॥
आगत्य मिलितस्तस्य युद्धं कुर्वन् रुरोध तम् । ववन्ध नागपाशेनाऽनिरुद्धं वलगर्विणम् ॥ ६३ ॥
प्रज्ञप्त्या विद्ययाऽऽगत्य शार्ङ्गपाणिः प्रवोधितः । वृत्तान्तमेनं सकलं हलिना तनुजेन च ॥ ६४ ॥
द्रागचालीद्धरिस्तत्र गरुडध्वजदर्शनात् । तुत्रुटुर्नागपाशास्ते मोचितो मदनात्मजः ॥ ६५ ॥
आगतं शाङ्गिणं मत्वा वाणः स्ववलगर्वितः । तत्रागतोऽकरोद्युद्धं वलं स्थानमवाप्य तत् ॥ ६६ ॥
कृष्णं प्रोवाच वाणोऽथ मायया रुक्मिणी हृता । त्वया तव सुतेनाऽपि वैदर्भी किल मायया ॥ ६७ ॥

# द्वादशः सर्गः ।

अथ नेमिजिनाऽधीशः क्रीडां कुर्वन् यथोचिताम् । कुमारैर्दत्तसद्रूपैर्जगामाऽऽयुधधामनि ॥ १ ॥
श्रीकृष्णवासुदेवस्य भ्रातुस्तत्र ददर्श च । चक्रं सुदर्शनं नाम धाम्नां धाम श्रियां पदम् ॥ २ ॥
पाञ्चजन्यं ददर्शाऽथो कार्तिकीशशिसंनिभम् । तथा शार्ङ्गधनुर्भोगिराड्भोगमिव विस्तृतम् ॥ ३ ॥
गदां कौमोदकीं खड्गं नन्दकं दृष्टवांस्तथा । आदित्सुं तं न्यषेधच्च शस्त्राऽऽरक्षो भृशं नमन् ॥ ४ ॥
स्वामिन्नेतानि योग्यानि हरेरेव परस्य न । महाबलः स एवाऽस्ति शस्त्राण्यपि तथैव हि ॥ ५ ॥
गृह्णतः पादघातादिविक्रियो तेस्तु माऽनघ ! । उपालम्भपदं मा स्म भूयासं यदुशासितुः ॥ ६ ॥
निवर्तस्व तदेतेभ्योऽन्यां च क्रीडां कुरुष्व भोः ! । इत्युक्ते तन्मनःस्थैर्यं कर्तुं तेभ्यो निवृत्तवान् ॥ ७ ॥
शङ्खोऽप्य नायुधमिति ब्रुवन् स्वामी ललौ करे । चकाराऽधरविश्रान्तं रक्तोत्पलं मरालवत् ॥ ८ ॥
दध्मौ स्वामी तु निःशङ्कं प्रमोदभरपूरितः । तद्ध्मानेन समुद्रोऽपि जगर्ज निकटस्थितः ॥ ९ ॥
शृङ्खलास्त्रोटयामासुः करिणो मददुर्धराः । पादबन्धनरज्जूंश्च हयाश्छित्त्वा पलायिताः ॥ १० ॥
कपिशीर्षाणि संपेतुः समथासीत् सवेपथुः । चलेक्षणाः कुमारास्तु पतिं पितरमाययुः ॥ ११ ॥

शार्ङ्गी सीरी च दाशार्हाः सन्नाहग्रहतत्पराः । कोऽयं कोऽयमिति प्रोचुर्धनुरादादिरे च ते ॥ १२ ॥
अथ शान्ते ध्वनौ तस्मिन् प्रतिध्वानेन(च) गर्जति । चिन्तयामास केनैष शङ्खोऽयं वादितोऽधुना ॥ १३ ॥
इयद्बलः पुमान् कोऽस्ति मत्तोऽप्यधिकसारवान् । नवीनः कश्चिदुत्पन्नश्चक्री युद्धाय चाऽऽगतः ॥ १४ ॥
हराविति हलिनाऽथ विचाराय प्रवर्तिनि । शस्त्राऽऽरक्षः समागत्य जगादेति भयद्रुतः ॥ १५ ॥
स्वामिन् ! मया वार्यमाणो नेमिरागत्य चापलम् । चकार पाञ्चजन्यस्य पूरणात्तव बान्धवः ॥ १६ ॥
अश्रद्दधानो मनसि श्रीनेमेर्बलमीदृशम् । विस्मयापन्नचित्तोऽस्थात्तावन्नेमिः समाययौ ॥ १७ ॥
सिंहासनात् समुत्तस्थावागते त्रिजगत्पतौ । हरिः सानन्दमालिङ्ग्य सनेमिः समुपाविशत् ॥ १८ ॥
पप्रच्छाऽवसरे नेमिं शङ्खोऽपूरि त्वया सखे ! । यन्नादेन समुद्रोऽपि मुक्तमुद्रोऽत्र वर्तते ॥ १९ ॥
नेमिर्हसित्वा चोवाच शस्त्रसद्मगतेन ते । क्रीडामात्रं मया चक्रे भरतार्द्धमहीपते ! ॥ २० ॥
हसन्नुवाच गोविन्दः क्रीडायुद्धं त्वया सह । कर्तुकामोऽस्मि चेदिच्छा तव भ्रातः ! विजृम्भते ॥ २१ ॥
नेमिर्विचारयामास क्व बलं सहतामसौ । मामकीनं तदिच्छाऽपि पूरणीया विलोक्यते ॥ २२ ॥
विचार्येति प्रभुः प्रोचे सृतं युद्धस्य वार्तया । पुष्पेनाऽपि न सा क्षि स्यान्नीतिशास्त्रं यतोऽस्य हि ॥ २३ ॥
बाहुनामनमेवास्तु मिथो नौ क्रीडयाऽपि च । ततो हरिर्निजं बाहुं भोगिभोगायतं व्यधात् ॥ २४ ॥
नेमिस्तु लीलया चक्रे भोगिकुण्डलभोगवत् । तथैव स्वामिना चक्रे पुरद्वारार्गलप्रभम् ॥ २५ ॥

निशाय नात्रिकान्तः भारमान उपाययौ । दूराद्वरिर्वलगाति स्म वाहौ सर्वौजसा विभोः ॥ २६ ॥
भुजादण्ड इवोदग्रे स्वामिनाऽपि भुजो निजः । लम्बमानो हरिस्तस्थौ विलक्षवदनोभवन् ॥ २७ ॥
भूमौ मुमोच कृपया पृथ्व्यास्फोटनमाप्नुतौ । हृयेतामिति सार्वेशो जगल्लोचनचन्द्रमाः ॥ २८ ॥
मुरत्वा नेमिभुजस्तंभं मानस्ते त्र च चित्तजम् । उवाच स जगन्नाथं भरतार्द्धमहीपतिः ॥ २९ ॥
त्वज्जन्मना यदुकुलं पावितं त्रिजगत्पते ! । तव साहाय्यतस्तीर्णो जरासंधरणोऽर्णवः ॥ ३० ॥
इति स्म परया भक्त्या नेमिर्गाति हरिस्तुतः । स्वगृह पादरजसा पूतं कर्तुमिव प्रभुः ॥ ३१ ॥
गते स्वामिनि साशङ्को बलमूचे जनार्दनः । इयद्बलः कथं नाऽयं भरतं हि जिघृक्षति ॥ ३२ ॥
ऊचे यग्मो यथा स्वाम्नाऽतिशायिक्षमया तथा । तीर्थंकरा भवन्त्येवं सर्वेऽपि सदृशाः किल ॥ ३३ ॥
राज्यग्रहणवार्ता का पाणिग्रहणमनिच्छतः । अभुञ्जानस्य तरलं मोदकस्य कथैव का ॥ ३४ ॥
रामोक्त सदिहानस्य हरेरागत्य देवताः । ऊचिरे मा स्म ताम्य त्वं शृणु तीर्थकृतो वचः ॥ ३५ ॥
श्रीमता नमिनाथेन प्रोक्त नेमिर्भविष्यति । कुमारो राज्यविमुखः प्रव्रजिष्यति निश्चितम् ॥ ३६ ॥
देवताभिरिति प्रोक्ते गताशङ्कोऽभवद्धरिः । शुद्धान्तसदनं गत्वा नेमिमाजूहवत्तदा ॥ ३७ ॥
निविश्य स्नानपीठे तौ सस्नतुः शुद्धवारिभिः । पण्यस्रीलोठ्यमानाम्बुकुंभौ श्यामाश्मरोचिषौ ॥ ३८ ॥
उन्मृज्य देवदूष्येण स्वाङ्गरागं वितेनतुः । चन्दनैस्त्रिदशानीतैर्भृगं घुसृणमिश्रितैः ॥ ३९ ॥

भोजनं विदधाते स्म षड्रसं तावुभावपि । ददौ च नेमये गाढमीत्याऽऽभरणवाससी ॥ ४० ॥
सौविदल्लानथोवाच कृष्णः प्रमदपूरितः । आगच्छतो गच्छतोऽस्य कार्यं न स्खलनं क्वचित् ॥ ४१ ॥
सत्यभामाप्रभृतीनां रमतां मध्यवर्त्यसौ । यदृच्छयाऽपि मद्भ्राता नेर्ष्या कार्या परं मनाक् ॥ ४२ ॥
भामादिका निजस्त्रीश्च कृष्णः प्रोचे सुधीरिति । निःशंकं क्रीडनीयोऽसौ व्रीडः कार्यो न मे मनाक् ॥ ४३ ॥
सौविदल्लाः स्त्रियश्चापि तथाज्ञां चक्रिरेतराम् । तथैवेष्टं पयःपानमथ वैद्यैरुदाहृतम् ॥ ४४ ॥
कृष्णस्यान्तःपुरं प्राप्तः कदाचिद्वलिनः स च । कदाचिद्वसुदेवस्य रेमे रामाभिरादरात् ॥ ४५ ॥
एकतोऽन्तःपुरं सर्वमेकतश्च शिवासुतः । रेमेते स्म तथा चित्रं न तृतीयः स्मरोऽभवत् ॥ ४६ ॥
अन्यदा च वसन्तर्तावागते मधुसूदनः । निर्ययौ क्रीडितुं हर्षात् पौरैरन्तःपुरैरपि ॥ ४७ ॥
श्रीमद्रैवतकोद्याने नानाद्रुममनोरमे । सामग्रीं सकलां गृह्णन् क्रीडायाश्चन्दनादिकाम् ॥ ४८ ॥ ( युग्मम् )
प्रद्युम्न–शाम्बप्रमुखाः कुमाराः सकला अपि । आययुः कृतशृङ्गाराः स्मरपुत्रा इवाऽखिलाः ॥ ४९ ॥
श्रीमान्नेमिकुमारोऽपि समागच्छन्मधूत्सवे । उद्याने नन्दन इव चिक्रीडुर्यदवः सुराः ॥ ५० ॥
वीणाया वादनं चक्रुः केऽपि वेणोश्च वादनम् । पुष्पावचयनं केऽपि केऽपि गीतं मधूत्सवे ॥ ५१ ॥
सुरां केऽपि पिबन्ति स्म केऽपि द्राक्षासवं मुदा । नालिकेरजलं केऽपि शीतलं पित्तनाशनम् ॥ ५२ ॥

१ ‘गीतामृतध्वनीं’ इत्यपि पाठः ।

मालां सुमहतीं कृत्वा स्त्रीकण्ठे केऽपि चिक्षिपुः । आलिङ्गनस्य सकेतं निशायां ददते स्म किम् ? ॥ ५३ ॥
केचिदाम्रतरोः शाखाबद्धदोलाः स्त्रिया सह । आन्दोलनेन चिक्रीडुर्गाढालिङ्गनकुङ्कुजाः ॥ ५४ ॥
महिष्यः सत्यभामाद्या हरिभावविदो मुदा । अङ्किकां कुसुमैः कृत्वा श्रीनेमिं पर्यधापयन् ॥ ५५ ॥
शिरोवतंसं पुष्पाणां काऽपि गौरी प्रभोर्न्यधात् । मस्तके कुण्डले चाऽपि कर्णयोर्गण्डघर्षिणी ॥ ५६ ॥
काऽपि हारं न्यधात् पौष्पं कण्ठे बाहुयुगेऽङ्गदे । बबन्ध मूर्ध्नि धाम्मिल्लं नानाकुसुमदामाभिः ॥ ५७ ॥
निर्विकारमनास्तिष्ठन् श्रीमान्नेमिस्तु चापलम् । सोढवान् हरिपत्नीभिः कृतं तत्र चिरं मुदा ॥ ५८ ॥
एवं मधूत्सवं कृत्वा हरिरागान्निजं गृहम् । ततश्च पौरलोकोऽपि तथा सर्वः परिच्छदः ॥ ५९ ॥
अथ श्रीनेमिनाथं ते समुद्रविजयादयः । शिवाद्या मातरश्च पाणिग्रहकृतेऽभ्यधुः ॥ ६० ॥
एकस्या एव यादव्याः कुरु पाणिग्रहं वरम् । प्रमोदहेतोरस्माकं नेमे ! त्वं निःस्पृहोऽपि हि ॥ ६१ ॥
केषां सन्ति सहस्राणि स्त्रीणां शतश एव हि । द्वात्रिंशदष्टौ वा केषां योगीवाऽसि त्वमेककः ॥ ६२ ॥
इत्थं स्वामी बहूक्तोऽपि नामन्यत करग्रहम् । वात्यया मेरुचूलाऽपि पात्यते किमु कर्हिचित् ? ॥ ६३ ॥
वसन्तमथ निर्जित्य ग्रीष्म आगात् प्रतापवान् । सौम्यं राजानमुच्छिद्येवाऽऽगच्छति महानृपः ॥ ६४ ॥
बालोऽपि ग्रीष्मो दुःसोढः आसीन्मृदुशरीरिणाम् । किं बालोऽपि हि हर्यक्षः शान्तः केनाऽपि कथ्यते ? ॥ ६५ ॥
निश्वासलहरीकम्प्रे वाससी श्वेतनिर्मले । युवानः पर्यधुस्तत्र परं व्रीडैकहेतवे ॥ ६६ ॥

तालवृन्तं करात् सर्वे न मुञ्चन्ति स्म नित्यशः । सुप्ता अपि नरा नार्यो व्यत्ययेन दधुः करे ॥ ६७ ॥
सौवर्णरत्नालंकारान् विमुच्य स्त्रीजनोऽखिलः । धत्ते स्म कौसुमांस्तांश्च पतिवैदग्ध्यकल्पितान् ॥ ६८ ॥
जलार्द्रां नैव मुञ्चन्ति हृदः स्त्रीमिव भोगिनः । उष्णेऽपि शीतलस्पर्शां चंदनागुरुवासिताम् ॥ ६९ ॥
एवं ग्रीष्मर्तुराजोऽपि स्वाधिपत्यं प्रदर्शयन् । आगात्तस्य परं तापं सोढुं नाऽभूत्क्षमो हरिः ॥ ७० ॥
ग्रीष्मर्तुभीतो गोविन्दो ययौ रैवतकं गिरिम् । तदीयोद्यानसरसी रथ्यास्या(?) परितः स्थितः ॥ ७१ ॥
प्रविवेश हरिस्तत्र क्रीडां कर्तुमना मनाक् । सत्यभामादयः सर्वाः प्रविशन्ति स्म झम्पया ॥ ७२ ॥
भृत्वा सौवर्णशृङ्गाणि जलैराचिक्षिपुर्हरिम् । हरिः प्रत्याक्षिपत्ताश्च तैरेव च भृतैर्भृशम् ॥ ७३ ॥
ताभिः संभूय सर्वाभिर्जलाच्छोटाद् हरिः कृतः । तथाकुलो यथा नैव द्रष्टुं ता अपि शक्तवान् ॥ ७४ ॥
काऽपि कृष्णजलाच्छोटात् पतन्मध्याम्बरा सती । दिगम्बरं स्म जानाति नात्मानं नेत्रमीलनात् ॥ ७५ ॥
जलाच्छोटाद्विमुक्ता सा विकाशिनयनाम्बुजा । लज्जते स्म हरेः पश्चाद्यतो लज्जा दृशोः खलु ॥ ७६ ॥
अथावसरमालोक्य संज्ञाप्य सकला वधूः । नेमिं मुक्त्वा ययौ विष्णुः सरसीतो बहिः क्वचित् ॥ ७७ ॥
हरावथ गते ताभिः पर्यवेष्ट्यत तीर्थपः । मधुपीभिर्यथा पद्मः करिराट् च करेणुभिः ॥ ७८ ॥
जलैराच्छोटयामासुः प्रजावत्योऽथ नेमिनम् । तथा चकार श्रीनेमिः कौतुकात्ता बलादपि ॥ ७९ ॥

१ भ्रमरीभिः ।

जलाच्छोटाकुलीकृत्य नेमेर्जगृहुरम्बरम् । नेमिस्तासां तथाऽगृह्णात् वयो हि बलवत्तरम् ॥ ८० ॥
एव चिक्रीड जायाभिर्भ्रातुर्नेमिर्विनिर्ययौ । सरसः सरसस्तस्मात् करीव मदनिर्झरः ॥ ८१ ॥
बहिस्तादपि ता नेमिं परिवव्रुः समन्ततः । न मुञ्चन्त्यः क्षणाद् दूरं जीवं किं कर्मराशयः ॥ ८२ ॥
रत्नासने निवेश्याऽथ स्वामिनं श्रवदम्बरम् । रुक्मिणी मार्जयामास भृशं श्लक्ष्णेन वाससा ॥ ८३ ॥
सर्वाङ्गं निर्जलीकृत्याङ्गरागं यक्षकर्दमैः । सत्या चकार सव्रीडं सहासं स्त्रीस्वभावतः ॥ ८४ ॥
कापि न्यधित स हारं श्रीनेमेः कण्ठकन्दले । चकार कापि कोटीरं मौलौ सूर्यविडम्बिनम् ॥ ८५ ॥
भाले च तिलकं कापि पूर्णचन्द्रमदापहम् । कर्णयोः कुण्डले कापि पुष्पदन्तानुहारिणी ॥ ८६ ॥
अथाऽङ्गाक्लिं समायोज्य सत्या व्यज्ञपयज्जिनम् । त्वं देवरोऽसि च वयं भ्रातुर्जायास्तवाऽखिलाः ॥ ८७ ॥
पाणिग्रहकृते याञ्चां कुर्मस्ते मिलिता वयम् । मान्या एव त्वया स्वामिन् ! अङ्गीकारवचःकृते ॥ ८८ ॥
नाभेयाद्याश्च तीर्थेशा जज्ञिरे जगदुत्तमाः । चक्रुः पाणिग्रहं तेऽपि सुतास्तेषां च जज्ञिरे ॥ ८९ ॥
नीतिशास्त्रमपि माह यौवने स्त्रीपरिग्रहम् । वार्द्धके मुनिवृत्तिं च चक्रुरेवं जिना अपि ॥ ९० ॥
नवः किमु जिनोऽसि त्व यौवनेऽपि स्त्रियं त्यजन् । चलत्पन्थानमुज्झित्वा विपथं कः समाश्रयेत् ? ॥ ९१ ॥
अनुत्तरे जिने नेमौ तथापि हरियोषितः । चक्रुर्नवं नवं भावं शृङ्गारं च नवं नवम् ॥ ९२ ॥

---

1 सूर्याचन्द्रमसौ ।

अथ भीष्मसुता प्राह स्वामिन् ! सत्यंवदो भव । पुमानासि त्वं न पुमान् कर्णे गूढं वदेति भोः ! ॥ ९३ ॥
न पुंस्त्वे त्वं वदामो न पुंस्त्वे त्वाग्रहयोग्यता । तदा जाम्बवती प्राह किमित्थं स्वं वदिष्यति ॥ ९४ ॥
गृहाणान्तर्भवं वासो विलोकय विचेष्टितम् । विलोक्य योग्याऽयोग्यं हि पश्चात्कार्यं यथेप्सितम् ॥ ९५ ॥
ऊचेऽथ लक्ष्मणा प्राज्ञा नैवं कुरुत साम्प्रतम् । लज्जामाप्स्यति सर्वाभ्य इत्येकान्ते विलोक्यताम् ॥ ९६ ॥
सुसीमा प्राह भोः ! स्नानक्षणे सर्वो विलोकितः । मया सञ्जातसन्देहव्यूहयोर्निद्रचक्षुषा ॥ ९७ ॥
पुमानस्ति परं मन्दः स्त्रीणां पोषणकातरः । पाणिग्रहं तदा कुर्यात् यदा स्त्रीपोषशक्तिमान् ॥ ९८ ॥
अथोवाच वचो गौरी दम्पत्योरनयोरियम् । वृत्तिः कार्या च सर्वाभिरेकैकदिनभोजनात् ॥ ९९ ॥
अम्बराणि परं कृष्णो दास्यति प्रेमसंयुतः । तदा पद्मावती प्रोचे रे ! रे ! किं वक्षि गर्हितम् ॥ १०० ॥
भिक्षावृत्तिः किलायाता यदेवं वृत्तिकल्पनात् । मा ब्रूताऽनुचितं किञ्चिन्महतो लघुता यतः ॥ १०१ ॥
करिष्यति ततः सर्वं कृष्ण एव न संशयः । गान्धार्याहाथ चतुरा रे ! रे ! शृणुत मद्वचः ॥ १०२ ॥
अङ्गीकृते किलोद्वाहे सर्वं भव्यं भविष्यति । अङ्गीकारं विना तस्य व्योमाश्लेषनिभं समम् ॥ १०३ ॥
अथाम्बुमथनप्रायमेतत्सर्वं विहाय भोः ! । पादौ प्रणम्य वाच्योऽसौ यथा मन्येत कर्हिचित् ॥ १०४ ॥
न योग्यं पूज्यपूज्यस्य यत्तद्वचनजल्पनम् । प्रणामकरणेनैव माननीयो मनीषिभिः ॥ १०५ ॥
ततः सर्वाः समुत्थाय प्रणेमुः पादपङ्कजे । दाक्षिण्यवान् जिनोऽप्येष किं कुर्यात् सङ्कटे गते ॥ १०६ ॥

वाद्मात्रनोऽनुमन्तव्यममूषां वचनं मया। क्षणे विचार्य कर्तव्यमात्मनीन मनस्विना ॥ १०७ ॥
तिष्ठत्यैव जिनो नेमिस्तद्वचः प्रत्यपद्यत। तत् श्रुत्वा जहृषुः सर्वा मयूर्य इव गर्जितम् ॥ १०८ ॥
ततः सर्वाः समागत्य गायन्त्यो नगरीं निजाम्। ज्ञापयन्ति स्म कृष्णाय समुद्रविजयाय च ॥ १०९ ॥
कन्याविलोकने सर्वानादिदेश पृथक् पृथक्। अथ सत्या हरिं प्राह स्वसा मेऽस्ति कनीयसी ॥ ११० ॥
नाम्ना राजीमती नेमेरनुरूपाऽस्ति सर्वतः। तत् श्रुत्वा हरिरानन्दमाप मानातिगं तदा ॥ १११ ॥
वापय च भोजन चैव समये सुन्दरं भवेत्। विना समयमासाद्य विपर्येते उभे अपि ॥ ११२ ॥
अथोत्थाय ततः कृष्णो ययौ धाम त्वरायुतः। उग्रसेनस्य भूपस्य दृष्टः पौरीभिरादरात् ॥ ११३ ॥
हरौ गृहे समायाते परमां मुदमावहन्। उग्रसेनः समुत्तस्थौ विस्मयाकुलमानसः ॥ ११४ ॥
सिंहासने सन्निवेश्य पाद्यमर्घादि कारयन्। पप्रच्छागमने हेतुं न च ज्ञातं मनाक् पुरः ॥ ११५ ॥
उवाच कृष्णः सानन्दं कार्यं जातं विचिन्तयन्। राजस्तवाऽस्ति दुहिता नाम्ना राजीमतीति या ॥ ११६ ॥
सोचिता नेमिनाम्नोऽनुजन्मनो मे यदीच्छसि। तदा भोजो मुदं प्राप्याऽवदद्विनयवामनः ॥ ११७ ॥
स्वामिन्! मदीयमार्तिंत्वमपनेतुमिवागतः। स्वामिनः स्युस्त एवार्हाः सेवकार्तिहराः स्वयम् ॥ ११८ ॥
यद् योग्यं तच्च कर्तव्यं प्रश्नोऽप्यत्र किमर्हति। अहं राजीमती चापि सर्वमस्ति त्वदीयकम् ॥ ११९ ॥

१ आत्मीहितम्।

इत्युक्ते मुदमापन्नः सिद्धकार्यो गृहं ययौ । समुद्रमिदमाचख्यौ हरिः कार्याय तत्परः ॥ १२० ॥
अथ ज्योतिर्विदां मुख्यं क्रोष्टुकिं हरिराह्वयत् । दिवसं सुन्दरं तस्य प्रष्टुकामो मुदान्वितः ॥ १२१ ॥
अथ क्रोष्टुकिरागत्य कृताञ्जलिपुटोऽवदत् । तपात्यये शुभारम्भो न भवति कदाचन ॥ १२२ ॥
समुद्रविजयः प्रोचे कालो न क्षमतेऽत्र भोः ! । विचार्य तेन नेदीयो दिनं वद विदांवर ! ॥ १२३ ॥
विमृश्य क्रोष्टुकिः प्राह यद्येवं भवतां रुचिः । नभसः श्वेतषष्ठ्यां हि कार्यो विवाह उत्तमः ॥ १२४ ॥
क्रियते पुनरौत्सुक्याद् भवतामनुरोधतः । परं शास्त्रं न साक्षि स्यादत्र कर्मणि यादव ! ॥ १२५ ॥
एवमेवाऽस्त्विति प्रोच्य न्यसृजत् क्रोष्टुकिं हरिः । प्रदाय वस्त्रालङ्कारान् फलपुष्पर्द्धिबन्धुरान् ॥ १२६ ॥
उग्राय ज्ञापयामास वासरं तं जनार्दनः । समुद्रः उग्रसेनश्च ततो द्वावप्यसज्जताम् ॥ १२७ ॥
कृष्णः सर्वां पुरं चक्रे पताकालक्षमण्डिताम् । तोरणैः रत्नमञ्चैश्च भूपितान्तश्चतुष्पथाम् ॥ १२८ ॥
समुद्रो भोजयामास यदूंश्च प्रतिवासरम् । विविधैः खण्डखाद्याद्यैर्विविधैश्च फलैस्तथा ॥ १२९ ॥
विविधैः पानकैः सद्यः कृतैः सद्द्रव्यमिश्रितैः । कर्पूरैलावासितैश्च निर्मलैर्दधिसक्तुभिः ॥ १३० ॥ ( युग्मम् )
अथोपयामदिवसे शिवादेवी न्यमन्त्रयत् । सुवेषा कृतशृङ्गारा सखीवृन्दसमन्विता ॥ १३१ ॥
रोहिणी-देवकीमुख्याः कुलवृद्धाः सहस्रशः । रेवतीप्रमुखाः पत्नीर्बलस्य बलशालिनः ॥ १३२ ॥

१ निकटम् ।

हरेश्च सत्यभामाद्या अन्या अपि यदुस्त्रियः । आहूतास्ता मिलन्ति स्म सहर्षं सपरिच्छदाः ॥ १३३ ॥
चक्रुस्तारस्वरं गीतगानं वीवाहमङ्गले । स्वर्णासने निवेश्याथ स्वामिनं प्राङ्मुखं सुखम् ॥ १३४ ॥
तासां मध्ये कियन्त्यश्च स्नपयामासुरङ्गनाः । ततः उन्मृज्य सर्वाङ्गं पक्ष्मलेन सुवाससा ॥ १३५ ॥
अङ्गरागं पुनश्चक्रुर्यक्षकर्दमवारिभिः । मत्यङ्ग[1] रत्नमाणिक्यभूषणानि ददुर्मुदा ॥ १३६ ॥
एवमेव हि ताः सर्वा गत्वा राजीमतीं क्षणात् । सर्वाङ्गभूषिता चक्रुर्विवाहप्रथिलाः स्त्रियः ॥ १३७ ॥
समुद्रविजयो राजा हरिः सीरी च सत्वरम् । यदून् प्रति समाहूय घुसृणाचांपुरस्सरम् ॥ १३८ ॥
नालिकेराणि रम्याणि ददुर्विनयपूर्वकम् । सर्ववाद्यध्वनिस्तत्र प्रादुरास शुभावहः ॥ १३९ ॥
धृतश्वेतातपत्रोऽथ वीजितश्चामरैर्वरैः । सदशांशुकसंव्यानः पुष्पमालम्बसंयुतः ॥ १४० ॥
आरुरोह रथं स्वामी श्वेतवाजिप्रयोजितम् । कुमाराः कोटिशस्तत्र समानवयसः पुरः ॥ १४१ ॥
केचिदारक्तसंव्यानाः के च पीताम्बरा अपि । नीलाम्बरधराः के च केचन श्वेतवाससः ॥ १४२ ॥
तद्वर्णेष्वेव वाहेषु समारूढाः सदृग्द्युतः । ताम्बूलापूर्णवदनाश्चेलुरहमहकृतः ॥ १४३ ॥
सर्वेऽपि भूभुजोऽभूवन्निभारूढाः सहस्रशः । पार्श्वतः स्वामिनो नेमेश्छत्रत्रितयशालिनः ॥ १४४ ॥
पृष्ठे दशार्हपत्न्यश्च महार्घ्यशिबिकासनाः । तारं मङ्गलगायिन्योऽपरा अपि यदुस्त्रियः ॥ १४५ ॥

[1] सुन्दरम् ।

एवं महर्द्धिः श्रीनेमिः प्रतस्थे कृतमङ्गलः । उभाभ्यां पार्श्वतो भूरिपठन्मङ्गलपाठकः ॥ १४६ ॥
अवाकिरन् पौरकन्याः लाजैः स्वच्छतरैः शुभैः । पश्यन्त्यो वररूपस्य शोभां हर्षचलाञ्चलाः ॥ १४७ ॥
गवाक्षस्थपुरन्ध्रीभिर्दृश्यमानो मुहुर्मुहुः । वर्ण्यमानगुणः सर्वैः सुरासुरनरेश्वरैः ॥ १४८ ॥
उग्रसेनस्य सदनं पटमण्डपभूषितम् । समाससाद श्रीनेमिर्गीयमानोरुमङ्गलः ॥ १४९ ॥
राजीमत्यपि तं श्रुत्वा नेमेरागमनध्वनिम् । प्रमोदपूरिता जज्ञे केकिनीव घनध्वनिम् ॥ १५० ॥
स्वस्वामिनो वरं रूपं द्रष्टुं भृशं समुत्सुका । गवाक्षं समलंचक्रे सखीवृन्दसमन्विता ॥ १५१ ॥
पश्यति स्म गवाक्षस्था श्रीनेमिं हर्षपूरिता । चिन्तयामास चित्ते च मम सद्भाग्यमस्ति किम् ? ॥ १५२ ॥
यदागत्य हि मां नेमिः परिणेता भविष्यति । पूर्वकृतं मयेयत्किं यदसौ प्राप्यते वरः ॥ १५३ ॥
चिन्तयन्त्याश्चिरमिति स्पन्दते स्म विलोचनम् । सुलोचनाऽपि भूत्वा सा क्षणाद् दुर्लोचनाऽभवत् ॥ १५४ ॥
विमनायिता तदा जाता क्षणात् राजकन्यका । पृष्टाऽपि च सखीवृन्दैर्गद्गदस्वरमाह सा ॥ १५५ ॥
स्पन्दते दक्षिणं चक्षुः किं मे सख्य इति श्रुते । सख्य ऊचुः शुभे । शान्तं पापं हतममङ्गलम् ॥ १५६ ॥
अनिष्टशङ्किता कथं विवाहसमये सखि ! । न वाच्यमेव स्यादीदृग् दुर्निमित्तं शुभेऽहनि ॥ १५७ ॥
अथागच्छद्वरो नेमिरुपविवाहमण्डपम् । आर्तस्वरं शृणोति स्म पशूनां पाशबन्धिनाम् ॥ १५८ ॥
अपृच्छत् सारथिं नेमिः किमस्तीत्येष दुर्ध्वनिः । मुग्ध आख्यन्न जानासि तव वीवाहभोजनम् ॥ १५९ ॥

१ सारथिः ।

मृगादयोऽजादयश्च तित्तिर्याद्याश्च भूरिशः । अन्येऽपि नानाजातीया मेलितास्सन्ति भूभुजा ॥ १६० ॥
यदवः कारयिष्यन्तेऽमीषां मांसैः सुसंस्कृतैः । भोजनं तेन पशवो रुध्यमानाः सहस्रशः ॥ १६१ ॥
अथोचे सारथिं नेमिर्दयावारां निधिः प्रभुः । रथं नय मदीयं भो ! यत्रैते सन्ति वाटके ॥ १६२ ॥
तथा चकार सूतोऽपि नेमिस्तत्र ददर्श च । पादाभ्यां कांश्च तान् बद्धान् ग्रीवायां कांश्च निर्दयम् ॥ १६३ ॥
पञ्जरे कांश्चन क्षिप्तान् कांश्च पाशैर्नियन्त्रितान् । उन्मुखान् दीननयनान् कम्पमानाङ्गधारिणः ॥ १६४ ॥
नेमिं दयानिधिं शान्तं ते प्रेक्षांचक्रिरे भृशम् । स्वस्वभाषाभिराचख्युः पाहि पाहीति नः प्रभो ! ॥ १६५ ॥
वाटकं नेमिनाथोऽथाऽचीकरत् करुणानिधिः । सूतेनाऽर्गलरहितं वीतपाशांश्च तान् क्षणात् ॥ १६६ ॥
स्वं स्वं स्थानं प्रयान्ति स्म ते सर्वे मुक्तबन्धनाः । न हीष्टं जीवितं केषां कीटं किटिभवैरितः(?) ॥ १६७ ॥
यथास्थानं गतैस्तैश्च ववले स्व गृहं जिनः । रथादुत्तीर्य कृष्णाद्याः समागत्य पुरोऽभवन् ॥ १६८ ॥
ऊचुः समस्ताः सम्भूय प्रारब्धं बालचेष्टितम् । किं त्वया पण्डितंमन्य ! हास्यं कारयसे च किम् ॥ १६९ ॥
एकशः परिणीयैनां पश्चात् कुर्या यथोचितम् । भोग्या वा यदि वा हेया माऽस्मान् लज्जय साम्प्रतम् ॥ १७० ॥
अब्रवीन्नेमिनाथोऽपि न ह्येतत्पाणिपीडनं । प्राणिपीडनमेतद्धि बहुप्राणिनिशुम्भनात् ॥ १७१ ॥
विष्णो ! युक्तं ममैतन्न क्षीणभोगाख्यकर्मणः । आदास्येऽह परिव्रज्यां गतोऽपि गृहमुद्यतः ॥ १७२ ॥
शिवा-समुद्रविजयौ रोदनं चक्रतुश्चिरम् । नभो-नभस्यावागातां नेत्रयोरेव किं तयोः ॥ १७३ ॥

निषिध्य पितरौ कृष्णो रुदतौ तौ बलादपि । उवाच नेमिनं वाचा सुधामधुरधारया ॥ १७४ ॥
यदित्थमेव कर्तासि प्रतिपन्नं कथं वचः । वचश्च प्रतिपन्नं चेत्तन्न मोक्तुं तवाऽर्हति ॥ १७५ ॥
तदेनां परीणीयाशु पुत्रानुत्पादयाऽद्भुतान् । नाभेयादिजिनानां हि पङ्क्तावुपविश प्रभो ! ॥ १७६ ॥
साध्यः किल महापुंसा पूर्वं संसार एव हि । परलोको ध्रुवं पश्चादिति नीतिविदां वचः ॥ १७७ ॥
इत्युक्ते प्रभुराचख्यौ मा वद त्वं पुनर्हरे ! । न हि दृष्टो मया ज्ञाने पाणिग्रहमहो मम ॥ १७८ ॥
एतदेव मया दृष्टं ज्ञाने तज्जातमेव हि । न हि भाव्यमतिक्रम्यं बलवत्पुरुषैरपि ॥ १७९ ॥
सर्वथा यदवो मत्वा निश्चयं स्वामिनो व्रते । रथस्य मार्गं मुक्त्वा ते स्वं स्वं रथमुपाययुः ॥ १८० ॥
स्वामी तु गृहमागत्य व्रताय त्वरितोऽभवत् । लौकान्तिकसुराश्चापि बभूवुः क्षणवेदिनः ॥ १८१ ॥
प्रभुमागत्य ते प्रोचुर्नाथ ! तीर्थं प्रवर्तय । मर्यादां नैव मुञ्चन्ति समुद्रा इव सज्जनाः ॥ १८२ ॥
प्रारेभे वार्षिकं दानं दातुं तत्क्षणतः प्रभुः । द्रविणं पूरयामासुर्जृम्भकाः शक्रशासनात् ॥ १८३ ॥
अथ वाद्यध्वनिं श्रुत्वा दूरतो राजकन्यका । आह स्म सख्यः किं शब्दः श्रूयते दूरतः खलु ॥ १८४ ॥
गृहीतवार्तास्तामूचुर्निवृत्तं स्वामिनं प्रति । प्रव्रज्योत्कण्ठुलं चाऽपि सद्यः पृथ्व्यां पपात सा ॥ १८५ ॥
मूर्च्छया किल निश्चेष्टां क्षणाच्चन्दनवारिभिः । उन्निद्रनयनां चक्रुः सख्यस्तत्परिचारिकाः ॥ १८६ ॥
लब्धसंज्ञा समुत्थाय विललाप लुलत्कचा । धूलिधूसरसर्वाङ्गा नेत्राम्बुक्लिन्नकञ्चुका ॥ १८७ ॥

विवाहसदनं नीत्वा यत् पश्चाद्वालितो वरः ॥ १८८ ॥
हास्यं तनाऽपि रे देव ! वर्तते किं नु[1]सद्मनि । ईदृशा यदि कुर्वन्ति पामराणां कथैव का(?) ॥ १८९ ॥
किं कृतं स्वामिनाऽनेनाऽदोषां मामुज्झता सता । कृतानां ना(मा)ऽन्यथेदृक्षोऽपरिणीतां त्यजेत्कथम् ॥ १९० ॥
अथवा कर्मणां दोषो मये(मै)व पूर्वजन्मनि । किं वा पाणिग्रहे विघ्नो मयाऽकारि स्त्रियाः खलु ॥ १९१ ॥
मया वियोगो दत्तः किं कस्याश्चित् स्वामिना सह । पिचुमन्दादिवृक्षाणां फलान्यपि कटूनि यत् ॥ १९२ ॥
पापानामीदृशामेव फलानि स्युः कटूनि तत् । निःस्नेहे भर्तरि स्नेहः सस्नेहे स तु युज्यते ॥ १९३ ॥
अथो वयस्या तामूचे किं करोषि मुधा सखि ! । ज्ञातोऽनेनाऽनुमानेन क्लीबोऽयं नैव संशयः ॥ १९४ ॥
वरं कृतं त्वनेनैतदनूढाऽप्युज्झिता यतः । ज्ञातं ज्ञातं हि भूतार्तोऽन्यथाऽऽगत्य व्रजेत् कथम् ? ॥ १९५ ॥
अथवा व्यवहाराऽज्ञः स्त्रीणां पोपेऽथवाऽलसः । भाग्यं तदास्ति जागर्ति कुलाऽधिष्ठातृदेवता ॥ १९६ ॥
गतवान् श्याममूर्तिर्यदनूढामेव मुक्तवान् । विलोक्य विवाहमहमुग्रसेनः करिष्यति ॥ १९७ ॥
यादवेशं प्रिय गौरं गौराङ्ग्यास्ते खलूचितम् । गौराङ्ग्या युज्यते गौरो रोहिण्या इव चन्द्रमाः ॥ १९८ ॥
अयं कृष्णानुरोधेन श्यामोऽप्यङ्गीकृतो वरः । आः किं वदसि हे ! पापे ! वाच्यं श्राव्यं च नैव यत् ॥ १९९ ॥
इत्युक्ते श्रवसोर्दत्त्वाऽङ्गुली[2] द्वे साऽवदत् पुनः । निशाऽपि शशिनं मुक्त्वा करोत्यन्यां प्रियं किमु ? ॥ २०० ॥
नेमिन स्वामिनं मुक्त्वा यदन्य कर्तुमुत्सहे ।

१ भर्तरि । २ कर्णयो ।

पद्मिन्यपि सहस्रांशुं विहायान्यं करोतु वा । रतिर्विहाय मदनमन्यं वा कुरुतां तथा ॥ २०१ ॥
अस्मिन् भवे भवेच्चेन्मे वरो वा ह्यथवा गुरुः । नेमिरेवाऽस्तु न परमन्यौ तौ शुद्धितस्त्रिधा ॥ २०२ ॥
सखीः सर्वा निवार्येत्थं प्रतिज्ञामिति साऽकरोत् । तपोव्रतविशेषैश्च निनाय कियतीः समाः ॥ २०३ ॥
जानानोऽप्यवधिज्ञानात्तथा जनमुखादपि । राजीमत्याः प्रतिज्ञां तां तथाप्यास्त न रागवान् ॥ २०४ ॥
प्रत्यहं प्रथमे यामे ददौ दानं जिनाऽधिपः । यथेच्छं याचतां पुंसां जृम्भकाऽमरपूरणात् ॥ २०५ ॥
चतुःषष्टिसुरेन्द्राः द्राग् ज्ञात्वाऽथावधिनाऽऽययुः । दीक्षासमयमासन्नं यतः समयवेदिनः ॥ २०६ ॥
नाम्नोत्तरकुरौ स्वामी शिविकायामुपाविशत् । सुरा नरा नयन्ति स्म शिबिकां हर्षपूरिताः ॥ २०७ ॥
शक्रे-शानौ दधाते स्म चामरे पार्श्वतो द्वयोः । छत्रं सनत्कुमारश्च खड्गं माहेन्द्र उत्तमम् ॥ २०८ ॥
स्वस्तिकादिकमन्येऽपि भक्तिप्राग्भारपूरिता । समस्तैर्यदुभिः सार्द्धं चचाल प्रभुरुत्सुकः ॥ २०९ ॥
उग्रसेनगृहाऽभ्यर्णे समायातं प्रभुं सुता । उग्रसेनस्य संवीक्ष्य पुनर्मूर्च्छामवाप सा ॥ २१० ॥
क्षणात्सखीभिरुत्सिक्ता सावधाना बभूव सा । भृशं वैराग्यमापन्ना दीक्षायां मन आदधे ॥ २११ ॥
स्वामिनः केवलोत्पत्तावादास्येऽहं व्रतं द्रुतम् । इत्यानन्दभरं प्राप्य पश्यति स्म प्रभुं दृशा ॥ २१२ ॥
गिरिं रैवतकं नाम वसुमत्येकभूषणम् । अथ प्राप्य प्रभुः प्रीतोऽध्यारोहत्तं यथासुखम् ॥ २१३ ॥

१ वर्षाणि ।

सहस्राम्रवणं तत्र नाम्ना चान्वयतो द्विधा । प्राप्योत्ततार त्वरितं शिबिकायाः शिवासुतः ॥ २१४ ॥
मुमोचाऽऽभरणादीनि गृह्णाति स्म हरिर्द्रुतम् । त्रिशत्यां च व्यतीतायामब्दानां जन्मतः प्रभोः ॥ २१५ ॥
श्रावणे मासि शुक्लायां षष्ठ्यां चित्रास्थिते विधौ । स्वामी षष्ठतपाश्चक्रे कचोत्पाटं यथाविधि ॥ २१६ ॥
पञ्चापि मुष्टीन् जग्राह केशानामादिवासवः । क्षीराब्धौ क्षिपति स्माऽऽशु न्यषेधत्तुमुलं च सः ॥ २१७ ॥
सावद्यं न मया सर्वं करणीयमिति प्रभुः । सामायिकं प्रपेदेऽथ शृण्वतीन्द्रमुखे जने ॥ २१८ ॥
गृहीते भावचारित्रे मनःपर्ययसंज्ञकम् । ज्ञानमुत्पेदिवत्तत्किं कृतसङ्केतमागतम् ? ॥ २१९ ॥
प्राव्रजन् भूमिपास्तत्र सहस्रं प्रभुणा सह । उभावपि हरी नत्वा भूपाश्च स्वपदं ययुः ॥ २२० ॥
सहस्रमपि ते भूपा विजह्रुर्यतिभिस्सह । नमिनाथस्य तीर्थीयैः प्राप्तशिक्षा यथाविधि ॥ २२१ ॥
स्कन्धे दधानो वसनं देवदूष्याभिधानकम् । विजहार द्विधा मुक्तपरिग्रहभरः प्रभुः ॥ २२२ ॥
अथ स्वामी द्वितीयेऽह्नि वरदत्तद्विजौकसि । षष्ठस्य तपसश्चक्रे पारणं प्राप्तपायसः ॥ २२३ ॥
पञ्चदिव्यानि चक्रुश्च सुरा मुदितमानसाः । अथ कर्मक्षयं कर्तुं विजहार महीं जिनः ॥ २२४ ॥
अथाऽनुजन्मा श्रीनेमे रथनेमिः स्मरार्दितः । पश्यन् राजीमतीं जज्ञे किं स्युः सर्वे जितेन्द्रियाः? ॥ २२५ ॥
अपूर्वैर्वस्तुसभारैस्तां स नित्यमुपाचरत् । तदाशयमजानाना देवृबुद्ध्याऽग्रहीच्च सा ॥ २२६ ॥
ययावन्येद्युस्तद्गेहे रथनेमिः स्मरार्दितः । मिलनच्छद्मना साऽपि सच्चकार भृशं हि तम् ॥ २२७ ॥

अवोचत्तां रहःस्थाने नर्मभाषणपूर्वकम् । एतादृग् यौवनं मुग्धे ! वृथा नयसि बालिशे ! ॥ २२८ ॥
भ्रात्रोरुभययोर्भेदोऽस्त्येकः पूर्वपदेन हि । स च नेमिरहं यस्माद्रथनेमिः प्रकीर्तितः ॥ २२९ ॥
तमेव चिन्तयित्वा मां परिणीय महामहम् । भोगान् भुङ्क्ष्व मया सार्द्धं यौवनं सफलं नय ॥ २३० ॥
प्राप्यं क्व चेदृशं मुग्धे ! यौवनं पावनं त्वया । मयाऽपि व्यत्ययात्तेन सफलं क्रियते द्वयोः ॥ २३१ ॥
प्रान्ते श्रीनेमिनः पार्श्वे व्रतं ग्राह्यं सुनिश्चलम् । आवाभ्यां निर्मलं पाल्यं भुक्तभोगतया शुभे ! ॥ २३२ ॥
यौवने गृह्यमाणं सद् व्रतं सद्दूषणं भवेत् । तादृग्रूपां स्त्रियं दृष्ट्वा नरं वा यन्मनो व्रजेत् ॥ २३३ ॥
अर्हन्तो निःस्पृहा एव भवेयुस्तत्त्वमुज्झिता । भ्रात्रा श्रीनेमिना नाऽहं तद्वत्त्वं चाऽपि निःस्पृहौ ॥ २३४ ॥
तव प्रेम मम प्रेम यदि मिश्रं प्रजायते । तद्दुग्ध-सितयोर्योगो नाऽस्तु चन्द्रानने ! किमु ? ॥ २३५ ॥
चिरं कटाक्षाः भ्रान्त्वा मे त्वयि श्रान्ताः शुभानने ! । एनं मानय पद्माक्षि ! त्वत्कटाक्षेण योजनात् ॥ २३६ ॥
एवं तस्मिन् ब्रुवाणे साऽवदद्भद्रदत्तलोचना । देवृबुद्ध्या मया ज्ञातोऽकार्ये वार्ता ततस्त्वया ॥ २३७ ॥
वार्तयाऽप्यलमेवाऽस्तु त्वयेदृग् जल्पता सह । ज्ञातं त्वं नेमिभ्रातृत्वात्तद्वदेव भविष्यसि ॥ २३८ ॥
काच-मण्योरिदानीं हि भेदो ज्ञातो मयाऽद्य भोः ! । वासे नृणां परीक्षा स्यात् सत्यं स्वर्णस्य घर्षणे ॥ २३९ ॥
मा वादीरद्यतस्त्वीदृग् यदि त्वं प्रेम वाञ्छसि । देवृ-भ्रातृस्त्रियोः प्रेमाऽऽवयोरस्तु चिरन्तनम् ॥ २४० ॥

नेमिभ्राताऽपि भूत्वा त्वं किमीदृग् वदसि स्वयम् । वंशेऽस्मिन् मौक्तिकत्व हि प्राप्याश्मेव भवन्नसि ॥ २४१ ॥
जिनधर्मस्त्वया प्राप्तस्तथापीदृग् वदन्नसि । दुर्गतौ कुत्र गन्तासि कृत्वा पापं त्वमीदृशम् ॥ २४२ ॥
रसाधिराजं सेवस्व शान्तं शान्तमनाश्चिरम् । किंपाकसदृशं मुञ्च शृङ्गारं विरसं पुरः ॥ २४३ ॥
बोधितः स च नाऽबोधि तयाऽश्महृदयः खरः । किं तूत्थाय जगाम स्वं धाम तत्तर्जितोऽधिकम् ॥ २४४ ॥
न व्यरंसीत् स दुर्ध्यानात् सद्ध्यानात् सापि निश्चला । कियन्तो दिवसा जग्मुरेवमेव प्रकुर्वतोः ॥ २४५ ॥
अथ सा तत्प्रबोधार्थमाकण्ठं गोः पयः पपौ । मदनद्रुफलं जघ्रौ वान्तिकृत्तत्क्षणं हि तत् ॥ २४६ ॥
रथनेमिं ययाचे सा काञ्चनं स्थालमुत्तमम् । सद्यस्तेन समानीते वमति स्म पयोऽखिलम् ॥ २४७ ॥
रथनेमिमवादीत् सा पिबैतद्गोपयोऽधुना । स ऊचे सारमेयोऽस्मि नाऽहं वान्तं पिबामि यत् ॥ २४८ ॥
सोचे किं वान्तभोजी स्यात् सत्यं श्वैव न चाऽपरः । तत् किमिच्छसि मां भोक्तुं वान्तां हि तव बन्धुना ॥ २४९ ॥
सत्यं मनुष्यरूपस्तत् श्वाऽस्त्येव त्वं न संशयः । अतः परमिदं वादीर्मा मां नरककारणम् ॥ २५० ॥
इत्थं तयोक्तः स्वं धाम जग्मिवान् मौनवानथ । असम्पूर्णाऽभिलाषत्वादस्थाच्च विमनायितः ॥ २५१ ॥
अस्थाद्राजीमती गेहे ध्यायन्ती जिननेमिनम् । वासरान् वर्षसदृशान् मन्यमाना मनस्विनी ॥ २५२ ॥
व्रतात् श्रीनेमिनाथोऽपि चतुर्भिरधिकान् व्रती । पञ्चाशद्वासरान्नीत्वा रैवताद्रौ समाययौ ॥ २५३ ॥

सहस्राम्रवणे तत्र वेतसस्य तरोस्तले । कृताऽष्टमतपाः स्वामी घातिकर्माण्यनाशयत् ॥ २५४ ॥
संप्राप केवलज्ञानमाश्विनामावसीदिने । चित्रास्थे शशिनि स्वामी सुरौघास्तत्र निर्ममुः ॥ २५५ ॥
सद्यः समवसरणं वप्रत्रयमनोहरम् । पूर्वद्वारे प्रविश्याथ तीर्थाय स नमोऽकरोत् ॥ २५६ ॥
पूर्वसिंहासने तस्थौ पूर्वाद्राविव भास्करः । गाश्च विस्तारयामास भव्याम्भोजप्रबोधनः ॥ २५७ ॥
स्वामिनः प्रतिबिम्बानि त्रिदिक्षु व्यन्तराऽमराः । तत्क्षणं चक्रिरे रत्नासनस्थानि मुदा भरात् ॥ २५८ ॥
मिलिता द्वादशाऽपीह पर्षदो हर्षपूरिताः । उपाविशन् यथास्थानं श्रोतुकामाः प्रभोर्गिरः ॥ २५९ ॥
धावमाना अथ ययुः शैलपाला हरेः पुरीम् । स्वामिनः केवलज्ञानं ज्ञापयामासुरादरात् ॥ २६० ॥
तत् श्रुत्वा मुदितो जज्ञे मुरारिस्तान् ददौ मुदा । अङ्गासक्तान्यम्बराणि भूषणानि च तत्क्षणात् ॥ २६१ ॥
सार्धद्वादशकोटीश्च काञ्चनस्य स तत्क्षणात् । प्रचचाल समस्तर्द्धिर्गजारूढो विवन्दिषुः ॥ २६२ ॥
निर्यान्ति स्म हरेः पश्चाद्दशार्हा दश ऋद्धिभिः । मातरौ भ्रातरश्चापि कुमारा अपि कोटिशः ॥ २६३ ॥
उग्रसेनादयश्चेलुः सर्वे तूर्णं महीभूजः । राजीमत्यपि राजीवलोचना मुदिताऽचलत् ॥ २६४ ॥
एवं महत्या सर्वर्द्ध्या भक्तिसंभृतमानसः । प्रयाति स्म च समवसरणं हरिरुद्यमी ॥ २६५ ॥
दूरादवततारेभाद्राजचिन्हानि मुक्तवान् । उत्तरद्वारतस्तत्र प्रविवेश विदां वरः ॥ २६६ ॥
तिस्रः प्रदक्षिणा दत्त्वा नेमिनाथं प्रणम्य च । निषसाद यथास्थानं हरिरन्येऽपि भूभुजः ॥ २६७ ॥

चतुःषष्टिसुराधीशाः सममेव समाऽऽययुः । कृतसङ्केता इव ते तथाऽन्ये कल्पवासिनः ॥ २६८ ॥
अथ नेमिर्जगत्स्वामी ददौ सद्धर्मदेशनाम् । वाण्या योजनगामिन्या केवलेन सहाऽऽप्तया ॥ २६९ ॥
तद्यथा—गतिश्चतुर्धा भोः ! भव्या ! देवगत्यादिकोदिता । विषयासङ्गिनो देवा इति स्यात् स्वल्पधर्मिता ॥ २७० ॥
नारका दुःखसंतप्ता इति धर्मः कुतो भवेत् । विवेकविकलत्वाच्च तिरश्चां दुर्लभो मतः ॥ २७१ ॥
सामग्र्यपि मनुष्याणां पूर्णा स्याद्धर्मकर्मणः । सामग्री च चतुर्भेदा मानुष्यत्वादिका शुभा ॥ २७२ ॥
चतुर्द्धाऽपि हि तां प्राप्य पुमान् यश्च प्रमाद्यति । स मूढ इति विज्ञेयः सत्यम्बुनि पिपासुवत् ॥ २७३ ॥
चला लक्ष्मीश्चलमायुश्चल यौवनमेव च । तस्माच्च त्रीण्यपि प्राप्य धर्मः कार्योऽन्तराऽन्तरा ॥ २७४ ॥
धर्मश्चतुर्द्धा कार्योऽसौ यथायोग्यं मनस्विना । विशेषतश्च विरतिलक्षणो दुष्करः खलु ॥ २७५ ॥
तस्माद्भवेन्निर्जराऽपि महती खलु कर्मणः । कर्मनिर्जरया मोक्षो भवेत् पुंसां क्षणादपि ॥ २७६ ॥
इति ज्ञात्वा समर्थेन कार्यो विरतिलक्षणः । मुक्त्वा प्रमादान् पश्चाऽपि धर्मे विघ्नकरा यतः ॥ २७७ ॥
भव्यास्त्वरध्वं तद्धर्मे न प्रमाद्यं कथंचन । धर्मस्य हि फलं मोक्षोऽन्यस्य स्यान्नरकः फलम् ॥ २७८ ॥
इति श्रुत्वा प्रभोर्वाचं कर्णामृतरसोपमाम् । वरदत्तो नृपः प्राप वैराग्यं मुक्तिकारणम् ॥ २७९ ॥
तथा विष्णुः समुत्थाय पप्रच्छ रचिताञ्जलिः । अनूढाऽपि त्वया मुक्ता प्रभो ! राजीमती कनी ॥ २८० ॥
तथाऽपि गाढप्रेमाऽभूत् त्वय्येव कृतनिश्चया । पित्रादिभिर्बहूक्ताऽपि नाऽन्यं वरमियेष च ॥ २८१ ॥

॥ २०३ ॥

इयत्प्रेमणि को हेतुरनूढाया अपि त्वयि । प्रत्युताऽस्या हि युक्तः स्याद् द्वेषः कर्तुमियत्कृते ॥ २८२ ॥
भरतार्द्धभुजा पृष्टो व्याकरोदिति तीर्थराट् । राजीमत्या धनवतीभवादारभ्य तान् भवान् ॥ २८३ ॥
तत् श्रुत्वाऽथ हरिस्तुष्टो राजीमत्यपि पर्षदः । कः पीत्वाऽमृतमाकण्ठं न तृप्यति सुधीर्जनः ? ॥ २८४ ॥
वरदत्तः समुत्थाय जगाद विनयानतः । देहि दीक्षां जगन्नाथ ! संसाराऽर्णवतारिणीम् ॥ २८५ ॥
क्षत्रियाणां सहस्रे द्वे वरदत्तेन भूभुजा । दीक्षां जगृहतुः सार्द्धं स्वामि-सेवकभावतः ॥ २८६ ॥
स्वामिनोऽथ धनभवाद् यौ बन्धू भवतः स्म च । धनदत्त-धनदेवौ तौ वैराग्यमवापतुः ॥ २८७ ॥
मन्त्री विमलबोधोप्यपराजितभवात्तु यः । स्वामिना सह ते भ्राता भवेऽस्मिन् भूभुजस्तयः ॥ २८८ ॥
तत्रायाता भवान् श्रुत्वा राजीमत्याः प्रसङ्गतः । सञ्जातजातिस्मरणाः प्राप्तवैराग्यसम्पदः ॥ २८९ ॥
स्वामिनो नेमिनः पार्श्वे जगृहुर्व्रतमादरात् । तैः साकं वरदत्तादीनेकादशगणेश्वरान् ॥ २९० ॥
विधिवत् स्थापयामास त्रिपदीदानपूर्वकम् । ते त्रिपद्यनुसारेण द्वादशाङ्गीमसूत्रयन् ॥ २९१ ॥
तदा च यक्षिणी राजपुत्री वैराग्यमासदत् । भूरिभी राजपुत्रीभिः स्वामिपार्श्वे व्रतं ललौ ॥ २९२ ॥
चत्वारिंशत्सहस्राणां साध्वीनां मुख्यतः स्थिताम् । एकादशाङ्ग्यध्ययनां प्रभुश्चक्रे प्रवर्तिनीम् ॥ २९३ ॥
वासुदेवो दशार्हाश्च नीलवासास्तथाऽपरे । प्रद्युम्न-शाम्ब-भान्वाद्याः कुमारा अपि भूरिशः ॥ २९४ ॥
शिवा देवकपुत्री च रुक्मिणी रोहिणी तथा । यादव्यो बहुशस्तत्र श्रावकत्वं प्रपेदिरे ॥ २९५ ॥

इत्थं चतुर्विधः सङ्घः स्वामिनो नेमिनोऽभवत् । तथा चतुर्विधो धर्मोऽप्यभवद्वृद्धिमांस्ततः ॥ २९६ ॥
भगवानपि संस्थाप्य स्वं तीर्थं पावनं नृणाम् । विजहार महीपीठे कुर्वाणो देशनागिरम् ॥ २९७ ॥
वासवाद्याश्च विष्ण्वाद्याः स्थानं जग्मुर्निजं निजम् । स्वामितीर्थस्य गोमेधो यक्षोऽधिष्ठायकोऽभवत् ॥ २९८ ॥
श्यामलास्यो नृयानश्च षड्भुजोऽर्जितविक्रमः । बीजपूरपर्शुचक्रधारी दक्षिणदोस्त्रये ॥ २९९ ॥
बभ्रुं शूलं च शक्तिं च धत्ते वामे च दोस्त्रये । तत्तीर्थजन्मा स्वर्णाभा कुष्माण्डी सिंहवाहना ॥ ३०० ॥
तदीयशासनाऽधिष्ठायिका देव्यभवच्च सा । चूतलुम्बींपाशधारिसव्येतरभुजद्वया ॥ ३०१ ॥
पुत्राङ्कुशधरा वामदोर्युगे कामरूपभृत् । अम्बिकेत्यपरं नाम बिभ्रती भक्तिभावभृत् ॥ ३०२ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु-
लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीविष्णुपुत्रचरितं ललितं चकार,
सर्गोऽत्र सूर्यमित एष इयाय पूर्तिम् ॥ ३०३ ॥

इति श्रीप्रद्युम्नचरिते महाकाव्ये श्रीनेमिजिनविवाहवर्णन-दीक्षाग्रहण-केवलोत्पत्ति-तीर्थस्थापनवर्णनो नाम द्वादशः सर्गः सम्पूर्णः ॥



# त्रयोदशः सर्गः ।

अथ पाण्डुसुताः पञ्च प्राप्तस्वेच्छाविलासिनः । हस्तिनागपुरे गत्वा भुञ्जते राज्यमुत्तमम् ॥ १ ॥
स्वस्ववारकमासाद्य द्रौपद्या सह रेमिरे । स्थाने स्थाने च चैत्यानि कारयन्ति स्म भक्तितः ॥ २ ॥
जिनपूजारता नित्यं साधुसेवनतत्पराः । सत्रागाराणि कुर्वन्तो ददाना दानमुत्तमम् ॥ ३ ॥
गतं कालं न जानन्ति न्यायधर्मैकवेदिनः । गुरूपास्तिं प्रकुर्वाणाः शस्त्र-शास्त्रविचक्षणाः ॥ ४ ॥
अन्यदा द्रौपदीगेहे नारदो मुनिराययौ । मिथ्यादृष्टिरयमिति तया नैव प्रमाणितः ॥ ५ ॥
निर्ययौ विब्रुवन् रोषात् सभ्रतः कालकान्तिभृत् । साक्षादह्निरिव क्रुद्धो नारदः कलिकौतुकी ॥ ६ ॥
इयं मानवती जाता पतीन् प्राप्याऽथ पाण्डवान् । नोत्तस्थौ न च नम्राऽभूदागतं प्रेक्ष्य मामपि ॥ ७ ॥
सङ्कटे पातयाम्येनां तादृशोऽहं महामतिः । यथेयं मदवज्ञानफलं भुङ्क्ते चिरादपि ॥ ८ ॥
परं न कोऽपि भरते ह्यस्या अर्थी भवेत् किल । यदस्याः स्वजनः कृष्णः पाण्डवाः पतयोऽपि च ॥ ९ ॥
विमृश्येति चिरं चित्ते सोऽमर्षणशिरोमणिः । जगाम धातकीखण्डं पारेऽब्धि प्रातिकूल्यभाक् ॥ १० ॥
कपिलेति नाम विष्णुस्तत्र चम्पापुरीपतेः । सेवकः पद्मनृपतिः स्त्रीलम्पटशिरोमणिः ॥ ११ ॥

पुर्याममरकङ्कायां मानवस्तु धुरि स्थितः । अस्ति त्रस्तसमस्तारिः पार्थिवो रूपसर्गभाक् ॥ १२ ॥
तस्य पार्श्वे ययौ देवऋषिरभ्यर्थयच्च सः । प्रणिपातादिसत्कारमकरोत्तस्य भूरिशः ॥ १३ ॥
हस्ते गृहीत्वा शुद्धान्तगेहं तं च निनाय सः । स्वाः स्त्रीस्तं दर्शयामास रूपातिशयशालिनीः ॥ १४ ॥
मुने ! क्वाप्यस्ति शुद्धान्तमीदृश हि जगत्त्रये । इत्युचानं नृप स्मित्वा नारदो मुनिरब्रवीत् ॥ १५ ॥
अहो ! ते कूपमण्डूककल्पस्याऽहंकृतिर्न वा । यदेता एव दृष्ट्वा त्वं मोदसे लभसे स्मयम् ॥ १६ ॥
जम्बूद्वीपस्य भरते दक्षिणे हस्तिनापुरे । पाण्डवाः पञ्च योद्धारः सन्ति तत्र महर्द्धयः ॥ १७ ॥
तेषां भार्या द्रौपदीति नाम्ना स्त्रीरत्नमुत्तमम् । न दृष्टा तत्त्वया दृष्टं किमस्मि स्मयसे च किम् ? ॥ १८ ॥
पादाङ्गुष्ठोपमानं हि तस्या नैव लभेत यत् । एतासां तव नारीणां मुख किं स्मयसे हि तत् ? ॥ १९ ॥
इति राग समुत्पाद्य द्रौपद्यां रङ्गकृन्मुनिः । माञ्जिष्ठरागवत्तीव्र यथास्थानं मुदा ययौ ॥ २० ॥
पद्मनाभोऽथ तां लिप्सुरुपायान् चिन्तयन् वहून् । तत्कार्यसाधकं देवं सस्माराऽधोनिवासिनम् ॥ २१ ॥
तपसाऽऽराधयामास मित्रं पूर्वभवस्य तम् । सोऽप्याजगाम निर्व्याजप्रेमस्थेमानमावहन् ॥ २२ ॥
प्रत्यक्षतस्तमूचेऽथ कार्यं मद्योग्यमादिश । तमूचे पद्मनाभस्तु कृष्णामत्र समानय ॥ २३ ॥

१ गर्वम् ।

स ऊचे मेदृशं वादीर्यत् सा स्त्रीरत्नमेव न । सतीरत्नमपि ख्याता तत्त्वं मा क्लेशभाग् भव ॥ २४ ॥
तथाऽपि स्मरभूताऽऽत्तः स ऊचे वार्तयाऽनया । तव किं किं तु तामत्राऽऽनयस्वाऽन्यच्च मा वद ॥ २५ ॥
ततः स्वर्गपूरं गत्वा हस्तिनापुरनामकम् । अपहृत्य स पाञ्चालीं क्षणात् पद्माय चोऽऽर्पयत् ॥ २६ ॥
प्रबुद्धा द्रौपदी तत्र पश्यन्ती न निजां स्थितिम् । चिन्तयामास मनसा किं स्वप्नो वेन्द्रजालकम् ? ॥ २७ ॥
विभ्यन्मृगीदृशं तां चागत्य पद्मोऽब्रवीदिति । मा भैषीः सुभ्रु ! मयका नीताऽसि त्वं त्वदर्थिना ॥ २८ ॥
अयं हि धातकीखण्डो नाम द्वीपो द्वितीयकः । कपिलो वासुदेवोऽत्र पद्मोऽहं तस्य सेवकः ॥ २९ ॥
पुरीयममरकङ्का द्वितीयेवाऽमरावती । इदं देवि ! ममोद्यानं समृद्ध्या नन्दनातिगम् ॥ ३० ॥
मुनिसुव्रतनामाऽस्ति द्वाविंशोऽर्हन् सुरार्चितः । रमस्व तन्मया सार्द्धं कुर्वती धर्ममार्हतम् ॥ ३१ ॥
त्वद्रूपसंपदं श्रुत्वा विश्वस्त्रैणातिगां मया । सुरेण पूर्वमित्रेणाऽऽनीताऽसि मा भयं कृथाः ॥ ३२ ॥
अहं दासोऽस्मि ते देवि ! दास्यः सन्ति मम स्त्रियः । अमूः सर्वा अपि स्वाम्यं[1] तत्त्वं कुरु चिरं मयि ॥ ३३ ॥
पञ्चभिः पाण्डवैर्मूर्खैर्जानेऽहं त्वं कदर्थिता । एकः परं पतिर्भव्यो वनितायाः क्षितेरपि ॥ ३४ ॥
त्वं मदेकपतिर्भूत्वा भुङ्क्ष्व भोगांश्चिरं मया । विमर्शं मा कृथा देवि ! कामो न क्षमते मनाक् ॥ ३५ ॥

1 स्वामित्वम् ।

श्रुत्वैतत् कर्णकटुकं वचः पद्मस्य पाण्डवी । अचिन्तयद् ध्रुवं जातं व्यसनं पूर्वकर्मतः ॥ ३६ ॥
आगते व्यसने श्रेयान् कालक्षेपोऽयमर्हति । कालक्षेपमतः कुर्वे पश्चाद्भव्यं भविष्यति ॥ ३७ ॥
अथोत्पन्नमतिः कृष्णा तमुवाच महामतिः । नाऽयं कुलवधूधर्मो यदन्यं भोक्तुमिच्छति ॥ ३८ ॥
तथाऽपि यदि मासान्तः शुद्धये मम नैष्यति । कश्चित् स्वजनवर्गस्तत्त्वदीयाऽस्म्येव नान्यथा ॥ ३९ ॥
मया सह बलात्कारं करिष्यस्यधुना यदि । तन्मनां मां हि मन्यस्व तर्हि तं मयि मा कृथाः ॥ ४० ॥
पद्मोऽपि चिन्तयामास शीघ्र गन्ता द्विपसकः । अनन्तरं ममाऽस्त्येषा मासाचर्हिं बलेन किम् ? ॥ ४१ ॥
क आयास्यति तीर्त्वाऽत्र द्विलक्षयोजनप्रमम् । समुद्रं लवणं नाम विमृश्येति स्वचेतसा ? ॥ ४२ ॥
ओमिति प्रतिपेदानो गतवान् पर्षदं निजाम् । मासान्तर्यदि नागन्ता शुद्धये मम कश्चन ॥ ४३ ॥
नैव भोक्ष्ये तदा श्रेयो ममाऽस्तु मरणं ध्रुवम् । इति प्रतिज्ञामाधाय स्थिता तत्र तपस्विनी ॥ ४४ ॥
जपन्ती पाण्डवान् पञ्च तथैव परमेष्ठिनः । आचामाम्लानि दधती कृष्णा व्रतमपालयत् ॥ ४५ ॥
अथ प्रभाते पञ्चाऽपि पाण्डवाः शयनीयकम् । द्रौपद्या रिक्तकं दृष्ट्वा क गतेति व्यचिन्तयन् ॥ ४६ ॥
अथ शुद्धिं न ते प्रापुश्चिन्ताकुलितचेतसः । पुरे परिसरे चाऽपि वने क्रीडागिरावपि ॥ ४७ ॥
तदा स्वा मातर प्रेष्य कृष्णाय तद् व्यजिज्ञपन् । सोऽपि शुद्धिपरो जातः परं नैवाऽऽप तां कचित् ॥ ४८ ॥
विलक्षवदनो भूत्वा यावत्तस्थौ स्वपर्षदि । तावत् कलिप्रियस्तत्राऽऽययौ सान्वर्थनामभृत् ॥ ४९ ॥

कृष्णादिकृतसन्मानो दत्तासन उपाविशत् । पृच्छति स्मैष जानानोऽप्यजानान इव ध्रुवम् ॥ ५० ॥
व्यापादिते जरासन्धे भरतार्द्धभुजस्तव । का चिन्ता पुनरुत्पन्ना दृश्यसे येन दुःखितः ॥ ५१ ॥
उवाच कृष्णो देवर्षे ! दृष्टा क्वचन नीवृति । द्रौपदी भ्रमता स्वैरं पाण्डवानां वधूवरा ॥ ५२ ॥
तदोवाच स देवर्षिः स्मितस्तबकिताधरः । पारेऽब्धि घातकीखण्डेऽमरकङ्कापुरीमगाम् ॥ ५३ ॥
पद्मस्य तत्र नृपतेर्गृहोद्याने मनोरमे । पाञ्चालीमहमद्राक्षं पाञ्चालीमिव निश्चलाम् ॥ ५४ ॥
इति वार्त्ताङ्कुरं दत्त्वा स चोड्डीय ययौ क्वचित् । कृष्णेन ज्ञातमेतस्यैतत्कृत्यं वर्तते ध्रुवम् ॥ ५५ ॥
कृष्णः प्रमुदितो भूत्वाऽज्ञापयत् पाण्डवान् प्रति । कुन्तीमुखेन तत् सर्वं विज्ञा यत्र प्रमादिनः ॥ ५६ ॥
पाण्डवैः कृतसङ्केतः प्रचचाल ससैन्यकः । जगाम मागधं तीर्थं प्राच्यनीराधिरोधसि ॥ ५७ ॥
लवणं नीराधिं दृष्ट्वा पाण्डवाः कृष्णमूचिरे । असावब्धिः कथं गम्यस्त्वया बलवताऽपि हि ? ॥ ५८ ॥
स ऊचे तिष्ठताऽत्रैव यूयं यावदपांनिधेः । अधिष्ठातृसुरं स्वस्थः सुस्थितं वशतां नये ॥ ५९ ॥
इत्युक्त्वा तपसा कृष्णोऽष्टमेनाऽब्रह्मवर्जकः । देवमाराधयामास सुस्थितं ध्यानसुस्थितः ॥ ६० ॥
आविर्भूय सुरोऽवोचन्मद्योग्यं कार्यमादिश । उवाच कृष्णो यास्यामि घातकीखण्डभारते ॥ ६१ ॥

१ देशे । २ पुत्तलिकाम् । ३ विद्वांसः ।

पुरीममरकङ्कायामानेतुं नित्ययौवनाम् । पद्मनाभहृतां सद्यस्तत्त्वं-कुरु सहायताम् ॥ ६२ ॥
उवाच सुस्थितो देवः कृष्णं प्रति स्मितं सृजन् । कः प्रयासः कुठारस्य काशकर्तनकर्मणि ॥ ६३ ॥
तिष्ठन्तु यूयमत्रैव तामानेष्यामि संप्रति । सुरेणैवाऽर्पिता तस्य भजता मैत्र्यमद्भुतम् ॥ ६४ ॥
तथैवाऽहं समानेष्ये गन्तुं तत्र स्रुतं कुरु । उवाच कृष्णश्छलकृत्र भवामि कदाप्यहम् ॥ ६५ ॥
तेन छलपरेणाऽहं छलितोऽस्मि न तादृशः । अस्म्यहं तेन गत्वा तं विजित्य समराङ्गणे ॥ ६६ ॥
आनेष्यामि ध्रुवं कृष्णामिति श्रेयस्करं मम । एतद्-यशः स्थिरस्थायि शास्त्रे मम भविष्यति ॥ ६७ ॥
ततश्च पद्मथानन्तः समुद्रमार्गदानतः । प्रासान् कुरु सुराधीश । कृतेऽस्मिन्-सकलं कृतम् ॥ ६८ ॥
सुस्थितोऽपि तथा चक्रे-क्षणाद् मानससाधनः । सपाण्डवो-विष्णुरपि ययौ पद्मपुरीं ततः ॥ ६९ ॥
वसन्ति स्म तदुद्याने पञ्चापि स्मयपर्वताः । मुदिता भोजनं चक्रुर्भोज्यैर्विविधभङ्गिभिः ॥ ७० ॥
कृष्णो लेखं समर्प्याऽथ प्रैषीद्दारुकसारथिम् । ययौ स त्वरितं तत्र स्वाम्याज्ञा हि बलीयसी ॥ ७१ ॥
पादपीठं समाक्रम्य पादेन स तरस्विना । प्रासाग्रेणाऽर्पयल्लेखं मुखतश्चाऽब्रवीदिति ॥ ७२ ॥
आनीताऽस्ति प्रिया पाप ! पाण्डवानां दुरात्मना । द्रौपदी बिभ्रती नाम सतीव्रतमहाघना ॥ ७३ ॥
तस्याः कृते समायाता वासुदेवेन ते सह । तां समर्पय मार्गेण ऋजुना जीवितप्रिय ! ॥ ७४ ॥

१ प्रासो नाम शस्त्रविशेष ।

न चेद्भव त्वं युद्धाय सज्जो मृत्युविलोकित ! । तांश्च षडपि जानीहि सर्वेभ्योऽपि महाबलान् ॥ ७५ ॥
भाले भृकुटिमारोप्य पद्मोऽवादीन्महाबलः । अरे के पाण्डवाः सन्ति किं मदीयाऽश्वपालकाः ॥ ७६ ॥
अरे कोऽस्ति स कृष्णस्ते कृष्णः खड्गोऽस्ति मत्करे । कृष्णात्कृष्णं हनिष्यामि सुखं भोक्ष्यामि पाण्डवीम् ॥७७॥
दूतोऽस्ति तदवध्योऽस्ति जीवन् गच्छ ततोऽधुना । इत्युक्त्वाऽदापयत् तस्य भृत्यैः स गलहस्तकान् ॥ ७८ ॥
इत्थं तिरस्कृतस्तेनाऽऽगत्याऽऽख्यत् तस्य चेष्टितम् । पाण्डवैः सह कृष्णाय दारुकः कोपकम्पवान् ॥ ७९ ॥
विमर्श कुरुते यावत् पाण्डवैः सह दैत्यहा । तावत् पद्मः पद्मसंख्यैः सैन्यैः सह समाययौ ॥ ८० ॥
दृष्ट्वा तं पद्ममायातं जगादेति हरिर्हसन् । पद्मेन भूभुजा सार्धं युध्यध्वं यात पाण्डवाः ॥ ८१ ॥
तिष्ठताऽत्र न चेद् यूयमहमेको निहन्मि तम् । जगदुः पाण्डवाः कृष्णमस्मद्युद्धं विलोकय ॥ ८२ ॥
योत्स्यामहे वयं तेन त्वयि सभ्ये विलोकिनि । गच्छन्तः पाण्डवाः प्रोचू राजा पद्मोऽद्य वा वयम् ॥ ८३ ॥
कृतप्रतिज्ञाः पञ्चेति पाण्डवा अभ्यषेणयन् । पद्मसैन्यैर्मिलन्ति स्म युध्यन्ते स्म च गर्विताः ॥ ८४ ॥
बलवत्पद्मसामन्तैर्युध्यमानाः शराशरि । खड्गाखड्गि चिरं कृत्वा बलवन्तोऽपि हारिताः ॥ ८५ ॥
नश्यन्त आगताश्चक्रुः शरणं ते जनार्दनम् । रक्ष रक्षेति जल्पन्तः कृष्णपार्श्वे उपाविशन् ॥ ८६ ॥
कृष्णोऽथोचे मया ज्ञातं भोः ! पाण्डुतनया यदा । गच्छन्तः प्रथमं प्रोचू राजा पद्म इति द्रुतम् ॥ ८७ ॥
पराभूताः किलैष्यन्ति वचनच्छलिता अमी । अथ तिष्ठन्तु पश्यन्तु मद्बलं रथरक्षिणः ॥ ८८ ॥

राजाऽहमेव नैवायं पद्मो मे दासकर्मकृत् । इति ब्रुवाणः संनह्य चचाल चलिताचलः ॥ ८९ ॥
पाञ्चजन्यं महानादं दध्मौ शङ्खं महाबलः । बलत्रिभागः पद्मस्याऽत्रुटन् नादाऽसहस्ततः ॥ ९० ॥
शार्ङ्गं शार्ङ्गी करे कृत्वा ज्यारूढमकरोत् पुनः । टङ्कारशब्दान् अकरोद् दिशो बधिरयन् समाः ॥ ९१ ॥
तेभ्योऽपि च तृतीयोंऽशोऽनशत् तस्य बलस्य हि । वातादिव तुषराशिर्वह्नेरिव रसाधिराट् ॥ ९२ ॥
कृष्णाऽग्रे स्थातुमसहः सन् पद्मः स्वां पुरीं ययौ । पुनः पत्युर्नवोढेव गृहं पित्र्य रताऽसहा ॥ ९३ ॥
बलविभागशेषोऽथ पद्मः स्थातुमनीश्वरः । लोहार्गलसनाथानि पिदधौ गोपुराणि तत् ॥ ९४ ॥
क्रोधाऽग्निना ज्वलन् कृष्णो दन्तैरोष्ठं दशन्-धुवन् । उत्ततार रथात् सद्योऽधावत् पदातिरेव सः ॥ ९५ ॥
नरसिंहवपुर्जज्ञे समुद्घातेन तत्क्षणम् । व्यात्ताननश्चतुर्दंष्ट्रो भूरिभीरुभयकरः ॥ ९६ ॥
प्राकारं पादघातेन चूर्णयामास सोऽखिलम् । जीर्णानीव हि वासांसि कपाटान् खण्डशोऽकरोत् ॥ ९७ ॥
बभञ्ज पादघातेन महान्त्यपि गृहाणि सः । क रे ! पद्म ! क रे पद्म ! इत्युवाच मुहुर्मुहुः ॥ ९८ ॥
अन्तः प्रविश्य प्रययौ पद्मसौध बलादपि । स किंकर्तव्यतामूढो द्रौपद्याः शरण गतः ॥ ९९ ॥
रक्ष रक्षेति तां प्रोचे दास मां शरणागतम् । कुपिते नरसिंहेऽस्मिन् जीवन्नपि मृतोऽस्मि यत् ॥ १०० ॥
द्रौपद्यूचे गृहाण त्व स्त्रीवेषं मां पुरस्कुरु । पादयोः पत कृष्णस्य यद्यसि त्वं जिजीविषुः ॥ १०१ ॥
स्त्रीवेषं समुपादाय द्रौपदीं स पुरोऽकरोत् । कम्पमानवपुर्बाढं ननाम हरये भृशम् ॥ १०२ ॥

मा भैषीः पद्मनाभि त्वं मत्तः स्त्रीणां भयं न हि । बाला-ऽबला-शस्त्रमुचो घ्नन्ति किं वीरसूनवः ? ॥ १०३ ॥
याहि याहि निजं राज्यं भुङ्क्ष्वेदृक् कर्म मा कृथाः । पुनस्त्वामिति तं प्रोच्य विससर्ज पुरीं निजाम् ॥ १०४ ॥
द्रौपदीमर्पयामास पाण्डवानां बलानुजः । रथारूढः प्रतस्थेऽथ पाण्डवैः सह सत्वरम् ॥ १०५ ॥
चम्पापुर्यां तदा तत्रोद्यानेऽर्हन् समवासरत् । कपिलो वासुदेवस्तं वन्दनाय समाययौ ॥ १०६ ॥
शृण्वानोऽस्ति सभासीनो देशनाममृतस्रवाम् । कृष्णशङ्खध्वनिस्तत्र प्रससार महाबलः ॥ १०७ ॥
पाञ्चजन्यध्वनिं श्रुत्वा विष्णुर्व्याकुलमानसः । पृच्छति स्म प्रभुं कस्य ध्वनिः शाङ्खो विजृम्भते ॥ १०८ ॥
मुनिसुव्रततीर्थेशः प्रोचे वृत्तान्तमादितः । द्रौपदी-पद्म-कृष्णानां पाण्डवानां च विस्तरात् ॥ १०९ ॥
कपिलः प्रोचिवान् स्वामिन् ! पूजयामि गृहाऽऽगतम् । विष्णुमभ्यागतं प्रोचे भगवानपि तं प्रति ॥ ११० ॥
आगच्छेत् कर्हिचिद् विष्णुः कार्याय महते परम् । द्वौ विष्णू मिलतो नैव मिथो निश्चय एष हि ॥ १११ ॥
इत्युक्तोऽपि समुत्तस्थौ विष्णुरुत्सुकमानसः । सिद्ध्यसिद्धी न जानन्ति कार्यस्योत्कण्ठुला यतः ॥ ११२ ॥
समागत्य तटेऽम्भोधेः मध्येऽम्बुधि ददर्श च । रथध्वजान् महावातप्रेरितान् रुचिरच्छवीन् ॥ ११३ ॥
शङ्खमापूर्य बलतो ज्ञापयामासिवानिति । मिलित्वाऽऽयान्तु भोः पूज्याः ! पूजयाम्यतिथीन् यतः ॥ ११४ ॥
वलध्वं त्वरितं तेन कृष्णोऽप्यज्ञापयत्ततः । पाञ्चजन्याऽब्जनादेन गृहागमनसत्वरः ॥ ११५ ॥

१ अब्जः—शङ्खः ।

मध्येऽब्धि दूरमायाता गृहायोत्सुकमानसाः । विलम्बं क्षमते नैव वचसा पूजितास्त्वया ॥ ११६ ॥
ततो न वाच्यमत्रार्थे श्रुत्वेति ध्वनिमुद्धतम् । कपिलो ववले विष्णुः ययौ कङ्कापुरीं प्रति ॥ ११७ ॥
तर्जयामासिवान् पद्मं रे दुरात्मन् ! कृतं त्वया । परस्त्रीहरण पापं लोकद्वयविघातकम् ॥ ११८ ॥
इति सन्तर्ज्य वचसा देशाटनमदाद्धरिः । पद्माय स्थापयामास राज्ये तत्सुतमादिमम् ॥ ११९ ॥
कृष्णोऽप्यम्बुधिमुत्तीर्य मोचिवान् पाण्डवानिति । अहं सुस्थितमापृच्छ्याऽऽगमिष्यामि कृतत्वरम् ॥ १२० ॥
तावत् त्रिश्रोतसं यूयमतीत मदनुज्ञया । ततस्ते वाहनारूढा गङ्गापरतटं ययुः ॥ १२१ ॥
सिद्धकार्या मुदं प्राप्ताः ततस्तेऽथ मिथोऽवदन् । स्थाप्यतां नावमत्रैवाऽऽलोक्यते स्थाम शार्ङ्गिणः ॥ १२२ ॥
विना नावं कथं गङ्गामुत्तरिष्यति बाहुतः । नावं सङ्गोप्य तत्स्थुः निलीय तटिनीतटे ॥ १२३ ॥
अथ सुस्थितमापृच्छ्य कृतकृत्यो जनार्दनः । सरिद्वरातटे तिष्ठन् नावं नैव ददर्श सः ॥ १२४ ॥
दोष्णैकेन हि सहय गृहीत्वा स्पन्दन निजम् । अन्येन दोष्णा सरितः प्रवाहं तरति स्म सः ॥ १२५ ॥
मध्येप्रवाहं गङ्गायाः श्रान्तस्सन्नित्यचिन्तयत् । अहो ! पाण्डुसुता एते मत्तोऽपि बलिनः किमु ॥ १२६ ॥
विनाऽपि नावमुत्तीर्णा गङ्गां भुजबलादहो ? । अथ त्रिपथगा देवी दृष्ट्वा श्रान्तं तलं ददौ ॥ १२७ ॥
तावत् क्षणं च विश्रम्य गङ्गामुत्तरति स्म सः । पप्रच्छ पाण्डवान् कृष्णो गङ्गोत्तीर्णा कथं न्विति ? ॥ १२८ ॥

१ गहाम् । २ हस्तेन ।

हसन्तः प्रोचिरे ते च नावाऽस्माभिरिति प्रभो ! । प्रोचेऽजः[1] प्रेषिता किं नो नौरेषा धारिता कथम् ? ॥ १२९ ॥
बलं परीक्षितुं स्वामिन् ! तवेति प्रेषिता न हि । कृष्णो गाढरुषा रक्तलोचनः प्रोचिवानिति ॥ १३० ॥
अहो ! बलं नहि ज्ञातं पद्मनाभजयेऽपि किम् । समुद्रोत्तरणेनाऽपि ज्ञाप्यते स्थाम साम्प्रतम् ॥ १३१ ॥
ब्रुवन्निति ललौ हस्ते लोहदण्डं रुषाऽरुणः । चूर्णयामास पञ्चाऽपि रथास्तेन क्षणादपि ॥ १३२ ॥
न स्थातव्यं मदीयायां भूमाविति समादिशत् । वासयामास च पुरं तत्रैव रथमर्दनम् ॥ १३३ ॥
स्वेन सैन्येन संभूय दुन्दुभिध्वानपूर्वकम् । भूपदत्तोपदां गृह्णन् प्राप स्वां द्वारिकापुरम् ॥ १३४ ॥
कुन्त्यप्यूचेऽथ तान् पुत्रान् यूयमेवाऽपराधिनः । अप्रस्तावे कृतं हास्यं पश्चात्तापाय यद् भवेत् ॥ १३५ ॥
कृतं युष्माभिरेवैतदनौचित्यं महत्तरम् । कृष्णेन स्वामिना सार्द्धं तत् प्रसाद्यो[2] मयाऽधुना ॥ १३६ ॥
इत्युक्त्वा प्रययौ कुन्ती द्वारिकायां रथस्थिता । कृष्णोऽभिमुखयानेन पुरीं प्रावेशयन्निजाम् ॥ १३७ ॥
भोजनादिक्रियां कृत्वा स्वस्थीभूय पृथाऽवदत् । त्वया निर्वासिताः पुत्राः क्व यान्तु स्थानविह्वलाः ॥ १३८ ॥
भरतार्द्धमशेषं तु त्वयैवाऽस्ति वशीकृतम् । स्थानमर्पय किञ्चित्तद्यत्र तिष्ठन्ति सूनवः ॥ १३९ ॥
उवाच कृष्णो प्राच्यब्धेः तटे यान्तु नवां पुरम् । संस्थाप्य मथुरां पाण्डुपूर्वां तत्र वसन्तु ते ॥ १४० ॥
पृथा[3]ऽऽगत्य स्वसूनुभ्य आचख्यौ कृष्णशासनम् । ते चक्रुस्तत्तथैवाऽऽशु स्वाम्याज्ञा यद् बलीयसी ॥ १४१ ॥

१ अजः-कृष्णः । २ प्रसन्नतां नेयः । ३ कुन्ती ।

हस्तिनापुरराज्यं तु ददौ जामेयसूनवे । अभिमन्युतनुजाय सोऽपि राज्यमपालयत् ॥ १४२ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु–
लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललितं चकार,
सर्गस्त्रयोदश इतीह जगाम पूर्तिम् ॥ १४३ ॥

इति श्रीप्रद्युम्नचरिते महाकाव्ये द्रौपदीहरण-श्रीकृष्ण-पाण्डवाऽमरकङ्कागमन-द्रौपदीसमानयन-पाण्डवदेशाटन-मदान-द्वारिकासमागमनवर्णनो नाम त्रयोदशः सर्गः सम्पूर्णः ॥

# चतुर्दशः सर्गः



अथ नेमिर्विहारेण पावयन् पृथिवीतलम् । भास्वानिव गोसहस्रैः ययौ भद्दिलपूर्वराम् ॥ १ ॥
व्यवहारिशिरोरत्नं नागस्तत्र धनीश्वरः । प्रिया च सुलसा नाम्नी नाऽलसा धर्मकर्मणि ॥ २ ॥
तयोरासन् क्रमात् पुत्राः षडनुत्तरसम्पदः । द्वात्रिंशतं महेभ्यानां कन्यास्तेऽथ विवाहिताः ॥ ३ ॥
द्वात्रिंशद्भूमिकाऽऽवासे भुञ्जन्ति स्म यथासुखम् । भोगांस्ताभिश्चिरं देवा देवीभिरिव मोहिताः ॥ ४ ॥
तेऽथ नेमिगिरं श्रुत्वा प्रव्रज्यां जगृहुर्मुदा । द्वादशाङ्गधरा जाताः क्रमात् सद्गुरुसेवया ॥ ५ ॥
तान् प्रव्राज्य जिनो नेमिः द्वारिकापुरमाययौ । सहस्राऽऽम्रवणे तत्रोद्याने च समवासरत् ॥ ६ ॥
षट् च ते सुलसापुत्राः सततं षष्ठकारिणः । त्रिधा युगलिनो जाता भिक्षायै प्राविशन् पुरम् ॥ ७ ॥
तत्रानीकयशो-ऽनन्तसेनौ भ्रामररोचिषौ[1] । देवकीगृहमायातौ कृष्णावेवाऽपरौ किमु ॥ ८ ॥
दृष्ट्वा प्रमुदितोत्तस्थौ दानायाऽच्युतवीरसुः । तौ प्रत्यलाभयद् भक्त्या मोदकैः सिंहकेशरैः ॥ ९ ॥
धर्मलाभाऽऽशिषं दत्त्वा निवृत्तौ तौ मुनीश्वरौ । अजितसेन-निहतशत्रू अथ समागतौ ॥ १० ॥

१ भ्रमरवर्णौ ।

भक्त्या तावपि वन्दित्वा जलवन्नम्बुदत्विषौ । सा प्रत्यलाभयत् प्रेम्णा निवृत्तौ तावपि द्रुतम् ॥ ११ ॥
ततो देवयशा नाम्ना शत्रुसेनस्तथाऽपरः । समागतौ नतौ भक्त्या मोदकैस्तोषितौ तथा ॥ १२ ॥
कृताञ्जलिरपृच्छच्च भूयो भूयोऽपि मद्गृहे । दिग्मोहतः किमायातौ युवां पारणहेतवे ॥ १३ ॥
यद्वा ममैव मोहोऽयं जातः सदृशदर्शनात् । अथवा द्वारिकापुर्यां स्वर्गपुर्यामिवर्द्धितः ॥ १४ ॥
लभन्ते भक्त-पानादि साधवो नैव किं प्रभो ! । इति संशयदोलायां चित्तबालोऽतिखेलति ॥ १५ ॥
ऊचतुस्तौ मुनी तां च न दिग्मोहोऽस्ति नः शुभे ! । किन्तु तवैव मोहोऽयमस्मास्वतिसधर्मिषु ॥ १६ ॥
वय षड् भद्दिलपुरवास्तव्याः सोदरा अपि । सुलसा-नागयोः पुत्राः प्रेमपात्रं परस्परम् ॥ १७ ॥
तत्राऽऽगतप्रभोः पार्श्वे धर्मं श्रुत्वा किलाऽऽर्हतम् । पर वैराग्यमापन्नाः तपस्यां आहितास्ततः ॥ १८ ॥
ततोऽथ प्रभुणा सार्द्धमिहाऽऽयाता मनस्विनि ! । षष्ठपारणके चाऽऽज्ञां प्राप्य पुर्यां समागताः ॥ १९ ॥
त्रिभिर्युगलकैर्भूत्वा षडपि भ्रातरो वयम् । एवं चरामो भिक्षार्थं भिक्षा तु सुलभाऽस्ति हि ॥ २० ॥
दध्याविति हरेर्माता मुनिवाक्यप्रमोदिता । कृष्णस्य सदृशा एते कथं सन्ति प्रमोददाः ॥ २१ ॥
सदृशानि भवन्त्येवं फलान्यपि तरोर्न हि । तत् किं मम सुता नाऽमी भवन्ति हरिसोदराः ॥ २२ ॥
अतिमुक्तमुनिः प्राह पूर्वं मां प्रति तथ्यवाक् । भाविष्यसि महाभागे ! जीवदष्टसुतप्रसूः ॥ २३ ॥

१ सजलमेघवर्णौ ।

न मिथ्यावचनं तस्य भवति स्म महामुनेः । आः ! किं नेमिजिनाऽधीशे सति सन्देहसङ्करः ॥ २४ ॥
गत्वा पृच्छामि तान् नेमिं संशयाऽऽलितमोरविम् । इति ध्यात्वा च समवसरणे सा समाययौ ॥ २५ ॥
भावं विज्ञाय देवक्याः श्रीमान् नेमिरुवाच च । तवाऽमून् षड्सुतान् पश्य हर्षं प्राप्नुहि देवकि ! ॥ २६ ॥
सुलसायै ददौ तुष्टो नैगमेषीसुरोऽर्चितः । निन्दूभावजुषे तस्यै त्वया जातान् क्रमादमून् ॥ २७ ॥
मृतगर्भास्तया जातान् पार्श्वे ते मुञ्चति स्म सः । कंसोऽवधीन्मुग्धबुद्धिः मुधा गर्वकदर्थितः ॥ २८ ॥
तत् श्रुत्वा देवकी हर्षाद् गत्वाऽवन्दत तान् भृशम् । भुवं प्रस्नवधाराभिः सिषेच स्तिमिता स्थिता ॥ २९ ॥
तान् पश्यन्ती क्षणाद्दध्यौ देवकी निजचेतसि । सप्त जाता मम पुत्राः परं नैकोऽपि लालितः ॥ ३० ॥
मा मा मा मेति कुर्वश्चोत्सङ्गे नैवोपवेशितः । गर्भभावभवं दुःखं सोढं हि मयका भृशम् ॥ ३१ ॥
तदहं मन्दभाग्याऽस्मि निन्दन्तीमिति तीर्थकृत् । सुधासोदरया वाचोवाच वाणीबृहस्पतिः ॥ ३२ ॥
देवि ! मा ताम्य कर्म स्वं कृतं पूर्वभवे त्वया । स्मर यत् सप्तरत्नानि सपत्न्यास्त्वमपाहरः ॥ ३३ ॥
तस्या गाढं प्रकुर्वत्याः दुःखं रत्नापहारजम् । अर्पितं त्वयका पश्चाद् रत्नमेकं तु कष्टतः ॥ ३४ ॥
तेन दुष्कर्मणा प्राप्तं दुःखमेतन्न संशयः । इति श्रुत्वा प्रभोर्वाचं पूर्वं कर्म निनिन्द सा ॥ ३५ ॥
नत्वा प्रभुं च षड् पुत्रान् मोदमाना गृहं ययौ । पुत्राऽभिलाषिणी जाता दुःखभाक् पुनरन्यदा ॥ ३६ ॥
प्रभाते चरणौ नन्तुमगाद्विष्णुर्महर्द्धिमान् । पप्रच्छ दुःखहेतुं तां जगादाऽश्रुविमिश्रदृक् ॥ ३७ ॥

वत्साऽमी भ्रातरः षट् ते पुरे भद्दिलसंज्ञके । सुलसा-नागयोर्धाम्नि वर्द्धन्ते स्म ममाऽऽत्मजाः ॥ ३८ ॥
त्वं चाऽपि गोकुले नन्दगृहेऽवर्द्धिष्ट गोपितः । न मया लालितस्तेन पुत्र एकोऽपि वः सताम् ॥ ३९ ॥
तेनैकमहमिच्छामि पुत्रं क्रीडनकौतुकात् । चुम्बन्ती जिह्वया वत्स धन्या सा सौरभेय्यपि ॥ ४० ॥
भाग्यधाम जगौ विष्णुः मातः ! मा ताम्य किञ्चन । तथा यतिष्ये त्वरितं भ्रातृलालनकौतुकी ॥ ४१ ॥
गत्वा पौषधिको भूत्वाऽऽराधयामास ब्रह्मभाक् । देवं वासवसेनान्यं संज्ञया नैगमेषिणम् ॥ ४२ ॥
उपवासैः त्रिभिरागाद् ज्ञात्वा ज्ञानेन चोचिवान् । वरं वृणुष्व हे मित्र ! पूरयामि तवेप्सितम् ॥ ४३ ॥
उवाच कृष्णो देवक्यां भ्रातरं देहि सुन्दरम् । देवोऽवक् सोदरो भावी देवक्या उदरे तव ॥ ४४ ॥
वयःस्थ एव वैराग्यात्-पर स प्रव्राजिष्यति । इत्येवाऽस्तु हरिः प्रोक्तो ययौ देवो यथाऽऽगतम् ॥ ४५ ॥
कियद्भिर्दिवसैश्चाऽनुस्वर्गात् च्युत्वा सुधाशनः । देवक्याः कुक्षिमायासीन्मराल इव मानसम् ॥ ४६ ॥
समयेऽसूत सा देवी माणिक्यमिव कान्तिमत् । पृथ्वीव सूनुमन्यूनगुणमाधिविवर्जिता ॥ ४७ ॥
नाम्ना गजसुकुमालं मूर्त्या कृष्णमिवाऽपरम् । प्रमुदात् पालयामास लालयामास देवकी ॥ ४८ ॥
अङ्कादङ्कं गृह्यमाणो वसुदेवादिकैर्भृशम् । नेत्रोत्सवाय सर्वेषां द्वितीयाचन्द्रमा इव ॥ ४९ ॥
आसीत् क्रमाद् वर्द्धमानः पादचङ्क्रमणक्षमः । पितृ-मातृ-सोदराणामेधते स्म मनोरथैः ॥ ५० ॥
द्रुमस्य पृथ्वीनाथस्य सुतां नाम प्रभावतीम् । उद्यौवनो महाबाहुः कृष्णादेशादुपायत ॥ ५१ ॥

अनिच्छन्नपि कृष्णेन सोमशर्मद्विजन्मनः । सोमां पुत्रीं क्षत्रियाजां महर्द्ध्या परिणायितः ॥ ५२ ॥
अन्यदा समवासार्षीदचिरान्नेमितीर्थकृत् । सहस्राम्रवणे चक्रुः सुराः निजनिजोचितम् ॥ ५३ ॥
कृष्णो महर्द्ध्या तत्राऽगादनुजेन सहाऽमुना । अश्रौषीद्देशनां सर्वां सुधादेश्यां स्वकर्णयोः ॥ ५४ ॥
चरमो देवकीपुत्रः प्रतिबोधमवाप सः । मातुः भ्रातुः पितुः प्राप्य निर्देशं प्राव्रजद् द्रुतम् ॥ ५५ ॥
सन्ध्यायां स्वामिनं पृष्ट्वा स्मशानं गतवान् मुनिः । कायोत्सर्गधरो भूत्वा नासाऽग्रन्यस्तलोचनः ॥ ५६ ॥
इन्धनार्थं गतेनाऽथ ददृशे सोमशर्मणा । प्रादुर्भूतकषायाऽग्निः वचोधूमान् ववर्ष सः ॥ ५७ ॥
पाखण्डिन् ! पाप ! पाखण्डचिकीर्श्चेदीदृशं यदि । मत्पुत्रिका वराकीयं बालरण्डेव किं कृता ॥ ५८ ॥
एतत् पापफलं प्राप्य याहि त्वं नरकाऽवनौ । इत्युक्त्वा स चितावह्निं घटखण्डेन मुक्तवान् ॥ ५९ ॥
जाज्वल्यमाने तेनाऽऽशु मूर्ध्नि ध्यानाच्चचाल न । कर्माऽष्टाऽपि ज्वलन्ति स्म शुक्लध्यानाऽग्निना क्षणात् ॥ ६० ॥
निर्दग्धाऽखिलकर्माऽपि निर्दग्धस्वशिरा अपि । अन्तकृत्त्वं मुनिः प्राप्याऽऽससाद पदमव्ययम् ॥ ६१ ॥
महत्योत्कण्ठया कृष्णः चचाल सपरिच्छदः । नेमिं च भ्रातरं नन्तुं महोत्साहो महाबली ॥ ६२ ॥
गच्छन् पथि ददर्शैकं वृद्धं विप्रं गतश्रियम् । एकामेकां च गृह्णानमिष्टकां मूर्ध्नि भूरिशः ॥ ६३ ॥
इत्थं कदर्थनापूर्वमेकां गृह्णान इष्टकाम् । इमाः सर्वाः कदा नेतेत्याप्तकारुण्यकोऽभवत् ॥ ६४ ॥
जग्राहैकां स्वयं कृष्णः इष्टकामिष्टकाचयात् । इत्थं सर्वेऽपि राजानः चक्रुश्चाऽशेषपत्तयः ॥ ६५ ॥

मुदितं तं द्विजं कृत्वा सहस्राम्रवणे ययौ । ननाम परया भक्त्या स्वामिनं नेमिनं हरिः ॥ ६६ ॥
पप्रच्छ नेमिं वन्दित्वा स्वामिन् ! भ्राता क्व मेऽनुजः । स्वाम्यप्याख्यद् गतो मोक्षमुपसर्गसहः स च ॥ ६७ ॥
श्रुत्वेति प्राप्तवान् मूर्च्छामतुच्छां लब्धसञ्ज्ञकः । विललाप चिरं मोहात् मोहो हि दुरतिक्रमः ॥ ६८ ॥
स्वाम्याख्यत् कृष्ण ! मा द्वेषं कुरु तद्वधकोपरि । शीघ्रं शिवगतौ भ्रातुः साहाय्यकृदभूद्यतः ॥ ६९ ॥
यथा स वृद्धभूदेवः साहाय्यं प्राप्य तावकम् । चिरेण साध्यं गेहस्य कार्यं सद्योऽकरोन्निजम् ॥ ७० ॥
पप्रच्छ कृष्णो भूयोऽपि स ज्ञातव्यः कथं मया ? । स्वाम्यूचे त्वां विशन्तं यो दृष्ट्वा स्याद् भृशमाकुलः ॥ ७१ ॥
सञ्जातहृदयक्षोभो म्रियते पापपूरितः । स ज्ञेयो भ्रातृहन्ता ते लब्धपापफलः स्वयम् ॥ ७२ ॥
ततो हरिः स्मशानेऽगादकरोदग्निसंस्कृतम् । भ्रातुर्देहस्य तस्याऽऽशु प्राविशच्च पुरीं निजाम् ॥ ७३ ॥
प्रविशन्तं हरिं दृष्ट्वा सोमोऽभूद् भृशमाकुलः । सञ्जातहृदयस्फोटो ममार नरकं गतः ॥ ७४ ॥
तथाजातं स तं दृष्ट्वा रज्वा कर्कशया भृशम् । बन्धयित्वा पदे गाढं श्वपचानां समार्पयत् ॥ ७५ ॥
पातकाऽऽख्यानपूर्वं ते भ्रामयन्तश्चतुष्पथे । चिक्षिपुः परिखागर्ते गृध्र-श्वानादिभक्षणम् ॥ ७६ ॥
तच्छोकजातवैराग्या बहवो यदवो ललुः । दीक्षां भवोच्छेदकरीं दशार्हा अपि तत्क्षणम् ॥ ७७ ॥
वसुदेवं विना सर्वे ललुः दिक्षां जिनान्तिके । शिवादेव्यपि जननी तथाऽन्ये हरिसूनवः ॥ ७८ ॥
राजीमती तथाऽन्याश्च यादव्यो यदुनन्दनाः । कन्योद्वाहेष्वकार्षीच्च प्रत्याख्यानं हरिस्तदा ॥ ७९ ॥

विहाय कनकवतीं रोहिणीं देवकीं तथा । मातरो बल-विष्णोश्च भ्रातरो बहवस्तथा ॥ ८० ॥
प्रव्रज्य साधनं चक्रुः परलोकस्य तेऽखिलाः । स्थितताया अपि गेहित्वे चिन्तयन्त्या भवस्थितिम् ॥ ८१ ॥
उत्पेदे कनकवत्याः केवलज्ञानमुज्ज्वलम् । स्वामिना ज्ञापितो देवैः चक्रे च महिमाऽद्भुतः ॥ ८२ ॥
देवाऽर्पितयतिवेषा प्रव्रज्यां स्वयमाददे । विहिताऽनशनं प्रान्ते मोक्षं कनकवत्यगात् ॥ ८३ ॥
नैषधी रामपौत्रोऽथ नाम्ना सागरचन्द्रकः । श्रावकत्वेऽपि वैराग्याद् बभूव प्रतिमाधरः ॥ ८४ ॥
अन्यदोपश्मशानं स कायोत्सर्गस्थितोऽभवत् । नभःसेनोऽथ तत्राऽगात् छिद्राऽन्वेषणतत्परः ॥ ८५ ॥
विजने तं विलोक्याऽथ जगाद स्फुरिताऽधरः । रे पाखण्डिन् ! किमारब्धं पाखण्डफलमाप्नुहि ॥ ८६ ॥
कमलामेलाहरणपापजन्माऽधुना ध्रुवम् । इत्युक्त्वा स मुमोचाऽग्निं मूर्ध्नि तस्योल्लसच्छिखम् ॥ ८७ ॥
मूर्द्धा जज्वाल न पुनः ध्यानं तस्य मनागपि । स्मृतपञ्चनमस्कारः सद्यः स त्रिदिवं ययौ ॥ ८८ ॥
अन्यदा च सभासीनोऽकरोदिन्द्रो गुणस्तुतिम् । गुणग्राह्यश्च कृष्णः स्याद् दोषान् मुक्त्वाऽखिलानपि ॥ ८९ ॥
तथा च कुरुते नैव नीचयुद्धं कदाचन । एको देवोऽश्रद्दधानो वचः एतत् समाययौ ॥ ९० ॥
विचक्रे सारमेयस्य कृष्णाऽङ्गस्य मृतस्य च । दुर्गन्धस्य पथि स्थस्य रूपं देवेन मायिना ॥ ९१ ॥
हरिणा गच्छता कर्तुं हयक्रीडां पुराद्बहिः । दृष्ट्वा तस्य शुनो रूपमूचे सर्वान् नृपान् प्रति ॥ ९२ ॥
शुनोऽस्य दन्तान् पश्यन्तु मौक्तिकानीव मालया । सूरस्तद्रूपमुज्झित्वा जहाराऽश्वं हरेस्ततः ॥ ९३ ॥

गच्छश्च सं जगादैवमहमश्वं हराम्यहो ? । यः कश्चनाऽपि योद्धाऽस्ति स आगच्छतु मत्पुरः ॥ ९४ ॥
जग्मुस्तमनु प्रद्युम्न-शाम्बाद्या हरिनन्दनाः । देवेन ते जिताः सर्वे कृष्णाऽऽस्यास्तत्र आययुः ॥ ९५ ॥
हयरत्नमथाऽऽरूढः कृष्णस्तं प्रत्यधावत । अरे क्व यासि हृत्वाऽश्वं स्वस्थो भव बली यदि ॥ ९६ ॥
उवाच देवस्तं स्मित्वा विजित्याऽश्वं गृहाण भोः ! । रत्नानि सन्ति नैकस्य किं तु स्युर्बलिनो हरे ! ॥ ९७ ॥
उवाच कृष्णोऽस्मि रथी तेनाऽपि त्वं रथी भव । अहं धन्वी भव त्वं च धन्वी युद्धाय मत्पुरः ॥ ९८ ॥
उवाच देवः साक्षेप रथाद्यैर्न प्रयोजनम् । युद्धमेकं करिष्यामि नोऽन्यत्र निपुणोऽस्म्यहम् ॥ ९९ ॥
नियुद्धमस्तु पृष्ठाभ्यामुभयोरपि सम्प्रति । कृष्ण ऊचे नीचयुद्धं कदाऽपि न कृतं मया ॥ १०० ॥
न करिष्येऽधुनाऽप्येतत् किमश्वेन प्रयोजनम् । राज्य यातु श्रियो यान्तु हया यान्तु सहस्रशः ॥ १०१ ॥
नाऽहं कृष्णः करोम्येतद् यदुवंशत्रपाकरम् । तेन त्वं याहि याह्यश्वं गृहाणाऽमुं मयाऽर्पितम् ॥ १०२ ॥
इति वाक्येन सन्तुष्टो देव ऊचे जनार्दनम् । शक्रप्रशंसा ते सत्या जाता मम परीक्षया ॥ १०३ ॥
वरं वृणु महाभाग ! चरित्रेणाऽमुना तव । तुष्टोऽस्मि न वृथा यत् स्याद् दर्शनं त्रिदिवौकसाम् ॥ १०४ ॥
उवाच कृष्णस्तं देव नगरी द्वारिका मम । रोगोपद्रवबहुला तत्प्रतीकारमादिश ॥ १०५ ॥
भेरीं समर्प्य यद् देवो दाशार्हं प्रत्युवाच च । षण्मासान्ते वादनीया पुर्यामस्यां दृढस्वनी ॥ १०६ ॥

१ दृढशब्दा ।

पुरातना गमिष्यन्ति रोगाः सर्वेऽपि ते पुरि । अग्रे च न भविष्यन्ति ह्यस्या नादप्रभावतः ॥ १०७ ॥
इत्युक्त्वाऽन्तर्दधे देवः कृष्णः साऽश्वोऽभ्यगात् पुरम् । अवादयत्ततो भेरीं पुंसा बलवताऽधिकम् ॥ १०८ ॥
रोगोच्छेदोऽभवत् पुर्यां वादितायां च तत्क्षणात् । न हि देववचो मिथ्या भवेत् सत्साधुवाक्यवत् ॥ १०९ ॥
भेरीप्रसिद्धिं सर्वत्र श्रुत्वा गाढज्वरार्दितः । कश्चिद्देशात् समागत्य भेरीपालमयाचत ॥ ११० ॥
गृहाण लक्षं प्रच्छन्नं भेरीखण्डं ममाऽर्पय । न भिनत्ति चतुष्कर्णो मन्त्रः खलु कदाऽपि हि ॥ १११ ॥
द्रव्यलुब्धो ददौ खण्डं पलमात्रं तदर्थिने । चन्दनेन स तत्स्थाने जतुना तामपूपुरत् ॥ ११२ ॥
द्रव्यलुब्धस्तथाऽन्यस्मै ददौ चाऽपूरयत्तथा । चन्दनच्छेदकन्थाऽभूत् सा भेरी तुच्छनादकृत् ॥ ११३ ॥
अन्यदाऽवादयत् कृष्णः तां भेरीं रोगनाशिनीम् । सभायामपि तन्नादो व्यानशे न मनागपि ॥ ११४ ॥
कृष्णः पप्रच्छ तत्पालं कथं भेरी ममेदृशी । ताडितो चाऽकथत् सत्यं तं पञ्चत्वमवापयत् ॥ ११५ ॥
देवमाराध्य तं भूयो भेरीमन्यामयाचत । दत्ताऽष्टमेन तुष्टेन रोगनाशोऽभवत् पुरि ॥ ११६ ॥
तथा च तत्र वैद्योऽस्ति आद्यो धन्वन्तरिः किल । वैतरणिः द्वितीयस्तु कृष्णाऽऽज्ञां प्राप्य तौ पुरि ॥ ११७ ॥
चिकित्सां कुरुतो नित्यं परं धन्वन्तरिर्नरान् । मांस-मद्यादिपापोपदेशं दत्ते स्म निर्दयः ॥ ११८ ॥
वैतरणिस्तु भीरुत्वात् यथायोग्यमुपादिशत् । कल्प्या-ऽकल्प्यविभागेन बहुसावद्यवर्जकः ॥ ११९ ॥
अन्यदा स्वामिनं कृष्णोऽपृच्छद्विराचिताञ्जलिः । वैद्यावेतौ भिन्नभावौ मृत्वा कुत्र गमिष्यतः ? ॥ १२० ॥

उवाच स्वाम्यभव्योऽयं नरक सप्तमं गमी । वैद्यो धन्वन्तरिर्नाम महासावद्यतत्परः ॥ १२१ ॥
वैद्यो वैतरणिर्नाम वन्ध्याचलवने कपिः । भावी युथपतिर्मत्तः तत्र स्वैरं विहारवान् ॥ १२२ ॥
तत्राऽन्यदा च सार्थेनाऽऽगमिष्यन्ति सुसाधवः । भग्नकण्टक एकस्तु मुनिः खञ्जो भविष्यति ॥ १२३ ॥
[1]मां मुक्त्वा यात सर्वेऽपि सार्थभ्रष्टा भविष्यथ । क्षुत्-तृपापीडिता यूयमन्यथा हि मरिष्यथ ॥ १२४ ॥
इत्यादि यतिना तेन बोधिताः क्षणदुःखिताः । तं छायास्थण्डिले मुक्त्वा यास्यन्ति यतयोऽखिलाः ॥ १२५ ॥
कपीशस्तत्र चागन्ता यूथेन परिवेष्टितः । स्मरिष्यति निजां जातिं साधुं दृष्ट्वा पुरातनीम् ॥ १२६ ॥
विशल्यामौषधिं पिष्ट्वा दन्तैः पादतलव्रणे । सद्यृष्य नीरुजं कर्ता स्मृतवैद्यकविधकः ॥ १२७ ॥
द्वारवत्यां पुराऽभूव नाम्ना वैतरणिर्मुने ! । लिखित्वा सोऽक्षराण्येवं ज्ञापयिष्यति युथराट् ॥ १२८ ॥
धर्मं श्रुत्वा मुनेस्तस्मात् प्रायं कृत्वा त्र्यहं कपिः । सहस्रारे सुरो भावी त्र्यहप्रायप्रभावतः ॥ १२९ ॥
प्रयुक्ताऽवधिको देवो द्रक्ष्यति प्रेमपूरितः । नमस्कारान् ददानं तं शवं च निजकं भुवि ॥ १३० ॥
तत्राऽऽगत्य मुनिं नत्वा वदिष्यति निजां गतिम् । त्वत्प्रसादेन देवार्द्धिः मया प्राप्ता किलेदृशी ॥ १३१ ॥
इत्युक्त्वा साधुसार्थं त मुनिं मुक्त्वा गमिष्यति । मुनिश्च साधुपुरतः कपिवार्तां करिष्यति ॥ १३२ ॥
इति वार्तां विजानीहि वैद्ययोः सिद्धविद्ययोः । कुर्वास्थां धर्म एव त्वं महाशय ! जनार्दन ! ॥ १३३ ॥

1 अनशनम् ।

तत् श्रुत्वा स्वामिनः पार्श्वे श्रद्धाऽऽभरणभूषणः । नत्वा प्रभुं ययौ कृष्णो ययौ स्वाम्यपि चाऽन्यतः ॥ १३४ ॥
अन्यदा समवासार्षीद्वर्षास्थित्यै जिनप्रभुः । द्वारिकावहिरुद्याने सुराऽसुरनतक्रमः ॥ १३५ ॥
देशनान्ते च पप्रच्छ हरिः विरचिताञ्जलिः । साधवः कथमन्यत्र प्रावृषि स्युर्न गामिनः ॥ १३६ ॥
स्वाम्याऽऽहाऽयतना भूरिः वर्षायां तु यतो भवेत् । साधूनां तु विहारस्तत्र युक्तः स्याज्जनार्दन ! ॥ १३७ ॥
उवाच कृष्णो यद्येवं तद्वर्षासु मया प्रभो ! । बहुसंमर्दरक्षार्थं न गन्तव्यं गृहाद्बहिः ॥ १३८ ॥
अभिग्रहं स्वामिपार्श्वे गृहीत्वाऽथ गृहं ययौ । न हि प्रवेशो दातव्यो वर्षा यावन्नृपानपि ॥ १३९ ॥
इति द्वाःस्थान् समादिश्य गृहान्तस्तस्थिवान् हरिः । तत्र वीर इति नाम्ना कुविन्दो विष्णुसेवकः ॥ १४० ॥
कृष्णस्य दर्शनाऽप्राप्त्या बुभुजे न मनागपि । अन्तःप्रवेशनाऽप्राप्तेः द्वारि तिष्ठति सोऽन्वहम् ॥ १४१ ॥
इत्थं च सकलां वर्षां व्यतीत्य हरिराययौ । सभायां कृतशोभायां सङ्कटायां नृपादिभिः ॥ १४२ ॥
कुविन्दो वीरनामाऽपि दुर्बलस्तत्र तस्थिवान् । हरिणा ददृशे पृष्टः किं कृशो दृश्यसेतराम् ? ॥ १४३ ॥
द्वाःस्थाः शशंसुर्वृत्तान्तं तस्य सर्वं यथातथम् । हरिः परमसन्तुष्टः सर्वत्राऽस्खलितं व्यधात् ॥ १४४ ॥
जगाम कृष्णः सर्वज्ञं वन्दितुं सपरिच्छदः । धर्मोपदेशं शुश्राव प्रोवाच स्वामिनेमिनम् ॥ १४५ ॥
चारित्रग्रहणे श्रद्धा न मेऽस्ति कर्मयोगतः । परं च ग्राहयिष्यामि दीक्षामन्यान् महामहम् ॥ १४६ ॥
पुत्रान् पुत्रींश्च दारांश्च गृह्णानान्नान्तरायकृत् । भवामि प्रत्युत महं कुर्वे सर्वाऽतिशायिनम् ॥ १४७ ॥

इत्यभिग्रहमादाय नत्वा नेमिमगात् पुरम् । विवाहयोग्या आयाताः कन्यका ऊचिवान् हरिः ॥ १४८ ॥
स्वामिन्यः किमु दास्यो वा यूय सर्वा भविष्यथ ? । ऊचिरे तास्तदा कृष्ण स्वामिन्य इति निश्चितम् ॥ १४९ ॥
नेमिपार्श्वे हरिर्गत्वा ताश्च प्राव्राजयद् द्रुतम् । राज्ञ्येकाऽशिक्षयत् पुत्रीं तातपृष्टा वदेरिति ॥ १५० ॥
अहं दासी भविष्यामि तथैवोचे हरिं सुता । तां मात्रा शिक्षितां मत्वा हरिश्चित्ते व्यचिन्तयत् ॥ १५१ ॥
मत्पुत्र्यः कृतविवाहा मा भ्रमन्तु भवाटवीम् । इमामहं तथा कुर्वे वदेयुरिति नान्यकाः ॥ १५२ ॥
एकान्तमुपविष्टोऽथ वीर पप्रच्छ सस्मितम् । प्रकृष्टं किं कृतं कार्यं त्वया रे तन्तुवायक ! ॥ १५३ ॥
बभाषे वीरकः कृष्ण शृणु राजन् ! बलं मम । बदरीस्थो ग्रावखण्डैः कृकलासो मया हतः ॥ १५४ ॥
तोयं मया वहद्रुद्धं मार्गे स्पन्दननिर्मिते । तत्क्षणाद् वामपादेन बलीत्यस्मि जनार्दन ! ॥ १५५ ॥
अन्यद् बल कृत राजन् ! सावधानमनाः शृणु । वस्त्रपालकलश्यन्तः शतशो मक्षिका मया ॥ १५६ ॥
प्रविष्टा हस्तदानेन सर्वा अपि धृता क्षणात् ! ततः कृष्णः सभासीनो नृपान् प्रतिजगाविति ॥ १५७ ॥
भो ! भोः ! शृणुत सर्वेऽपि वीरकस्य बलं महत् । राजानोऽपि हरेर्वाक्यात् सादरा अभवन् भृशम् ॥ १५८ ॥
हतो रक्तस्फुटो नागो बदरीवनसंस्थितः । क्षणतो भूमिशस्त्रेण तन्महाक्षत्रियोऽस्त्ययम् ॥ १५९ ॥
चक्रोत्खाता येन गङ्गा वहन्ती कलुषोदकम् । निरुद्धा वामपादेन तन्महाक्षत्रियोऽस्त्ययम् ॥ १६० ॥
येन कुम्भपुरे सेना सद्यो घोषवती भृशम् । निरुद्धा वामहस्तेन तन्महाक्षत्रियोऽस्त्ययम् ॥ १६१ ॥

मत्पुत्र्याः केतुमञ्जर्या वरो योग्यो भवत्वसौ । इत्युक्त्वा प्राह भो वीर ! गृहाणेमां मयाऽर्पिताम् ॥ १६२ ॥
स्वामिनी भव पुत्रि ! त्वमस्य गेहे सुखं वस । भोगान् भुङ्क्ष्वाऽनेन साकमयं तव वरोऽर्पितः ॥ १६३ ॥
अनिच्छन्नपि कृष्णेन भ्रकुट्याऽतीव भापितः । करे गृहीत्वा निन्ये तां स्वगृहे केतुमञ्जरीम् ॥ १६४ ॥
पल्यङ्कस्थां स तां कृत्वा रसवत्या सुभोज्यया । आरराध भृशं नित्यं कृष्णपुत्रीति चिन्तयन् ॥ १६५ ॥
कृष्णः पप्रच्छ चान्येद्युः मत्पुत्रीं किं करोषि भोः ! । स ऊचे तत्र पुत्रीत्वात् पूजयामि दिवानिशम् ॥ १६६ ॥
कृष्णः प्रोवाच रे मूर्ख ! पूजायै नांऽर्पिता मया । सर्वाणि गृहकार्याणि कारय त्वरितं व्रज ॥ १६७ ॥
न चेत् त्वां ताडयिष्यामीत्युक्तः सोऽथ गृहं ययौ । उवाच लकुटं कुर्वन् करे भृकुटिभीषणः ॥ १६८ ॥
उत्तिष्ठ रे ! किमासीना पल्यङ्के मृदुतूलिके । गृहाणैतन्महाभाण्डं पटं वायय रज्जया ॥ १६९ ॥
करिष्ये त्वद्गृहे कार्यमरे ! किं कृष्णपुत्र्यहम् । तयोक्तस्ताडयामास लकुटेन स निष्ठुरम् ॥ १७० ॥
रुदत्यगात् पितुः पार्श्वे पूत्कुर्वाणा विचेष्टितम् । ऊचे कृष्णस्त्वयैवेदं दास्यमङ्गीकृतं सुते ! ॥ १७१ ॥
सोचे नाऽहं करिष्यामि दास्यं स्वाम्यं प्रयच्छ मे । इत्युक्ते स्वामिनः पार्श्वे दीक्षां दापयति स्म ताम् ॥ १७२ ॥
अथाऽन्यदा महद्भक्त्या द्वादशावर्तवन्दनाम् । चकार सर्वसाधूनां सर्वैर्भूपतिभिस्सह ॥ १७३ ॥
राजानोऽन्ये च साधूनां कियतां वन्दनां ददुः । श्रान्ता उपाविशन् सर्वे कुविन्दो वीरको न तु ॥ १७४ ॥
साधूनां वन्दनां कृत्वा वीरकेण सहाऽमुना । उवाच स्वामिनं कृष्णो बहुसङ्ग्रामकर्मठः ॥ १७५ ॥

नेदृक् कदाप्यहं श्रान्तः सङ्ग्रामान् दारुणान् दधत् । यथा वन्दनदानेन साधूनामद्य हे प्रभो ! ॥ १७६ ॥
उवाच स्वामी भोः कृष्ण ! वन्दनं कुर्वता त्वया । उपार्जितं शुभं कर्म तत् त्वं शृणु महामते ! ॥ १७७ ॥
सम्यक्त्वं क्षायिकं नाम तीर्थकृद् गोत्रकर्म च । उपार्जितं त्वया चान्यदायुः सप्तमभूमिजम् ॥ १७८ ॥
निबद्धं शुभभावेन तृतीयनरकोचितम् । कर्मक्षयादथ चक्रे प्रान्ते कर्ता निकाचनम् ॥ १७९ ॥
उवाच कृष्णः प्रमनाः पुनः कुर्वे सुवन्दनाम् । यथायुस्त्रुट्यति स्वामिंस्तृतीयनरकोचितम् ॥ १८० ॥
स्वाम्यूचे न च भावः स समायाति कदाचन । यो भावः पूर्वमायात तवैकमनसो हरे ! ॥ १८१ ॥
फलं किं वीरकस्यासीद्वन्दनेन मया सह । अनुयुक्तोऽवदत् स्वामी वपुःक्लेशोऽस्य केवलम् ॥ १८२ ॥
ऐहिकं तु फलं तुष्टिस्तवाऽस्योपरि याऽभवत् । पारत्रिके फले राजन् ! भावो हेतुर्भवेत् परम् ॥ १८३ ॥
स्वामिनं नेमिनं नत्वा जगाम पुरिं कंसहा । अथाऽन्यदा कृष्णपुत्रो ढण्ढणाख्यो महामनाः ॥ १८४ ॥
ढण्ढणो नामतः पर्यणैषीत् कन्या अनेकशः । श्रुत्वा धर्मं स्वामिपार्श्वे प्राव्राजीत्ताः परित्यजन् ॥ १८५ ॥
विजहार तपः कुर्वन् स्वामिना सह शुद्धधीः । एवं च तिष्ठतस्तस्योदयमागात् पुराकृतम् ॥ १८६ ॥
कर्मान्तराय तत्तस्य भिक्षार्थं गच्छतोऽपि हि । महर्द्धामपि तत् पुर्यां भिक्षाप्राप्तिर्भवेन्नहि ॥ १८७ ॥
अन्येषामपि साधूनां सह तेनाऽटतां पुरि । अलाभोदय एवाऽऽसीत् सङ्गतेस्तस्य केवलम् ॥ १८८ ॥

१ कसघातक ।

आगत्य स्वामिनं ते च पृच्छन्ति स्म महाधियः। कर्माऽनेन कृतं स्वामिन्! पूर्वजन्मनि किं खलु? ॥ १८९ ॥
करामलकवद्विश्वं पश्यन् स्वामी जगाद तान्। नीवृत्यासीन्मगधके ग्रामे च धान्यपुरके ॥ १९० ॥
विप्रः पराशरो नाम्ना राजाध्यक्षो महर्द्धिभृत्। क्षेत्राण्यवापयद्राजसत्कानि स कुटुम्बिभिः ॥ १९१ ॥
जाते भोजनसमये चागते भोजने सति। निर्दयो नाऽमुचत्तांश्च भोजनाय क्षुधातुरान् ॥ १९२ ॥
क्षुत् तृषाबाधितैस्तैश्च वृषभैर्गाढदुःखितैः। अकर्षयद् बलात् क्षेत्रे सीतामेकां पृथक् पृथक् ॥ १९३ ॥
अन्तरायं कर्म बद्धं मृत्वा भ्रान्त्वा भवान् बहून्। ढण्ढणः कर्मणाऽन्येन शुभेन हरिनन्दनः ॥ १९४ ॥
अभूदिदानीं तत्कर्मोदयमाप ततः पुरि। समृद्धायामपि प्राप भिक्षां नैव कथञ्चन ॥ १९५ ॥
श्रुत्वा तत्कर्म निजकं ढण्ढणर्षिरदोऽवदत्। न पारयाम्यहं स्वामिन्! परलब्ध्या कथञ्चन ॥ १९६ ॥
भोक्ष्येऽहं स्वकलब्ध्यैव क्षीणे कर्मान्तरायके। प्राप्तया भिक्षया तावदभिग्रहधरोऽभवम् ॥ १९७ ॥
इत्यभिग्रहमादाय भ्रमन् पुर्यामुदारधीः। नैवाप्तवान् जलमपि प्रायः कर्म सुदुस्त्यजम् ॥ १९८ ॥
अथाऽन्यदा हरिर्नेमिं पप्रच्छ प्रमदाऽन्वितः। अमीषां साधुवृन्दानां कोऽस्ति दुष्करकर्मकृत्? ॥ १९९ ॥
स्वाम्यूचे यतयः सन्ति सर्वे दुष्करकारकाः। मणीनामिव हारस्य नान्तरं वक्तुमुत्सहे ॥ २०० ॥
तथाऽपि ढण्ढणो नाम तीव्रदुष्करकारकः। अन्तरायवशात् सोढा भिक्षाऽलाभपरीषहम् ॥ २०१ ॥

१ कृष्टभूमिम्।

अथ नत्वा प्रभु गच्छन् प्रविशन् द्वारिकापुरम् । पश्यति स्म ढण्ढणर्षिं यान्तमीर्यापथेन तम् ॥ २०२ ॥
ससंभ्रमं समुत्तीर्य सिन्धुराद्राजसिन्धुरः । ववन्दे परया भक्त्या भाले तिलकयन् रजः ॥ २०३ ॥
वन्द्मान ददर्शैको महेभ्यः कृष्णमादरात् । वन्दते चेत् महाभक्त्या कृष्णस्तदयमुत्तमः ॥ २०४ ॥
मनसा चिन्तयन् सोऽथ प्राप्तं दैवाद् गृहं निजम् । त प्रत्यलाभयद् भक्त्या मोदकैः सिंहकेसरैः ॥ २०५ ॥
ढण्ढणो मुदितश्चित्ते चिन्तयामासिवानिति । अहं प्रक्षीणकर्माऽद्य जात ईदृशलाभतः ॥ २०६ ॥
भृतपात्रो मोदमानो मोदकैः सिंहकेसरैः । आगत्य स्वामिनं नत्वा दर्शयामास मोदकान् ॥ २०७ ॥
स्वामी प्रोचे न ते लब्धिरियं ढण्ढणक ! व्रतिन् ! । किन्त्वियं वासुदेवस्य लब्धिः क्षीणं न कर्म तत् ॥ २०८ ॥
महेभ्यो वासुदेवेन वन्दितं त्वां ददर्श यत् । ततस्त्वामुत्तम मत्वा प्रादात्ते मोदकानमून् ॥ २०९ ॥
किं कुर्वे तदमून् स्वामिन् ! न कल्पते सर्वथा मम । स्वाम्यूचे स्थण्डिल शुद्धं विलोक्य त्यज खण्डशः ॥ २१० ॥
स गत्वा स्थण्डिलं शुद्धं मोदकान् खण्डशोऽकरोत् । चक्रे भस्ममयान् सर्वान् भृशं रागादिवर्जितः ॥ २११ ॥
स्वं कर्म निन्दन् मनसा क्षपकश्रेणिमुत्तमाम् । आरूढः केवलज्ञानभागभूत्तत् क्षणादपि ॥ २१२ ॥
केवलज्ञानमहिमा चक्रे सुरवरैर्महान् । प्रभु प्रदक्षिणीकृत्य ययौ केवलिपर्षदम् ॥ २१३ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु–
लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।

श्रीकृष्णपुत्रचरितं ललितं चकार,
सर्गश्चतुर्दशततया गतवान् सदर्च्यः ॥ २१४ ॥

इति श्रीप्रद्युम्नचरित्रे महाकाव्ये देवकीषट्पुत्राधिकार-गजसुकुमालाधिकार-सागरचन्द्राधिकार-देवतापरीक्षा-भेरी-समर्पण-धन्वन्तरि-वैतराणिवैद्याधिकार-ढण्ढणकुमाराधिकारवर्णनो नाम चतुर्दशः सर्गः ॥



# पञ्चदशः सर्गः ।

अथाऽन्यदा नेमिः सार्वाधिपतिः समवासरत् । लाभं ज्ञात्वा स्थातुकामः चतुर्मासीं हरेः पुरि ॥ १ ॥
द्वारिकायां ततो जग्मुराहारार्थं महर्षयः । द्वारिकायाः पुरो भिक्षामादाय रथनेम्यथ ॥ २ ॥
आगच्छन् प्रभुपार्श्वेऽस्ति तदा वृष्टिरचिन्तिता । अजायत ततो भीतः प्राविशत् स महागुहाम् ॥ ३ ॥
तदैव समये राजीमती नत्वा न्यवर्तत । स्वामिनं स्वाश्रयं गन्तुं बहुसाध्वीसमन्विता ॥ ४ ॥
अप्कायाऽयतनाभीता ययुः सर्वा इतस्ततः । राजीमती वृष्टिभीता तामेव च गुहां गता ॥ ५ ॥
पूर्वंप्रविष्टमज्ञात्वा रथनेमिं तमोवशात् । अमुञ्चन्निजवस्त्राणि क्लिन्नानि सलिलैरिति ॥ ६ ॥
तत्रोद्वापयितुं लग्नां नग्नां तां पश्यति स्म सः । बभूव कामभूतार्तस्ततोऽवादीदिदं वचः ॥ ७ ॥
अकस्मादेव नौ जातः सङ्गमो दैवनिर्मितः । भुङ्क्ष्व भोगान् मया सार्द्धं न हीदृक् सङ्गमो भवेत् ॥ ८ ॥
पुराऽपि प्रार्थिताऽसीति परं नाङ्गीकृतं त्वया । अधुना दैवयोगेन प्राप्ता नग्नैव सा मया ॥ ९ ॥
रथनेमेः स्वरं ज्ञात्वा गोपिताङ्ग्यभवद् द्रुतम् । उवाच वाचा सुधया धैर्यमालम्ब्य सा सुधीः ॥ १० ॥
अरे वृष्णिकुलोद्भूत ! समुद्रविजयाङ्गज ! । स्वामिभ्रातः ! स्वामिशिष्य ! लज्जसे नोऽधुनाऽपि हि ॥ ११ ॥

कलङ्कय कुलं मा मा निष्कलङ्कं यदादितः । सुधांशुधवलवासैः कलङ्कयाति यन्मषी ॥ १२ ॥
सर्वज्ञशिष्या भूत्वाऽपि किमीदृक्कर्म गर्हितम् । कृत्वाऽहं नरके घोरे पतिष्यामि महासती ॥ १३ ॥
मुञ्चेमां तत् खरस्येव कदाशां पातकारिणीम् । व्रज त्वं स्वामिनः पार्श्वे पुनः शुद्धं व्रतं कुरु ॥ १४ ॥
अगन्धनकुले जातो नागोऽपि न हि वाञ्छति । वान्तं ग्रहीतुं नीचोऽसि ततोऽपि किमु दुर्मते ! ॥ १५ ॥
यद्वेद्दृक्कामविवशः कथमादाः तपस्विताम् । यदि चादा इमां तर्हि सम्यक् पालय निर्मलाम् ॥ १६ ॥
ज्वलदग्नौ प्रवेशोऽपि वरं न तु व्रतक्षतिः । युद्धे वरं हि योद्धॄणां मरणं न पलायनम् ॥ १७ ॥
मा वदेरथ वाक्यं मां द्वयोर्नरककारणम् । उत्पन्नामपि दुर्बुद्धिं हृदये स्थापयैव ताम् ॥ १८ ॥
इति प्रबोधितः सम्यक् वचोवैदग्ध्यवत्तया । तया ययौ प्रभोः पार्श्वे निन्दन् स्वं कर्म गर्हितम् ॥ १९ ॥
रथनेमिः प्रभोः पार्श्वे गत्वाऽऽलोच्य व्रतक्षतिम् । प्रभुदत्तं तपः कृत्वा विहरन् प्रभुणा सह ॥ २० ॥
छद्मस्था(स्थो)ऽस्थात् समामेकां ततः केवलमासदत् । यतः सूचिः न यात्येव ससूत्रा पतिताऽपि हि ॥ २१ ॥
अथ प्रभुर्विहृत्याऽत्र लाभार्थी समवासरत् । मुनयो वणिजश्चाऽपि लाभं दृष्ट्वैव गामिनः ॥ २२ ॥
हरिः प्रभौ समायाते शाम्बादीन् प्रत्यवोचत । प्रभुं प्रथमतो नन्ता यः सोऽश्वं लभताममुम् ॥ २३ ॥
तत् श्रुत्वा पालको नाम पुत्रो भव्यत्ववर्जितः । महत्यां हि विभावर्यामश्वारूढो ययौ द्रुतम् ॥ २४ ॥

१ वस्त्रम् । २ वर्षम् ।

ववन्देऽथ प्रभुं प्रोचे वदेरिति जनार्दनम् । वन्दितोऽस्मि पालकेन प्रथमं सर्वतोऽपि हि ॥ २५ ॥
अथ शाम्बो महाभक्तिः प्रभाते त्यक्ततल्पकः । श्रीनेमेः संमुखं गत्वा सप्ताऽष्टौ वा पदान् प्रति ॥ २६ ॥
एकशाटिकवैकक्ष कुर्वंश्चक्रे सुवन्दनाम् । शक्रस्तवादिकथनैः व्यथनैः सर्वकर्मणाम् ॥ २७ ॥
अयाचत पालकोऽथ दर्पकाऽश्वं जनार्दनम् । दास्येऽहं नेमिनं पृष्ट्वा इय तत्रैव याम्यहम् ॥ २८ ॥
इत्युक्त्वा रुक्मिणीपुत्रशाम्बादिसुतवेष्टितः । ययौ समवसरणं नेमिन नन्तुमुत्सुकः ॥ २९ ॥
नत्वा पप्रच्छ च हरिः प्रथम केन वन्दितः ? । शाम्ब पालकयोर्मध्ये यत्तमश्व समर्पये ॥ ३० ॥
उवाच स्वामी भरतार्द्धकस्वामिनमुत्सुकः ( कम् ) । द्रव्यतो वन्दितस्तेन पालकेन सुतेन ते ॥ ३१ ॥
भावतस्त्वथ शाम्बेन भक्तिसभृतचेतसा । पप्रच्छ कृष्णः साश्चर्यं को भेदोऽस्त्यनयोरिति ? ॥ ३२ ॥
स्वाम्युवाच हरिपृष्टो न भव्यः पालकः सुतः । वन्दनं द्रव्यतस्तेन कृतवान् भावतो न तु ॥ ३३ ॥
एतद्भवमोक्षगामी शाम्बो जाम्बवतीसुतः । तेनाऽय भावतोऽकार्षीद् वन्दनं स्पन्दनं शिवे ॥ ३४ ॥
निर्वास्य पालकं क्रुद्धो ददावश्व प्रमोदभृत् । शाम्बाय मण्डलेशित्वं प्रदाय च स तत्क्षणात् ॥ ३५ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु-लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीकृष्णपुत्रचरितं ललित चकार, सर्गोऽत्र पञ्चदश आप चिरस्थितित्वम् ॥ ३६ ॥

इति श्रीप्रद्युम्नचरित्रे महाकाव्ये रथनेमि-राजीमत्यधिकार-शाम्ब-पालकभव्यत्ववर्णनो नाम पञ्चदशः सर्गः सम्पूर्णः ॥

---

# षोडशः सर्गः ।



अथाऽन्यदा देशनान्ते पप्रच्छ रचिताञ्जलिः । जनार्दनो विनीतात्मा नेमिनाथं प्रमोदभाक् ॥ १ ॥
स्वामिन् ! अस्या महापुर्या नैकरत्नजुषः खलु । प्रळयो वर्तते किं वा नास्ति मेरोरिव ध्रुवम् ? ॥ २ ॥
तथा ममाऽपि सर्वत्र जयवादजुषः खलु । क्षयोऽस्ति चेत् किं निमित्तं स्वयं चायुःक्षये सति ? ॥ ३ ॥
कथ्यतामिति पृष्टश्च स्वामी नेम्यब्रवीदथ । को मोहस्तव दक्षस्याऽत्राऽर्थे भोः ! कृष्णभूपते ! ॥ ४ ॥
यदुत्पन्नं हि तद्वस्तु विनाश्येव न संशयः । तस्मादस्या महापुर्याः क्षयस्तव च वर्तते ॥ ५ ॥
निमित्तं शृणु तत्राऽर्थे वच्म्यहं मूलतः खलु । पुरे सौर्यपुरि(रे) नाम्नि तापसो वहिराश्रये(मे) ॥ ६ ॥
नाम्ना पाराशर इति प्रथितस्तापसेषु सः । कन्यां नीचकुलोद्भूतां लात्वाऽगच्छत् स्मरातुरः ॥ ७ ॥
यमुनाद्वीपमाश्रित्य तां सिषेवे स्मरोद्धतः । अभवत्तनयस्तस्य द्वैपायनकृताऽभिधः ॥ ८ ॥
महान् बालतपस्वी सः समायातो गिराविह । शाम्बाद्यैर्मद्यपानेन मत्तैः स हि हनिष्यते ॥ ९ ॥
ततः कृतनिदानोऽसौ द्वारिकां ज्वालयिष्यति । यदुभिः बहुभिः सार्द्धं मृत्वोत्पद्य सुरेषु हि ॥ १० ॥
तथाऽन्यच्च तव भ्रातुर्जरामातुर्भवात् क्षयः । जराकुमारनाम्नोऽस्मादीदृशी हि भवस्थितिः ॥ ११ ॥
जराकुमारस्तत् श्रुत्वा सकलं स्वामिनो वचः । मेदृक् पापमहं कृत्वा श्वभ्रं[१] यायामगाधकम् ॥ १२ ॥

१ नरकम् ।

ततोऽस्माधाम्यहं तत्र यत्र नाऽनेन सङ्गमः । इत्युत्थाय धनुर्गृह्णंस्तूणभृत् स वनं ययौ ॥ १३ ॥
द्वैपायनोऽपि तत्पापभीरुः वनमशिश्रियत् । यदूनां द्वारिकायाश्च रक्षायै यत्नवानभूत् ॥ १४ ॥
कृष्णोऽथ तद्वचः श्रुत्वा करीवाऽभून्मदच्युतः । विवेश द्वारिकां नत्वा प्रभुं दुःख वहन् हृदि ॥ १५ ॥
सर्वानाहूय पुत्रादीनुवाच स्वामिनो वचः । मद्यमूलः क्षयो भावी द्वारिकायास्ततो जनाः ! ॥ १६ ॥
त्यजतेद विषमिव न पेयं कैश्चनाऽपि हि । इत्युक्ते भयभीतास्ते तत्यजुः गिरिकन्दरे ॥ १७ ॥
पटहोद्घोषणापूर्वं मद्यपानं निषिद्धवान् । आसीद्धर्मरतः कृष्णो बलदेवश्च तत्क्षणम् ॥ १८ ॥
बलदेवस्य भ्राताऽथ सिद्धार्थः सारथिर्जगौ । बलदेवं करौ कृत्वा पद्मकोशनिभौ सुधीः ॥ १९ ॥
स्वामिन् ! अह न पश्यामि यथेदृक्प्रलयं पुरः । तथैव कर्तुमिच्छामि तवाऽऽज्ञां प्राप्य सम्मति ॥ २० ॥
तस्माद् विसृज मां राजन् ! दीक्षायै नेमिसंनिधौ । अधुनैव ग्रहीष्यामि कालक्षेपो हि नोचितः ॥ २१ ॥
उवाच बलदेवोऽपि भ्रातः ! ते विरहो मया । दुःसहोऽस्ति परं जाने हितमित्थंकृते तव ॥ २२ ॥
विसृष्टोऽसि मया तेन दीक्षायै स्वामिसंनिधौ । पर तप्त्वा तपो भूरि स्वर्गं प्राप्तः सुदुस्तपाः ॥ २३ ॥
मां संमोहदशां प्राप्तमुत्पथप्रस्थितं प्रति । प्रबोधयेः समागत्य दत्तजल्पोऽधुना भव ॥ २४ ॥
ओमिति प्रतिपद्यैतन्महामहःपुरस्सरम् । प्राव्राजीत् स्वामिनः पार्श्वे मुक्तमोह उदारधीः ॥ २५ ॥
महातपाः स षण्मासीं परिपाल्य व्रतं महत् । ययौ दिवं शिवं चाऽपि गमिष्यति भवान्तरे ॥ २६ ॥

इतश्च मद्यं तन्मुक्तं शिलाकुण्डेष्वभूद् भृशम् । तत्पार्श्वद्रु-लता-पुष्पैः वासितं सुरभीकृतम् ॥ २७ ॥
दैवाच्च मासि वैशाखे ययौ शाम्बस्य सेवकः । पपौ मद्यं तृषाक्रान्तो लब्धं बहुदिनैर्मुदा ॥ २८ ॥
ततश्च दृतिमापूर्याऽऽययौ शाम्बस्य सन्निधौ । तदेवोपायनं चक्रे तादृशां तत् प्रियं यतः ॥ २९ ॥
पायं पायं भृशं मोदं मोदमित्यूचिवान् स तम् । अरे क्व लब्धमीदृक्षं मद्यं कथय साम्प्रतम् ? ॥ ३० ॥
सोऽपि स्वामिप्रियाऽऽशंसी शंसति स्म तथैव तत् । ययौ शाम्बो द्वितीयेऽह्नि स्वकवृन्दसमन्वितः ॥ ३१ ॥
शाम्बः पपौ तथाऽन्येऽपि कुमाराः तां सुरां मुदा । दृप्ता मत्ताश्च तेऽभूवन् पायं पायं सुदुस्त्यजाम् ॥ ३२ ॥
मत्ताः सन्तः कुमारास्ते गायन्ति ननृतुर्भृशम् । सकलं पर्वतं भ्रेमुः सर्वेऽपि स्रस्तकुन्तलाः ॥ ३३ ॥
दैवात्ते ददृशुः सर्वे द्विपायनतपस्विनम् । एकान्तस्थायिनं भीतं कुर्वन्तं दुस्तपं तपः ॥ ३४ ॥
अरे ! आः ! पाप ! पापोऽयमिति जल्पाः क्रुधाऽरुणाः । लेष्टुभिर्मुष्टिभिर्जघ्नुर्लताभिश्च महाबलाः ॥ ३५ ॥
कुम्भकारा मृदमिव तमामर्द्य चिरं मदात् । चाक्रिरे तं मृतप्रायं जग्मुर्हृष्टास्ततः पुरम् ॥ ३६ ॥
तं वृत्तान्तं जनः कश्चिदभ्येत्याऽज्ञापयद्धरिम् । चिन्तयामास चित्तेऽसौ मूर्खैर्हा ! कीदृशं कृतम् ॥ ३७ ॥
झटित्युत्थाय कृष्णोऽगात् तत्र रामाऽन्वितो गिरौ । ददर्श कोपरक्ताऽक्षं भुजङ्गमिव दृग्विषम् ॥ ३८ ॥
स सान्त्वयितुमारेभे द्वैपायनमुनिं गिरा । सुधाप्रवाहवर्षिण्या क्रोधवन्हिजलाऽऽभया ॥ ३९ ॥
अरे महर्षे ! क्रोधोऽयं दुःखदो वन्हितोऽधिकम् । यतो भवान्तरेऽपि स्यात् दुःखदायी नृणां चिरम् ॥ ४० ॥

ततो न युक्तो क्रोधोऽयं सर्वेषां कर्तुमङ्गिनाम् । मुनीनां तु विशेषेण ज्ञानभाजां भवादृशाम् ॥ ४१ ॥
अमी मूर्खा मदोन्मत्ता मदज्ञातास्तवेदृशम् । परीषहममुं चक्रुस्तत् क्षमस्व महामुने ! ॥ ४२ ॥
ईदृग् महत्तपः तप्तं वृथा कर्तुं न युज्यते । निदानेनाऽमुना सद्यः सौवीरेणेव गोपयः ॥ ४३ ॥
स ऊचेऽलं भवद्वाक्यैः निदानं विहितं पुरः । ताड्यमानेन मयका कुमारैः तव निर्दयम् ॥ ४४ ॥
सलोका पूरियं सर्वा कार्या दहनसान्मया । मुक्त्वा युवां तु द्वावेव तत्राऽर्थे निश्चयोऽस्ति मे ॥ ४५ ॥
न्यपेधन् मुसली कृष्णं पुनर्विज्ञपनोत्सुकम् । यत एतादृशा नैव बुध्यन्ते क्रोधविह्वलाः ॥ ४६ ॥
वक्राङ्घ्रि-नासिका-हस्ताः स्थूलोष्ठ-रदनाः कृशाः । मार्जाराऽक्षाः पिङ्गकेशाः शान्ति यान्ति न जातुचित् ॥ ४७ ॥
ततोऽलं दीनवचनैर्महापुम्भिर्भवादृशैः । भाषितैरस्य पुरतो मिथ्यात्वग्रस्तचेतसः ॥ ४८ ॥
इत्थं बलप्रयुक्तः सन्नुत्तस्थौ बलयुग् हरिः । द्वारिकायां ययौ वेश्म चिन्तयन् भवितव्यताम् ॥ ४९ ॥
सर्वेषां ज्ञापयामास निदानं तस्य दुर्धियः । पटहोद्घोषणापूर्वं प्रत्यहं सकले पुरे ॥ ५० ॥
अत्रान्तरे जिनस्तत्र महद्धर्या समवासरत् । महापोत इव त्रातुं भवाऽब्धौ पततां नृणाम् ॥ ५१ ॥
आरेभे देशनां नेमिः कृष्णः शुश्राव चाऽन्वहम् । जनः सर्वोऽभवत् सावधानो धर्मैकतत्परः ॥ ५२ ॥
श्रीनेमेः देशनां श्रुत्वा प्रद्युम्नोऽभूद् विरक्तधीः । आगत्य हस्तौ संयोज्य कृष्णं व्यज्ञपयद् द्रुतम् ॥ ५३ ॥

१ द्वैपायन । २ अग्निअर्थाना । ३ बलदेव ।

अहमस्मि भवोद्विग्नः श्रुत्वा श्रीनेमिदेशनाम् । ततो विसृज दीक्षायै न स्थातुमिह सांप्रतम् ॥ ५४ ॥
उवाच कृष्णो धन्यस्त्वं बालस्याऽपीदृशी मतिः । जायते यस्य संसारतारिणी दुःखवारिणी ॥ ५५ ॥
जानतोऽपि ममेदृग् न जायते स्वप्नतोऽपि च । एतादृशस्य हा भावि दुःखं श्वभ्रगतौ चिरम् ॥ ५६ ॥
स्नेहतो वारयामि त्वां परमाऽऽयतिचिन्तनात् । विसृष्टोऽसि तपस्यायै यथायोग्यं द्रुतं कुरु ॥ ५७ ॥
तदा शाम्बकुमारोऽपि तथाऽन्ये कृष्णसूनवः । एवमेव समागत्य मोचिरे बलिसूनवः ॥ ५८ ॥
तथैव कृष्णाऽनुज्ञाताः प्रद्युम्नेन सह द्रुतम् । गत्वा श्रीनेमिनः पार्श्वे जगृहुः व्रतमुत्तमम् ॥ ५९ ॥
रुक्मिणी-जाम्बवत्याऽऽद्याः कृष्णपत्न्योऽपरा अपि । बलदेवाऽऽदिपत्न्यश्च प्रव्रज्यां जगृहुस्तदा ॥ ६० ॥
अच्युतश्चिन्तयामास धिग् मां विषयलोलुपम् । बाला अपि प्रबुध्यन्ते नाऽहं बोधमवाप्नुयाम् ॥ ६१ ॥
कुर्वाणमित्थं तं दुःखं जगाद ज्ञानभासुरः । प्रव्रजन्ति निदानेनाऽर्गलेनेव न शार्ङ्गिणः ॥ ६२ ॥
मा विषीद परं कृष्ण ! तृतीयं नरकं गमी । ततो निर्गत्य भावी त्वं तीर्थेशोऽत्रैव भारते ॥ ६३ ॥
भ्राताऽयं बलदेवस्तु ब्रह्मलोकं गमी ततः । परिच्युत्याऽत्र भरते भावी परमऋद्धिभाक् ॥ ६४ ॥
उत्सर्पिण्यां प्रसर्पन्त्यां परिव्रज्य महामनाः । तत्र तीर्थकृतः तीर्थे महानन्दपदं गमी ॥ ६५ ॥
अथ प्रद्युम्न-शाम्बाद्या गृहीत्वा व्रतमुत्तमम् । कर्मेन्धनाऽग्निसंकाशं तपश्चक्रुरनुत्तरम् ॥ ६६ ॥
अथ स्वामी विहारेण पावयन् पृथिवीतलम् । भास्वानिव परं देशं ययौ साध्वंशुसंयुतः ॥ ६७ ॥

पटहोद्घोषणं कृत्वा प्रत्यहं कुरुते हरिः । सावधानान् जनान् धर्मनिष्ठान् पूजादितत्परान् ॥ ६८ ॥
बभूवुः सर्वे यदवः तपोध्यानजुषः सदा । नमस्कारपरावर्तपराः सत्यैकभाषिणः ॥ ६९ ॥
अथ द्वैपायनो दुष्टबुद्धिर्मृत्वोदपद्यत । देवेष्वग्निकुमारेषु तादृशां हि तथा गतिः ॥ ७० ॥
तत्रोत्पद्य स सस्मार वैरं तैः यदुभिः सह । निदानं च कृतं तत्र स्मृत्वाऽऽगाद् द्वारिकापुरम् ॥ ७१ ॥
तत्राऽऽगतो ददर्शैकं जनं जापपरायणम् । अन्य च नेमितीर्थेशप्रतिमार्चनतत्परम् ॥ ७२ ॥
गृह्णानं पौषधं कश्चित् कश्चित् सामायिकव्रतम् । कायोत्सर्गजुषं कश्चिद् ददानं दानमुत्तमम् ॥ ७३ ॥
ददर्श स्त्रीजनं तत्र षष्ठा-ऽष्टमतपस्तपम् । देवपूजाप्रसक्तं च ब्रह्मव्रतधरं सदा ॥ ७४ ॥
जपमालासुस्थकरं जपन्तं नेमिनं मुखे । एवं तत्र जनान् दृष्ट्वा नरान् स्त्रीश्चाऽपि निश्चलान् ॥ ७५ ॥
न शशाक प्रवेष्टुं स सारमेय इव छली । छलं गवेषयामास वर्षाण्येकादश स्थितः ॥ ७६ ॥
प्राप्तेऽथ द्वादशे वर्षे लोकोऽतीवप्रमद्वरः । सञ्जातः कथयामास कोऽसौ द्वैपायनो मुनिः ? ॥ ७७ ॥
स दुर्ध्यानमनाः प्राप श्वभ्रं तस्य गतिः कुतः । महादुर्ध्यानिनो देवे तिर्यक्त्वं प्राप सोऽथवा ॥ ७८ ॥
इति चित्ते विचिन्त्याऽभूद् लोकः सर्वः प्रमादवान् । गताऽऽशङ्कः पपौ पेयं स्त्रीभिः सह सुखं लसन् ॥ ७९ ॥
पुर्यामथ द्वारिकायां कल्पान्तोत्पातसन्निभाः । बभूवुः भृशमुत्पाता भूमिकम्पादिका भृशम् ॥ ८० ॥

१ मदिरा ।

अश्मनः प्रतिमा हासं चक्रू रुरुदुरुच्चकैः । अङ्गारवृष्टयोऽभूवन् रविमण्डलतोऽनिशम् ॥ ८१ ॥
ददृशे भूरिभिर्लोकैः सच्छिद्रं रविमण्डलम् । अकाले विद्युतोऽकालगर्जितान्यपि जज्ञिरे ॥ ८२ ॥
स्वप्ने च ददृशुर्लोका अग्निवृष्टिं समन्ततः । प्रणेशुश्चक्ररत्नादिरत्नानि स्वयमेव हि ॥ ८३ ॥
हरेश्च हलिनश्चाऽपि मतिमोहजुषो भृशम् । ततो विचक्रे संवर्तं वातं द्वैपायनः सुरः ॥ ८४ ॥
मुमोचाऽग्निं यत्र तत्र कल्पान्तज्वलनोपमम् । सपक्षमिव वातेन भ्रमन्तं सर्वतः पुरि ॥ ८५ ॥
प्रणश्यतो जनान् सर्वान् वातेनाऽऽनीय चाऽक्षिपत् । अन्तःपुरं तथाऽष्टाभ्यो दिग्भ्यो दारूणि चाऽऽनयत् ॥ ८६ ॥
तैरपूर्यत सर्वाऽपि द्वारिकाप्रज्वलद्गृहा । कोलाहलेन लोकानां बालानां रोदनैरपि ॥ ८७ ॥
अबलानां च पूत्कारै रक्ष रक्षेति शब्दितैः । न किञ्चित् श्रूयते तत्र कर्णेऽपि पतितं वचः ॥ ८८ ॥
त्रटत्रटिति ते पेतुः प्रासादाः सप्तभूमिकाः । धगद्धगिति जज्वाल कल्पाऽनल इवाऽनलः ॥ ८९ ॥
प्रणश्य गच्छन् लोकोऽथ पदं गन्तुं शशाक न । अपश्यद्यत्र तत्राऽपि ज्वलन्तं ज्वलनं पुरि ॥ ९० ॥
हरेश्च हलिनश्चाऽपि पश्यतः चक्षुषाऽभितः । स्वजनान् वन्हिना दग्धान् महद् दुःखमजायत ॥ ९१ ॥
अथ राम-हरी सज्जं चक्रतू रथमुत्तमम् । देवकीं वसुदेवं चाऽऽरोहयामासतू रथे ॥ ९२ ॥
रोहिणीं च समारोह्य चलतः स्म द्रुतं द्रुतम् । हया न चलितुं शक्ताः तथा च वृषभा अपि ॥ ९३ ॥
अश्वस्थाने स्वयं जातौ रथं चकृषतुर्बलात् । भग्नं चक्रयुगं तस्य तडत्तडिति भाण्डवत् ॥ ९४ ॥

तथाऽपि निन्यतुर्द्वारे रथ सामर्थ्यतो निजात् । पिदधाति स्म स सुरो द्वारं साऽर्गलमुच्चकैः ॥ ९५ ॥
एकं रामेण कृष्णेन चैकं पादप्रहारतः । भग्नं मृदाऽऽमघटवत् शतधा न्यपतच्च तत् ॥ ९६ ॥
भुजयो रथमारोप्य निर्गन्तु चलितौ यदा । उवाच देवो युवयोः को मोहो जाननोः सतोः ? ॥ ९७ ॥
निदानं मयका चक्रे न मुञ्चामि युवां विना । तिर्यञ्चमपि तत् पित्रोः का वार्तैव ततो युवाम् ॥ ९८ ॥
यातः विमुच्य पितरौ मोक्षो नास्तीह कस्याचित् । वसुदेवादयः प्रोचुर्बलदेव-हरी प्रति ॥ ९९ ॥
यात यात युवां पुत्रावस्माक गतिरीदृशी । भाविनी यदि जानद्भिः प्रव्रज्या नोररीकृता ॥ १०० ॥
प्रद्युम्न-शाम्बप्रमुखैः समुद्रविजयादिभिः । दीक्षा कक्षीकृता धिग् नो जायतोऽपि प्रमादिनः ॥ १०१ ॥
इत्युक्त्वाऽनशन चक्रुः स्मृतिं च परमेष्ठिनाम् । जगृहुर्नाम श्रीनेमेः क्षामणां चक्रुरादरात् ॥ १०२ ॥
तेषूपरि सुरोऽमुञ्चज्ज्वलदग्निं स्फुरत्कणम् । समाधि-ध्यान-योगेन त्रयोऽपि त्रिदिवं ययुः ॥ १०३ ॥
अथ निर्जग्मतुः पुर्यां राम-कृष्णौ सुदुःखितौ । पश्यन्तौ वलितग्रीवं दह्यमानां महापुरीम् ॥ १०४ ॥
प्रासादाः शतधा पेतुः प्राकारः कणशोऽभवत् । भस्मसात् चन्दनस्तम्भा अभूवंश्च सहस्रशः ॥ १०५ ॥
ज्वालामाकाशसंलग्नां धूमधूम्रां दिशं तथा । पश्यतः स्म तथा शब्दान् दारुणान् शृणुतः स्म तौ ॥ १०६ ॥
उवाच बलदेवोऽथाऽशक्ताभ्यां किं विलोकितैः । रक्षितुं यदि नो शक्या पुरीयं वासिता स्वयम् ॥ १०७ ॥

१ उररीकृता–अङ्गीकृता । २ अस्मान् ।

ततो भव्यमितो गन्तुं न स्थितिः श्रेयसीतरा । तदा कृष्णोऽवदद् भ्रातः ! क्व गम्यं कुत्र च स्थितिः ॥ १०८ ॥
बलदेवस्तदोवाच सुहृदो बान्धवा अपि । आवयोः पाण्डुतनयाः तद्यावस्तत्पुरीं नवाम् ॥ १०९ ॥
हरिरूचे कथं यावस्तत्र निर्विषयीकृताः । तिष्ठन्ति ते मया पूर्वं हस्तिनापुरतः खलु ॥ ११० ॥
ऊचे रामो न हि भ्रातः ! तत् स्मरिष्यन्ति तेऽनघाः । उपकारान् स्मरिष्यन्ति कृतान् पूर्वं सहस्रशः ॥ १११ ॥
उपकारान् विमुच्यैवाऽपकारान् खलु दुर्जनाः । स्मरन्ति सज्जनाः किं तु वैपरीत्येन तान् हरे ! ॥ ११२ ॥
युक्तं तद् गमनं कर्तुं गेहे तेषां सुचेतसाम् । न त्रपाऽस्ति हरे ! तत्र गच्छतोः स्वगृहे यथा ॥ ११३ ॥
इत्थं गाढं विमृश्योभौ चेलतुस्तां दिशं प्रति । अतीव वलितग्रीवं पश्यन्तौ साऽश्रुलोचनौ ॥ ११४ ॥
पुर्यां ज्वलन्त्यां तत्राऽथ बलजः कुब्जवालकः । कचोत्पाटं ललौ दीक्षां व्रतोच्चारपुरस्सरम् ॥ ११५ ॥
उच्चैः सौधाग्रमारुह्य बाहुमुत्क्षिप्य चाऽवदत् । शिष्योऽहं नेमिनाथस्याऽधुना व्रतधरोऽभवम् ॥ ११६ ॥
अनेनैव भवेनाऽहं स्वामिनोक्तः शिवं गमी । मा वचः स्वामिनो मिथ्या तदस्तु त्रात मां सुराः ! ॥ ११७ ॥
इत्युक्ते जृम्भका देवाः तमुत्पाट्याऽमुचन् क्षणात् । श्रीनेमिस्वामिनः पार्श्वे व्रतं जग्राह तत्र च ॥ ११८ ॥
षण्मासं सा पुरी दग्धा ज्वालामालाकरालिता । अर्पिताऽम्बुधिनाऽप्यासीद् गृहीता तेन सा ततः ॥ ११९ ॥
इतश्च चेलतुस्तौ च प्रापतुः नगरं महत् । हस्तिकल्पाऽभिधं तत्र शशंस हलिनं हरिः ॥ १२० ॥
भ्रातः ! क्षुधातुरोऽभूवं लज्जयैवाऽवदं न हि । सांप्रतं नगरं प्राप्तं तत्तूर्णं याहि मध्यतः ॥ १२१ ॥

समानय ततो भोज्यं तावदत्र स्थितोऽस्म्यहम् । बलोऽवोचदहं यामि सावधानो भवेः परम् ॥ १२२ ॥
वैयग्र्यं मे कुतोऽप्यत्र भविष्यति गतस्य तत् । सिंहनादं करिष्यामि श्रुत्वा त शीघ्रमापतेः ॥ १२३ ॥
इत्थं सङ्केतमाधाय रामो याति स्म तां पुरम् । प्रविशन् स देवरूपः कोऽय कोऽयमितीक्षितः ॥ १२४ ॥
कान्दुकादंगुलीयेन भोज्यं नानाविध ललौ । कटकेन ललौ मद्यं शौल्किकाच्च महाशयः ॥ १२५ ॥
तद् गृहीत्वा चलमानमपश्यद्राजपूरुषः । बलदेव इति ज्ञात्वा गत्वाऽऽख्यद् भूभुजे द्रुतम् ॥ १२६ ॥
धृतराष्ट्रसुतो राजा नाम्नाऽच्छरदनः स्वयम् । वैरं पुरातनं स्मृत्वा ययौ सबलवाहनः ॥ १२७ ॥
गोपुरस्य तदाऽध्यक्षः कपाटौ सार्गलौ व्यधात् । यथाऽभवन्न निर्गन्तुं बलः शक्तोऽपि मध्यगः ॥ १२८ ॥
मुमोच च हली भूमौ भोज्य-पाने महामतिः । दन्तिनः स्तम्भमुन्मूल्य दधावेऽच्छरदं नृपम् ॥ १२९ ॥
कुर्वन् युद्धं चकाराऽऽशु क्ष्वेडां सिंहस्वनोपमाम् । श्रुत्वा भङ्क्त्वा कपाटौ तौ सार्गलावपि केशवः ॥ १३० ॥
प्रविश्य पुरमध्ये च तमेव परिघं ललौ । उभावपि महाबाहू जघ्नतुस्तौ द्विषद्बलम् ॥ १३१ ॥
अच्छदन्तं वशीकृत्य कचग्रहपुरस्सरम् । हरिः जगाद रे पाप ! साहस किमिदं व्यधाः ? ॥ १३२ ॥
यद्यस्माकं गतं सर्वं तत् किं बाहुबलं गतम् । बुभुक्षितोऽपि किं सिंहो गोमायुवशगो भवेत् ॥ १३३ ॥
मुक्तोऽस्यस्मादागसस्त्व भुङ्क्ष्व राज्यं मयाऽर्पितम् । इत्युक्त्वा तं नृपं मुक्त्वा ययतुस्तावुभावपि ॥ १३४ ॥

१ नानाविधस्वादुभोज्यविक्रेता कान्दुक –' कदोई '। २ शौल्किको–मद्यविक्रयी। ३ शब्दम्। ४ शत्रुसैन्यम्।

उद्याने तत्र तौः ! गत्वा भोजनं कुरुतः स्म तत् । ततोऽपि चलतः स्माऽऽशु प्रत्यपाचिं सुदुःखितौ ॥ १३५ ॥
पथश्रान्तेरतिक्षारभोजनाचाऽतिदुःखतः । केशवो हलिनं प्रोचे बन्धोऽहं तृषितोऽभवम् ॥ १३६ ॥
चलितुं न प्रभुस्तेन पदमप्यग्रतो मनाक् । तेनाऽत्र स्थीयते नीरं पीयते स्वादु चेद् भवेत् ॥ १३७ ॥
विलोक्य मुशली प्रोचे भ्रातः ! नास्त्यत्र जीवनम्[1] । तिष्ठ तेन त्वमत्रैव द्रुमे सच्छायशीतले ॥ १३८ ॥
कौशाम्ववनमेतन्नु नाम्नाऽस्त्यतिभयङ्करम् । नैकव्याधगणव्याप्तं सिंहाऽऽदिश्वापदाऽन्वितम् ॥ १३९ ॥
सावधानस्ततस्तिष्ठेर्मा प्रमादी भवेर्मनाग् । नास्तीदं द्वारिकापुर्याः सौधं सप्तवसुंधरम् ॥ १४० ॥
इत्युक्त्वा वलितग्रीवं पश्यन् पश्यन् ययौ बलः । प्रातिकूल्यमगणयन् शकुनानां विधेर्वशात् ॥ १४१ ॥
दैवेऽनुकूले प्रतिभाऽनुकूलैव भवेत्सदा । प्रतिकूले च तस्मिन् हि प्रतिकूलैव सा नृणाम् ॥ १४२ ॥
पादं जानूपरि न्यस्य मुखं प्रच्छाद्य वाससा । पीतेनाऽध्वतरोर्मूले सुष्वाप श्रमपीडितः ॥ १४३ ॥
सद्य एव ययौ निद्रां श्रमिणां सुलभा हि सा । तत्राऽऽगादथ जारेयः करे कुर्वन् धनुः-शरान् ॥ १४४ ॥
तथा सुप्तं हरिं मत्वा मृगं सोऽधिज्यधन्व(न्वा)भूत् । आकर्ण कृतमौर्वीको मुञ्चति स्म शरं बलात् ॥ १४५ ॥
गत्वा पादतले पद्मे बाणो लग्नो महाफलः । क्षणादुत्थाय दाशार्हो जगादेति विलोकयन् ॥ १४६ ॥
अरे ! कः सुखसुप्तं मां बाणेनाऽताडयत् कुधीः । स मामात्मानमावेद्य प्रादुर्भवतु सत्वरम् ॥ १४७ ॥

१ जलम् ।

जारेयस्तं नरं ज्ञात्वा पश्चात्तापपरोऽवदत् । बान्धवो विष्णु वलयोरग्रजो वसुदेवभूः ॥ १४८ ॥
जरासुतोऽस्मि कृष्णस्य रक्षार्थमहमागमम् । मुक्त्वा मातर पितरौ भ्रातॄंश्च स्वगृहादिकम् ॥ १४९ ॥
श्रीनेमिवचसा ज्ञात्वा मरणं मन्निमित्तजम् । वनवासं श्रयामि स्म तेन द्वादशवत्सरान् ॥ १५० ॥
मानुष नाहमद्राक्षमत्रेह क्रीडयाऽऽगमम् । ज्ञात्वा दूरान्मृगमहमकार्षं शरमोक्षणम् ॥ १५१ ॥
अज्ञानाद् हि कृतं तेनाऽपराधं मे भवानपि । क्षमतां भाषतां चैव स्वं नामादि यथारुचि ॥ १५२ ॥
अथाऽवदद्धरिः भ्रातरागच्छ मम सन्निधौ । अहं कृष्णोऽस्मि ते भ्राता यत्त्राणार्थमिहाऽऽगमः ॥ १५३ ॥
भवितव्यं भवत्येव नाऽन्यथा तद्भवेत् क्वचित् । चलेदपि महानद्रिः न चलेत्तीर्थकृद्वचः ॥ १५४ ॥
तथोक्ते तेन हा जात किमिदमिति चिन्तयन् । आगत्य सविधं चोपलक्ष्यांह्रिकमलेऽपतत् ॥ १५५ ॥
श्रवदश्रुजलासार पाणिनोन्नमिताननम् । हरिश्चकार जारेय वार्तां सर्वां जगाद च ॥ १५६ ॥
हा भ्रातः ! किं तवाऽऽतिथ्यमकार्षमहमीदृशम् । हा ! ज्ञात्वाऽहं वधं भ्रातुः श्रीनेमिवचनैरपि ॥ १५७ ॥
कथं तदैव न मृतो हा ? किमेतदुपस्थितम् । वसुधे ! विवरं देहि मां गृहाणाऽतिपापिनम् ॥ १५८ ॥
हा ! हा ! द्वादशवर्षीयः प्रयासो मे गतोऽधुना । यथा हेम चिरं ध्मात मुखवातेन गच्छति ॥ १५९ ॥
हा ! वेधः ! किमकार्षीस्त्वं मद्धस्तात् कारयन् वधम् । नरोत्तमस्य मे भ्रातुः किं विराद्धं मया तव ॥ १६० ॥
कमहं नरकं गन्ता पापं कृत्वेदृशं महत् । मरणं श्रेय एवाऽस्तु जीवितेनाऽधुना कृतम् ॥ १६१ ॥

इत्युक्त्वा क्षुरिकां चक्रे करे साहसिकाऽग्रणीः । जारेयं मर्तुमनसं न्यषेधद्यादवाऽग्रणीः ॥ १६२ ॥
साहसं मा कुरु भ्रातः ! किं स्यात् त्वयि मृते सति । त्वं यादवकुलाङ्कूरः स्थितोऽस्येकक एव यत् ॥ १६३ ॥
तत्त्वं भ्रातः ! चिरं जीव वृद्धिं नय निजं कुलम् । न मया च त्वया चाऽपि लङ्घ्यते भवितव्यता ॥ १६४ ॥
दुःखं मुञ्च शृणु त्वं च मद्वाक्यं साहसी बली । याहि याहि द्रुतं भ्रातः ! पाण्डवानां पुरीमथ ॥ १६५ ॥
गृहाण कौस्तुभं रत्नं वदेर्वृत्तान्तमादितः । पाण्डवानां सहायानां मम दुःखेषु सर्वतः ॥ १६६ ॥
दर्शयेः कौस्तुभं रत्नं वचः संवादकृत्तव । मा विलम्बं कुरु भ्रातः ! बलो यद् द्रुतमागमी ॥ १६७ ॥
बलो ज्ञाता यदि वधं तव हस्तान्मदीयकम् । हन्यादेव तदा त्वां च स मयि प्रेमवान् यतः ॥ १६८ ॥
इत्युक्त्वा कौस्तुभं रत्नं समर्प्य व्यसृजद् द्रुतम् । त्वया पथा न गन्तव्यं गन्तव्यं विपथेन यत् ॥ १६९ ॥
पदानुसारी हलभृदागन्ता तव पृष्ठतः । इति शिक्षित एवाऽऽशु बाणाऽऽकर्षणपूर्वकम् ॥ १७० ॥
नत्वा पादौ रुदन् दुःखात् स ययौ त्वरितक्रमम् । सिंहाऽवलोकनं कुर्वन्नभूद् दूरे दृशोः पथात् ॥ १७१ ॥
गतेऽथेति जरापुत्रे वेदनाऽऽर्तोऽभवद्धरिः । संयोजितकरो भूत्वोदङ्मुखः श्रवदश्रुदृक् ॥ १७२ ॥
नमो नमः श्रीअर्हद्भ्यः सिद्धेभ्यश्च तथा नमः । आचार्येभ्योऽप्युपाध्याय-साधुभ्यश्च नमोऽस्तु मे ॥ १७३ ॥
यदुवंशकुलोत्तंस ! नमस्तुभ्यं महामते ! । य ईदृग्दुःखराशिभ्यो भीतोऽत्याक्षीद् गृहाश्रयम् ॥ १७४ ॥
धिग् मां बत ! विजानानं श्रीमन्नेमिजिनाऽऽननात् । भावीदृग्दुःखसंभारं तथाऽपि विरतं न हि ॥ १७५ ॥

श्रीमन्नेमिदिशं स्थित्वा चैत्यवन्दनमाचरत् । पापस्थानानि सर्वाण्यालोचयामास शुद्धधीः ॥ १७६ ॥
एकोऽहं नाऽस्ति मे कश्चिन्नाऽहमप्यस्मि कस्यचित् । एवमदीनचित्तश्च चकाराऽऽराधनं हरिः ॥ १७७ ॥
अवशिष्टमुक्त्वाऽऽर्तायुः क्षुत्तृड्भृशनिपीडितः । महावेदनाकीर्णोऽभवद् दुर्ध्यानवान् क्षणात् ॥ १७८ ॥
द्वैपायनेन मुनिना हा ! दग्धा द्वारिकापुरी । अहं यदि लभे तं च वन्हौ कुर्वे तादिन्धनम् ॥ १७९ ॥
हा ! मे सर्वां पुरं दग्ध्वा क्व जगाम स दुष्टधीः । लभेयं यदि तं पाप मर्दं मर्दममारयम् ॥ १८० ॥
ध्यानं रौद्रमिति प्राप्य क्षणं वैरं विचिन्तयन् । सहस्राऽब्दप्रमिताऽऽयुः तृतीयामवनीं ययौ ॥ १८१ ॥
षोडशाऽब्दाऽतिबालत्वे भूपत्वे चाणपद् तथा । जये वर्षाणि चाऽष्टाऽर्द्धचक्रितायां तथाऽभवन् ॥ १८२ ॥
शतानि नव विंशत्यधिकानीति च सङ्ख्यया । प्रपालितसहस्राऽब्दजीवितोऽभूज्जनार्दनः ॥ १८३ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु—
लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीरौक्मिणेयचरितं ललितं चकार
सर्गोऽत्र षोडश इति प्रतिपूर्यते स्म ॥ १८४ ॥

इति श्रीप्रद्युम्नचरिते महाकाव्ये द्वारिकानगरीप्रलयकरणपृच्छा–स्वकीयमरणनिमित्तपृच्छा–श्रीनेमिप्रत्युत्तर–श्रीप्रद्यु-
म्न-शाम्बादिकुमारदीक्षा–द्वारिकादाह–श्रीकृष्णाऽवसानवर्णनो नाम षोडशः सर्गः सम्पूर्णः ।

# सप्तदशः सर्गः ।

अथाऽऽगाज्जलमादाय पद्मिनीपुटके हली । वार्यमाणोऽपशकुनैः कृष्णाऽभ्यर्णं महामनाः ॥ १ ॥
निद्रालुरयमस्तीति नाऽऽगतं वेत्ति मां ततः । भृशं श्रान्तस्य निद्रालोः निद्रामायात्विति स्थितः ॥ २ ॥
क्षणं स्थित्वा ततः प्रोचे भ्रातरुत्तिष्ठ सत्वरम् । जलं पिब मयाऽऽनीतं स्वच्छं सत्पद्मिनीपुटे ॥ ३ ॥
इत्युक्तेऽपि नोत्थितं तं मुखाद्वासोऽपसारयन् । ददर्श काष्ठनिश्चेष्टं जीविताङ्कविवर्जितम् ॥ ४ ॥
किं मृतोऽयं मम भ्रातेत्यवेत्योत्पन्नदुःखभाक् । गाढं रुरोद मूर्च्छां च प्राप भूमौ पपात च ॥ ५ ॥
शीतलस्पर्शवातेन लब्धसंज्ञः तदैव सः । विललाप चिरं भ्रातृगुणसन्दोहमालपन् ॥ ६ ॥
उवाच येन सुप्तो मे हतो भ्राता महाबलः । प्रादुरास्तां मम पुरः तत् फलं प्रापयामि यत् ॥ ७ ॥
सुप्तं प्रमत्तं भ्रूणं[1] च स्त्रियं हन्यान्न कर्हिचित् । इति नीतिमतिक्रम्य केनेदं पापमादृतम् ? ॥ ८ ॥
स आगत्य पुरोभूय तिष्ठतु क्व जगाम सः । इति भूयो वदन् मूर्च्छन् पतनोत्पतने व्यधात् ॥ ९ ॥
इत्थं विलप्य बहुधाऽभवद् मोहाकुलो भृशम् । चिन्तयामास न मृतः किं तु रुष्टोऽस्ति रोषणः ॥ १० ॥
जाते विलम्बे पानीयाऽऽनयनेन ततो मयि । इति सद्यः पपातांऽह्र्योः क्षमस्वाऽऽग इति ब्रुवन् ॥ ११ ॥

१ गर्भम् ।

भ्रातरत्तिष्ठ सन्ध्येयं क्षणाद्रागवती बभौ । नाऽयं शयनकालस्ते नीतिशास्त्रविदो हरे ! ॥ १२ ॥
कस्तेऽय कोपसमयो दुःखितस्य ममोपरि । सन्तापयसि किं भ्रातः ! द्वारिकादाहदुःखितम् ॥ १३ ॥
इत्युक्त्वा तं दधावङ्के मूर्ध्नि चुम्बन् मुहुर्मुहुः । कर्णे प्रविश्य चोवाच मन्तुमेकं सहस्व मे ॥ १४ ॥
उत्तिष्ठोत्तिष्ठ हे भ्रातरावां याव इतो वनात् । यतश्च सन्ति बहवो वैरिणः तव दुःसहाः ॥ १५ ॥
उत्तिष्ठोत्तिष्ठ हे भ्रातः ! जलं पिब सुशीतलम् । इत्युक्त्वा स्थापयामास तन्मुखे पद्मिनीपुटम् ॥ १६ ॥
इत्थं विलपता तेन सान्त्वनां कुर्वता तथा । अतिक्रान्ता तत्र रात्रिरुत्सङ्गस्थमुरारिणा ॥ १७ ॥
अथ प्रभाते सञ्जाते चकार मुखधावनम् । जलेन तेन स्वच्छेन भ्रातुः स्नेहविमोहितः ॥ १८ ॥
वासोऽञ्चलेन स्वेनैवोज्ज्वलमादर्शवद् व्यधात् । तदनु मार्थयामासोत्तिष्ठ भ्रातः ! जलं पिब ॥ १९ ॥
नोत्थितं तमिति प्रोक्ते स्कन्धे जग्राह मूढधीः । बभ्राम निखिलं सत्रं रोदयंश्च रुदन् स्वयम् ॥ २० ॥
प्रत्यह कृष्णदेहस्य चकार स्वच्छवारिणा । स्नपन भूषणं चाऽपि स्वस्य वासोऽञ्चलेन सः ॥ २१ ॥
पद्मानि शतपत्राणि तथा पुष्पाणि भूरिशः । उच्छित्य सोऽर्चनां चक्रे तस्याऽनुनयहेतवे ॥ २२ ॥
एवं च कुर्वतस्तस्य षण्मासा अतिचक्रमुः । तथैव भ्रमतस्तस्य वर्षाकाल उपेयिवान् ॥ २३ ॥
पश्यति स्माऽथ सिद्धार्थोऽवधिना त तथाविधम् । अचिन्तयच्च यदहो ! मोहोऽय महतामपि ॥ २४ ॥



१ वनम् ।

ममाऽप्यहो ! प्रमादोऽयं ज्ञानेनाऽऽलोकितं न हि । अथाऽप्यहं यामि शीघ्रं तत्प्रबोधविधित्सया ॥ २५ ॥
इति ध्यात्वा समायातो विकुर्व्य रथमेककम् । पाषाणखण्डनिर्माणं बलस्य पुरतः स्थितः ॥ २६ ॥
रथमारोहयामास पर्वतं निकटस्थितम् । पर्वतग्रावघातेन बभूव शतशो रथः ॥ २७ ॥
कुटुम्बिरूपः तं देवः सन्धातुं समुपाविशत् । कृत्वा जत्वाऽऽदिसामग्रीं सकलामपि तत्पुरः ॥ २८ ॥
बलदेव उवाचैवं मूर्खो भवसि किं मुधा । रथो ग्रावमयो भग्नः शक्यते किमु योजितुम् ? ॥ २९ ॥
देवोऽप्युवाच ते भ्राता सङ्ग्रामेषु हि भूरिषु । हतो न केनाऽप्यरिणा सांप्रतं स हतः किल ॥ ३० ॥
बाणेनैकेन केनाऽपि मृतश्च स क्षणादपि । जीविष्यति यदा ह्येष रथः सज्जो भविष्यति ॥ ३१ ॥
इत्युक्ते मुष्टिमुद्यम्य दधावे मारणाय तम् । रे मूर्ख ! मम जीवन्तं बन्धुं वदसि किं मृतम् ? ॥ ३२ ॥
अथ श्यामशिलायां स रोपयामास पद्मिनीम् । सेचयामास स घटैः स्वच्छोदकभृशं भृतैः ॥ ३३ ॥
उवाच कामपालस्तं किं करोषि मुधा श्रमम् । किमु श्यामशिलायां स्यात् पद्मिनीरोपणं जड ! ? ॥ ३४ ॥
त्रिदशः प्रोचिवांस्तत्र जीविष्यति तवाऽनुजः । मृताश्चिरं तदा भाति ग्राव्णि मे पद्मिनीवनम् ॥ ३५ ॥
इत्युक्ते च प्रियमधुः प्राह भ्रकुटिभीषणः । मामपृष्ट्वा जलमपि पिबेद्यो न यदृच्छया ॥ ३६ ॥
स किं नु म्रियते मूढ ! मामपृष्ट्वा मनागपि । दूरतो भव मा वादीरीदृशं कटुकं वचः ॥ ३७ ॥

१ जतु-लाक्षा ।

किञ्चिदग्रे भवन् सोऽथ दग्धद्रुमं शुभोदकैः । सिञ्चति स फलाकाङ्क्षी कुर्वन्नावालमुच्चकैः ॥ ३८ ॥
रेवतीशस्तदोवाच रे किं मूढ ! विचेष्टसे । दग्धो द्रु फलितो दृष्टः किमु केनाऽपि कश्चन ? ॥ ३९ ॥
स सिद्धार्थः सुधाभोजी प्राह स्कन्धस्थितो हरिः । जीविष्यति तव भ्राता तद्वनो द्रुः फलेग्रहिः ॥ ४० ॥
प्रलम्बघ्न उवाचैवं ज्येष्ठे भ्रातरि जीवति । किं म्रियेत लघुर्भ्राता मुधा मा त्व मृषा वद ॥ ४१ ॥
तवाऽऽगः सोढमेतन्मे मा वदेः पुनरीदृशम् । वदिष्यसि पुनरिदं न पश्येः शुभमात्मनः ॥ ४२ ॥
इत्थं कृतेऽपि व्यामूढे बले सति सुहृत् सुरः । दूर्वा आनीय सग्रस्काः चिक्षिपे गोशवाऽऽनने ॥ ४३ ॥
अवदद् बलदेवोऽथ मृता गौः किं चरत्यहो ? । दूर्वाः श्यामा अपि भृशं तन्मा मूढतरो भव ॥ ४४ ॥
विहस्यैव सुरोऽप्यूचे पाययस्यम्बु किं मृतम् । हरिं मामुपदेशं त्वमीदृश ददसे किमु ? ॥ ४५ ॥
परोपदेशे कुशलाः स्वोपदेशे जडाः किल । नीत्युक्त इति दृष्टान्तः त्वया सत्यापितोऽधुना ॥ ४६ ॥
अचिन्तयत्तदा चित्ते किं मृतोऽयं ममाऽनुजः । यदेव बहवः प्राहुरेकवाक्य पृथक् पृथक् ॥ ४७ ॥
संशयालुमथ ज्ञात्वा बलं सिद्धार्थरूपभृत् । अमरः पुरतो भूत्वा ननाम चरणौ मति ॥ ४८ ॥
उवाच चाऽह सिद्धार्थः सारथिस्तव भक्तिमान् । आदेशं तव संप्राप्य प्रव्रज्य च विपद्य च ॥ ४९ ॥
अभूवं त्रिदशो मृत्वा तव जल्पं समागतः । त्वां प्रबोधयितुं स्वामिन् ! न हि मिथ्यागिरो बुधाः ॥ ५० ॥
जारेयात् स्वामिना प्रोक्तो वधः कृष्णस्य पर्षदि । स मृषा न भवत्येव नाऽन्यथा तीर्थकृद्वचः ॥ ५१ ॥

कृष्णं मुक्त्वा जलार्थं त्वं गतस्तदनु निद्रितम्। पीताम्बराऽऽवृतमुखं जारेयो मृगबुद्धिमान् ॥ ५२ ॥
हतवान् बाणघातेन पादपद्मस्य चोपरि। उपलक्ष्य च तं कृष्णं विललाप रुरोद च ॥ ५३ ॥
समर्प्य कौस्तुभं रत्नं व्यसृजत्तं हरिर्द्रुतम्। आदिशत् पाण्डुपुत्राणां समीपे गमनं सुधीः ॥ ५४ ॥
तवाऽऽगमभिया सोऽपि सद्य एवाऽगमत्तराम्। अथाऽतः त्वं विजानासि सर्वं तव विचेष्टितम् ॥ ५५ ॥
उवाच बलदेवस्तं भोः! भोः! साधु कृतं त्वया। अज्ञानतमसा ग्रस्ते भास्वत्कृत्यं प्रकुर्वता ॥ ५६ ॥
अथ प्रोवाच सिद्धार्थं कृत्यं मद्योग्यमादिश। सारथिः त्वं पुराऽप्यासीरधुना धर्मसारथिः ॥ ५७ ॥
स सुरः प्रोचिवान् प्रेम्णा प्रव्रज्यां श्रेयसीतराम्। नाऽन्यद्योग्यं प्रपश्यामि परलोकस्य साधनम् ॥ ५८ ॥
ओमिति प्रतिपेदानः सिन्धुसागरसङ्गमे। चन्दना-ऽगुरु-कस्तूरी–घनसारादिवस्तुभिः ॥ ५९ ॥
हरिदेहस्य संस्कारमकरोद् ज्वालिताऽर्चिषि। शोकं निवर्तयामास ज्ञातेदृशभवस्थितिः ॥ ६० ॥
सिद्धार्थत्रिदशो नत्वा यथाऽऽयातस्तथा गतः। परमां मुदमापन्नः स्वकजल्पस्य पालनात् ॥ ६१ ॥
नेमिस्वाम्यपि विज्ञाय तं तपस्यापरायणम्। प्रैषीद् विद्याधरं साधुमेकं तत्र कृपापरः ॥ ६२ ॥
तस्य पार्श्वे रामभद्रो व्रतं जग्राह निर्ममः। प्रारेभे च तपः कर्तुं तीव्रं कर्मनिषूदनम् ॥ ६३ ॥
तुङ्गिकाशिखरं गत्वा मासक्षपणपारणः। कायोत्सर्गपरो नित्यमुवास स समाधिमान् ॥ ६४ ॥
अन्यदा मासक्षपणपारणार्थं पुरेऽविशत्। समीपस्थे भाविताऽऽत्मा सम्यगीर्यापथे स्थितः ॥ ६५ ॥

आलोक्य रूप रामस्य कार्तिकीशशिसोदरम् । पानीयहारिका रामा बभूवुः कामविह्वलाः ॥ ६६ ॥
तासां मध्ये परमेका पश्यन्ती रामसंमुखम् । घटकण्ठभ्रमाद् पुत्रकण्ठे पाशं न्यधाद् दृढम् ॥ ६७ ॥
कूपे प्रक्षेप्तुमारेभे सा यावद् व्यग्रमानसा । अपश्यत्ता तथाऽवस्थां बलश्चिन्तितवानिति ॥ ६८ ॥
धिग् मे रूप महाऽनर्थकारक चित्तहारकम् । युवतीना स्मरोल्लासकारण दर्शने सति ॥ ६९ ॥
तर्हि राजपथे वह्व्यो महेभ्यतनुजाः स्थिताः । भविष्यन्ति च तासा हि कर्मबन्धाय कारणम् ॥ ७० ॥
न स्यां यथाऽह तत् कुर्वे विमृश्येति स्वचेतसि । निवर्त्य वालहत्यायाः तां जगाम वहिः पुरः ॥ ७१ ॥
जग्राहाऽभिग्रहं साधुर्न प्रवेक्ष्याम्यतः परम् । पुरं वा ग्राममथवा यदि लप्स्येऽन्नभोजनम् ॥ ७२ ॥
काष्ठाऽऽदिहारकैर्दत्तं भावतः प्रासुक तदा । करिष्ये पारणं तेन मासस्य तपसः खलु ॥ ७३ ॥
अन्यथाऽस्तु पुनर्मासक्षपणं क्षपणं सदा । कर्मणामिति कृत्वा स गिरिं याति स्म तुङ्गिकाम् ॥ ७४ ॥
चकार पारण तत्र भोजनेन महामनाः । दत्तेन काष्ठहाराऽऽदिजनेन श्रद्धया भृशम् ॥ ७५ ॥
भद्रकाः ते पुरं गत्वा राज्ञे व्यज्ञपयन् मुदा । मुनिः कोऽपि स्फुरद्रूपः चिद्रूपोऽस्ति गिरौ तव ॥ ७६ ॥
कुर्वन्नस्ति तपस्तीव्रमुदारस्फाररूपवान् । इति श्रुत्वाऽथ भूपालः चिन्तयामासिवानिति ॥ ७७ ॥
अयमुग्रतपाः साधू राज्य गृह्णातु मा मम । इति सनह्य सोऽभ्यागाद् हन्तुं तं सेनया नृपः ॥ ७८ ॥
ततः सिद्धार्थदेवेन सिंहा लक्षश एव हि । विकृतास्त गिरिं सर्वं स ददर्श भयङ्करम् ॥ ७९ ॥

आगत्य भूपतिः पादौ ननाम सेनया सह । सिद्धार्थो बोधयामास नृपं तत्पूर्ववार्तया ॥ ८० ॥
गतः पुर्यां निवृत्त्याऽथ भूपो बोधमवाप्य सः । ततः परं मुनिः सीरी नरसिंहाऽभिधोऽभवत् ॥ ८१ ॥
तपस्यतो वने तस्य सुधासदृशया गिरा । व्याघ्राऽऽदयोऽपि पशवो भेजिरे धर्ममार्हतम् ॥ ८२ ॥
अणुव्रतधराः केचित् केचित् सम्यक्त्वधारिणः । मांसाऽऽहारान्निवृत्ताश्च बभूवुर्भाग्ययोगतः ॥ ८३ ॥
वैराग्यरङ्गतः केचिद् न चक्रू रात्रिभोजनम् । ब्रह्मव्रतं ललुः केऽपि त्यजन्ति स्म परस्त्रियम् ॥ ८४ ॥
पार्श्वं न मुमुचुस्तस्य साधोः विनयिशिष्यवत् । पिबन्तो वाक्सुधासारं कुर्वन्तो दर्शनं मुनेः ॥ ८५ ॥
तेषां मध्ये मृगश्चैकः सम्बन्धात् प्राग्भवोद्भवात् । अतीव भक्तः सञ्जज्ञे जातिस्मृतिमवाप च ॥ ८६ ॥
पारणादिवसे साधोः वनं भ्रान्त्वाऽखिलं मृगः । विलोक्य काष्ठहाराऽऽदिकृतां रसवतीं शुभाम् ॥ ८७ ॥
आगत्य ज्ञापयामास संज्ञया पुच्छचालनात् । कृतया तां च विज्ञाय पारणायै चचाल सः ॥ ८८ ॥
मुनेरग्रेसरीभूय मार्गं दर्शयति स्म सः । भक्तश्राद्ध इव श्रद्धाशुद्धः परमहर्षवान् ॥ ८९ ॥
एवं च कुर्वतस्तस्य कालो भूयान् ययौ किल । अथाऽन्यदा काष्ठहेतोराययू रथकारकाः ॥ ९० ॥
चिच्छिदुः केऽपि काष्ठानि चक्रू रसवतीं पुनः । केऽपि भ्रमन् मृगः तां च सञ्जातां पश्यति स्म सः ॥ ९१ ॥
आगत्य ज्ञापयामास साधवे तां स्वसंज्ञया । ध्यानं विमुच्य साधुश्च चचालेर्यां विशोधयन् ॥ ९२ ॥

१ बलदेवः ।

सामग्रीं सकलां कृत्वा ते तस्थुः भोजनोन्मुखाः । पश्यन्ति स्म स्फुरत्कार्यं कल्पद्रुमिव जङ्गमम् ॥ ९३ ॥
आयान्तं साधुमुख्यं तं पुरःसारङ्गमुचकैः । जहृषुः मनसाऽत्यन्तं दृष्ट्वा काले समागतम् ॥ ९४ ॥
उत्तस्थौ रथकारेशोऽभिमुखं तस्य चाऽऽययौ । पदानि तत्र सप्ताऽष्टौ नमन् मूर्ध्ना कृताञ्जलिः ॥ ९५ ॥
अहो ! मुनेश्छविः काऽपि प्रशमः कोऽप्यहो ! महान् । अहो ! मुखं शरच्चन्द्रप्रतिबिम्बमिवाऽपरम् ॥ ९६ ॥
अद्य मे सफलं जन्म नेत्रे प्राप्तफले मम । अहो ! मे सुकृतोल्लास इह मे भावि किं शुभम् ? ॥ ९७ ॥
वेलेयं भोजनस्येदं भोजनं समुपस्थितम् । योग्योऽतिथिरयं कोऽपि प्राप्तः कल्पद्रुरेव तत् ॥ ९८ ॥
रथकाराऽग्रणीरेवं विचिन्त्य विकसन्मुखः । स्वहस्तेनैव सकलं भोज्यं मुनिपुरोऽनयत् ॥ ९९ ॥
मुनिर्विचार्य तत् शुद्धं प्रासुकं चैषणीयकम् । दातुश्च भावनैर्मल्यं यथायोग्यं तदग्रहीत् ॥ १०० ॥
सारङ्गोऽपि समीपस्थः कुर्वन् पुच्छस्य नर्तनम् । ऊर्ध्वाऽऽननो भृशं हृष्यन्नपश्यत् तावुभावपि ॥ १०१ ॥
चिन्तयामास च चिरं धन्योऽयं रथकृत् प्रभुः । यानपात्रमिव प्रापि येनेदं पात्रमीदृशम् ॥ १०२ ॥
वेलेयं भोजनस्याऽपि भोज्यं चाऽतीवसुन्दरम् । आगान्मुनिरयं कोऽपि मासक्षपणपारणी ॥ १०३ ॥
तदस्य चित्तं वित्तं च पात्रं वाऽपि सुनिर्मलम् । त्रिकयोगस्तु मिलितो दुर्लभः प्रायशो नृणाम् ॥ १०४ ॥
अहं पुनरभाग्योऽस्मि त्रिकयोगविवर्जितः । न दातुं न तपः कर्तुं शक्तः तिर्यक्त्वदूषितः ॥ १०५ ॥

१ पुर. पुरस्तात्, सारङ्गो हरिणो यस्य तम् ।

त्रयोऽप्येवं स्थिता यावद् धौतसद्ध्यानमानसाः । अकस्मादाययौ वातो द्रुमोन्मूलनकौतुकी ॥ १०६ ॥
अर्द्धच्छिन्नोऽपतद् वृक्षः तेषामुपरि वाततः । विपद्य ब्रह्मलोके तेऽभवन् देवा महर्द्धिकाः ॥ १०७ ॥
पद्मोत्तरविमानान्तः तेजसां राशयः किमु । मूर्तिमत्पुण्यसन्दोहाः किमु स्वर्गैकभूषणम् ॥ १०८ ॥
समाः शतं व्रतं रामः प्रपाल्याऽतीवनिर्मलम् । देवभूयं गतोऽपश्यत् तृतीयज्ञानचक्षुषा ॥ १०९ ॥
हरिं तृतीयनरके ताड्यमानं सुराऽधमैः । परमाधार्मिकैः भूरिप्रकारैरिति निर्दयम् ॥ ११० ॥
वैक्रियेण शरीरेण कृष्णाऽभ्यर्णमुपेयिवान् । स्नेहेन मोहितो रामः तं ददर्श तथास्थितम् ॥ १११ ॥
विष्णुं दृष्ट्वाऽवदद् रामो भ्राताऽहं रामनामकः । व्रतं प्रपाल्य सुचिरं ब्रह्मलोके सुरोऽभवम् ॥ ११२ ॥
मिलनायाऽऽगमं विष्णो! कथयाऽथ करोमि किम् ? । विष्णुराह वरं भ्रातः ! मामितः कर्षय द्रुतम् ॥ ११३ ॥
क्षेत्रजां वेदनां सोढुं परमाधार्मिकैस्तथा । कृतामशक्तो यदहं सुखी पूर्वभवेऽभवम् ॥ ११४ ॥
इत्युक्ते बलवान् देवो भुजाभ्यामाददे द्रुतम् । गृहीत एव न्यपतद् भूमौ पारदवद् भृशम् ॥ ११५ ॥
पुनरादीयमानः स भुजाभ्यां गाढयन्त्रणात् । गलत्कुष्ठीव परमां प्रत्युताऽऽप व्यथां ततः ॥ ११६ ॥
तदा जगाद विष्णुस्तं भ्रातः ! मा कुरु मा कुरु । करग्रहान्न सोढाऽस्मि व्यथामेनां सुदुःसहाम् ॥ ११७ ॥
बद्धं मया हि यत् कर्म सोढव्यं तु मयैव तत् । स्वामिनाऽऽख्यातमेवैतत् तत् किं भवति चाऽन्यथा ॥ ११८ ॥
ऊचे बलोऽथ बलवान्नप्यहं कर्मयन्त्रितम् । न नेतुमीशः तिष्ठामि सान्निधौ ते यदिच्छसि ॥ ११९ ॥

हरिरूचे त्वया भ्रातः ! किं स्थितेन निरर्थकम् । त्वयि सत्यपि सोढव्या वेदना दुःसहा मया ॥ १२० ॥
स्वर्णं विभज्य गृह्णन्ति रूप्यं रत्नं तथा गृहम् । राज्यं च न पुनः कोऽपि वेदनां स्वजनस्य हि ॥ १२१ ॥
परं दाहेन मे पुर्याः मम चाऽत्रस्थयाऽनया । मृतस्याऽसुहृदा हर्षोऽप्यहर्षः सुहृदामभूत् ॥ १२२ ॥
गत्वा दर्शय मे मूर्तिं शङ्ख चक्र-गदाधराम् । तथा शार्ङ्गधरां पीतवस्त्रामाभरणैर्युताम् ॥ १२३ ॥
तार्क्ष्ययानां सलक्ष्मीकां स्वर्णरत्नविमानगाम् । लोकानां सुहृदां चाऽप्यसुहृदां चन्दनाऽर्चिताम् ॥ १२४ ॥ (युग्मम्)
तथा त्वं मूर्तिमात्मीयामपि दर्शय पावनाम् । नीलाम्बरधरां धीरां तालध्वज ! मनोहराम् ॥ १२५ ॥
गोदारणायोग्रपाणि मन्मूर्तिनिकटास्थिताम् । एवं कुरु महाभाग ! देशे देशे पुरे पुरे ॥ १२६ ॥
यथा लोकः प्रतीयेताऽऽवयोः सर्वोऽप्यनश्वरीम् । सम्पद् विपदं नैव जानीयाज्जगदुत्तम ! ॥ १२७ ॥
ओमिति प्रतिपद्याऽथ रामः प्रेमवशंवदः । आगत्य भरतावन्या विमानर्द्धिं प्रदर्शयन् ॥ १२८ ॥
देशे देशे पुरे ग्रामे जगादेति जनान् प्रति । भो ! भो ! लोकाः ! सावधाना वाक्यं शृणुत संप्रति ॥ १२९ ॥
इयं सृष्टिः कृताऽस्माभिरस्माभिः संहरिष्यते । द्वारिकाऽपि च नगरी कृतेय संहृता यथा ॥ १३० ॥
इच्छयैव वयं यामः तथाऽऽयामो यदृच्छया । दिवं वा पृथिवीलोकं परतन्त्रा वयं न हि ॥ १३१ ॥
नास्ति कर्ता नास्ति हर्ताऽस्मदन्यो जगतीतले । पूजिताः स्वर्गदास्तेषां व्यत्ययेन तु दुःखदाः ॥ १३२ ॥
अस्माकं प्रतिमां कृत्वा पाञ्चजन्यादिभूषिताम् । पूजा कुरुत पुष्पादिसकलोपस्करैर्युताः ॥ १३३ ॥

एवं निशम्य तां वाचं सर्वो लोकस्तथाऽकरोत् । सर्वत्र विस्तृताः पूजाः प्रतिमाश्चोभयोरपि ॥ १३४ ॥
प्रतिमाऽर्चनकर्तॄणां विभूतिं महतीं ददौ । बलदेवः सुरस्तेन विष्णुभक्तो जनोऽजनि ॥ १३५ ॥
दिने दिने च मिथ्यात्वं वर्द्धयेत् स्वयमेव तत् । न ह्यादित्यंतरं कोऽपि वपत्युद्भवाति स्वयम् ॥ १३६ ॥
एवं निर्माय देवोऽपि जगाम स्वां दिवं मुदा । भुङ्क्ते सुखं निर्व्यपायं चारित्रद्रोः सुमं किमु ? ॥ १३७ ॥
इतश्च स जरापुत्रः पाण्डवानां पुरीं ययौ । सभासीनं धर्मपुत्रं रुदन्नेवं शुचं जगौ ॥ १३८ ॥
तं रुदन्तं भृशं दृष्ट्वा पप्रच्छाऽऽकुलमानसः । सूनुः धर्मस्य किमिति किं जातं रोदिषीति यत् ॥ १३९ ॥
कष्टेन महता नेत्रजलमुन्मृज्य वाससा । स्वच्छीकृतः स आह स्म वृत्तान्तं मूलतोऽखिलम् ॥ १४० ॥
समार्पयदभिज्ञानं कौस्तुभं रत्नमेव तत् । दृष्ट्वा च कौस्तुभं रत्नं भवन्तः शोकविह्वलाः ॥ १४१ ॥
रुरुदुः समकालं ते रोदयन्तः परानपि । साङ्क्रामिक्येव रुजया शुचा सङ्क्रान्तया मिथः ॥ १४२ ॥
सद्यो मूर्च्छामवापुस्ते क्षणाच्च लब्धसंज्ञकाः । विलपन्ति स्म गृह्णन्तः तद्गुणानुपकारकान् ॥ १४३ ॥
इत्थं चिरं शुचं कृत्वा विज्ञातदृग्भवस्थितिः । चकार प्रेतकार्याणि कृष्णस्य सुकृतोद्वहः ॥ १४४ ॥
शोकं निवर्त्य महता कष्टेन जनताक्यतः । महोत्सवन जारेयं राज्ये स्थापयति स्म सः ॥ १४५ ॥
अथ विज्ञाय ज्ञानेन चक्षुषा नेमितीर्थराट् । तान् पवित्रांजपून् पञ्च प्रैषीत् करुणसागरः ॥ १४६ ॥

१ अर्कंतरम् । २ धर्मपुत्रः ।

श्रीआचार्यधर्मघोष नाम्नोऽपि परिणामतः । चतुर्ज्ञानधरं धीरं मुनिपञ्चशतीवृतम् ॥ १४७ ॥
अथ प्रमोदमापन्नाः त पञ्चाऽपि नरोत्तमाः । महोत्सवेन जगृहुर्व्रतं तेषां समीपतः ॥ १४८ ॥
द्रौपद्यपि च तैः सार्द्धं व्रतं जग्राह हर्षभाक् । पतिव्रताया धर्मोऽयं न मुञ्चति यतः पतिम् ॥ १४९ ॥
व्रतं ते पालयामासुः विविधाऽभिग्रहैर्युताः । गुरुपार्श्वे पठन्तश्च द्वादशाङ्गरा बभुः १५० ॥
कुन्ताऽग्रेण हि चेद्दाता पुमान् दास्यति कश्चन । ग्रहीष्येऽहं तदा भिक्षामुपवासोऽस्तु मेऽन्यथा ॥ १५१ ॥
भीमर्षिरिति जग्राहाऽभिग्रहं दृढमानसः । तपश्चकार षण्मासानभिग्रहयुतः सुधीः ॥ १५२ ॥
चकार पारणां पूर्णाऽभिग्रहस्तदनन्तरम् । एव पञ्चाऽपि ते शूरा अभवन् व्रतकर्मणि ॥ १५३ ॥
इतश्चाऽनेकदेशेषु विहृत्य परमेश्वरः । निर्वाणाऽवसरं ज्ञात्वा ययौ रैवतके गिरौ ॥ १५४ ॥
चरमं तत्र समवसरण नेमिनः प्रभोः । चक्रुः सुरा महाभक्त्या शालत्रितयभासुरम् ॥ १५५ ॥
अथ ते पाण्डवाः पञ्च श्रुत्वा नेमिं समागतम् । गिरौ रैवतके तत्र नन्तुमुन्मनसोऽभवन् ॥ १५६ ॥
गुरूनापृच्छ्य दत्ताऽऽज्ञा गुरुणा हृष्टमानसाः । अचलन् वन्दितुं नेमिं मासक्षपणपारणाः ॥ १५७ ॥
बहून् देशान् विमुञ्चन्तः पुरो ग्रामांस्तथा बहून् । हस्तकल्पपुरं प्रापुः सुराष्ट्राराष्ट्रभूषणम् ॥ १५८ ॥
अस्मात्पुराद्रैवतको भवेद् द्वादशयोजनैः । इति नेमिजिनं नत्वा मासक्षपणपारणम् ॥ १५९ ॥
करिष्याम इतिध्यानाः वसन्ति स्म महाऽऽशयाः । तां रात्रिं सकलां तत्र कायोत्सर्गपरायणाः ॥ १६० ॥

प्रगे यावच्च ते चक्रुश्चलनोपक्रमं मुदा । तावद्गिरेः समायाताज्जनात्ते शुश्रुवुर्वचः ॥ १६१ ॥
आषाढस्य सिताऽष्टम्यां विधौ चित्रास्थिते सति । गिरौ रैवतके स्वामी नेमिर्निर्वाणमासदत् ॥ १६२ ॥
इति श्रुत्वा समुत्पन्नगाढदुःखा महाशयाः । ते चेलुरकृताऽऽहाराः प्रापुश्च विमलाऽचलम् ॥ १६३ ॥
नत्वा श्रीऋषभं देवं पश्चाऽप्यनशनं व्यधुः । केवलज्ञानिनो भूत्वा महाऽऽनन्दपदं ययुः ॥ १६४ ॥
महिष्योऽष्टौ च कृष्णस्य नेमिनाथस्य बान्धवाः । राजीमतीप्रभृतयः प्रापुः कैवल्यमुत्तमम् ॥ १६५ ॥
अथ मुक्तिपदं प्राप्ते स्वामिनि श्रीशिवाऽङ्गजे । प्रद्युम्नसाधुः शाम्बाऽऽदिकुमारैः साधुभिर्वृतः ॥ १६६ ॥
चक्रे तपांसि भूयांसि क्षमापात्रं कृपापरः । मासा-ऽर्द्धमासक्षपणप्रभृतीनि महामनाः ॥ १६७ ॥
घातिकर्मक्षयं कृत्वा प्राप केवलमुज्ज्वलम् । न हि तपो विना कश्चित् केवलज्ञानमाप्नुयात् ॥ १६८ ॥
शाम्बाऽऽद्योऽपि मुनयस्तथैव प्रापुरुज्ज्वलम् । केवलं यत एकोऽस्ति पन्था मोक्षस्य साधनम् ॥ १६९ ॥
प्राप्याऽथ केवलं साधुः प्रद्युम्नो विहरन् भुवि । भव्यान् प्रबोधयामास सुधामधुरया गिरा ॥ १७० ॥
आर्या-ऽनार्याऽऽदिदेशेषु विजहार चिरं सुधीः । बीजं जिनेन्द्रधर्मस्य वप्तुकाम इवाऽवनौ ॥ १७१ ॥
आदित्यस्येव साधोर्हि परोपकृतये गतिः । जलदस्येव साधोश्च तथा गोर्[1]वर्षणं भवेत् ॥ १७२ ॥
आयुःशेषं मुनिर्मत्वा विहरन् मुनिचर्यया । शत्रुञ्जयगिरिं प्राप तीर्थानां तीर्थमुत्तमम् ॥ १७३ ॥

१ गौर्वाणी जलं च ।

अनेकयतिभि' सार्द्धं विदधेऽनशनं सुधीः । महासमाधि' प्रद्युम्नः शुक्लध्यान विभावयन् ॥ १७४ ॥
आयुःप्रभृतिचत्वारि कर्माण्यायुदमूलयत् । ततोऽष्टकर्मनिर्मुक्तो महानन्द प्रपेदिवान् ॥ १७५ ॥
शाम्बादिसाधवश्चाऽन्येऽप्येवमेव शिव ययुः । सर्वेषामपि साधूना गतिरस्त्वुत्तमैव सा ॥ १७६ ॥

इति निपीय सुधारससोदरं
मदनवृत्तमवाप परां मुदम् ।
दशनहसभृतो वदना-ऽम्बुजा—
च्चरमतीर्थकृतो मगधेश्वरः ॥ १७७ ॥

समजनिष्ट विशिष्य कृताऽऽदरः
सुकृतकर्मणि निर्मलदर्शनः ।
पदयुगं प्रणिपत्य महामति–
र्निजकधाम जगाम महर्द्धिमान् ॥ १७८ ॥

श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु—
लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीविष्णुपुत्रचरितं ललित चकार,
सर्गोऽत्र सप्तदशमान इहाऽऽप ऋद्धिम् ॥ १७९ ॥

इति श्रीदिल्लीदेशे फतेपुरस्थैः पातसाहिश्रीअकब्बरैः श्रीगुरुदर्शनार्थसमाहूत-भट्टारकश्री५ श्रीहीरविजयसूरीश्वरैः सह विहारकृताम्, स्वयं कृतकृपारसकोशग्रन्थश्रावणरञ्जितपातसाहिश्रीअकब्बराणाम्, श्रीहीरविजयसूरिनाम्ना कारित-जीजीयाकरनिवारणस्फुरन्मानानाम्, तथा कारितषड्मासिकजीवाऽभयदानप्रधानस्फुरन्मानानाम्, श्रीजम्बुद्वीपप्रज्ञप्तिसूत्रस्य प्रमेयरत्नमञ्जूषानाम-बृहद्वृत्तिकृताम्, पातसाहिश्रीअकब्बर-दापितोपाध्यायपदानाम्, महोपाध्यायश्री५श्रीश्रीश्रीसकलचन्द्रगणिशिष्य-महोपाध्याय-श्री५ श्रीशान्तिचन्द्रगणिनां शिष्यमुख्योपाध्याय-श्रीरत्नचन्द्रगणिविरचिते श्री-भक्तामरस्तव-श्रीकल्याणमन्दिरस्तव-श्रीदेवाः प्रभोःस्तव-श्रीमद्धर्म-स्तव-श्रीऋषभ-वीरस्तव-कृपारसकोश-अध्यात्मकल्पद्रुम-श्रीनै-षधमहाकाव्य-श्रीरघुवंशमहाकाव्यवृत्ति-नवभगिनीनामनुजे भ्रातरि श्रीप्रद्युम्नचरित्रे महाकाव्ये बलदेवदीक्षा-तपःसाधन-पञ्चमस्वर्गगमन-प्रद्युम्न-शाम्बा-दिकेवलज्ञानमुक्तिगमनवर्णनो नाम सप्तदशमः सर्गः सम्पूर्णः ॥

॥ तत्समाप्तौ च सम्पूर्णं प्रद्युम्नचरितं नाम महाकाव्यम् ॥

## ॥ अथ प्रशस्तिः ॥

श्रीवीरशिष्यो गणभृत् सुधर्मा श्रीद्वादशाङ्गीसमलब्धमर्मा । श्रीमत्तपागच्छमहाद्रुमूलमासीद् भवाम्भोनिधियानपात्रम् ॥ १ ॥
आसीद्गुरुस्तस्य परंपरायां साधुक्रियामार्गविकाशभास्वान् । आनन्दपूर्वो विमलाग्रसूरिर्बुद्ध्या समानीकृतदेवसूरिः ॥ २ ॥
तत्पट्टगगनरत्न–सूरिश्रीविजयदानसूरिवरः । आसीद् भाग्यनिधानं गुणगणनिलयः क्रियापात्रम् ॥ ३ ॥
श्रीहीरविजयसूरिस्तत्पट्टविभूषणं प्रशमसदनम् । आसीन् नरपतिराशिमणतशिरोरत्नमौक्तिकृतचर्चः ॥ ४ ॥ ( गीत्यार्या )
तस्याऽपि शिष्यरत्न स्वरिश्रीविजयसेनसूरिवरः । आसीद् लब्धिमहाब्धिः शमरसपात्रं जगद्विदितः ॥ ५ ॥
तत्पट्टवंशमुक्तामणिरिव तेजस्वितादिगुणयुक्तः । श्रीविजयदेवसूरिः शास्तितमां तपगणं सुगुणः ॥ ६ ॥
यः सौभाग्यगुणेन स्मारयातितमां च शीलगुणयोगात् । जम्बूस्वामिनमुच्चैः जयतात् श्रीविजयदेवगुरुः ॥ ७ ॥
श्रीआनन्दविमलगुरुशिष्याः श्रीसहजकुशलविबुधवराः । सिद्धान्तहेमनिकषाः बभूवुरुद्दामगुणानिग्रहाः ॥ ८ ॥
तेषां सुशिष्यमुख्या वाचकवरसकलचन्द्रनामानः । येषां गिर सुधामिव निपीय भव्याः प्रमोदन्ते ॥ ९ ॥
श्रीशान्तिचन्द्रा वरवाचकेन्द्राः बभूवुरुन्नमतिगीरवक्त्राः । शिष्येषु मुख्या बहुषु प्रवीणास्तेषां गुरूणां गुणभाजनानाम् ॥१०॥
श्रीमज्जम्बूद्वीपप्रज्ञप्तेः वरवृत्तिरत्नसवितारः । श्रीमत्साहिअकबरभूपतिपर्षत्सु लब्धबहुमानाः ॥ ११ ॥ ( गात्याया )

१ बृहस्पति । २ तपगच्छम् ।

श्रीमज्जैनप्रवचनप्रभावनाकृत्यकरणविधिदक्षाः । आसन् विद्यादानैः शिष्याणां भूयसां च पूज्यतमाः ॥ १२ ॥ गीत्यार्या ॥
( त्रिभिर्विशेषकम् )

तेषां गुरूणां गुणसागराणां प्रसादलेशं समवाप्य चक्रे । अभ्यर्थितः शिष्यगणैर्विनीतैः वृत्तोत्तमं[1] वाचकरत्नचन्द्रः ॥ १३ ॥

कृत्वा कृपां मयि बुधैः परिशोधनीयं संशोध्य वीतकलुषं परिवाचनीयम् ।
अन्योपकारविधये च सुलेखनीयं शिष्यादिपाठनपरैः परिशीलनीयम् ॥ १४ ॥

युगं-मुनि-रस-शशि-वर्षे मासीषे[2] विजयदशमिकादिवसे ।
वारे विधौ च विदधे वाचकवररत्नचन्द्र इति चरितम् ॥ १५ ॥ गीत्यार्या ॥

संवत् १६७४ वर्षे आश्विनमासे विजयदशमीदिवसे सूरतबन्दरे महोपाध्यायश्री--रत्नचन्द्रगणिभिः विरचितं

प्रद्युम्नचरितं सम्पूर्णम् ॥

त्रिसहस्राः पञ्चशती पुनरेकोनसप्ततिः श्लोकानाम् । इह सर्वाग्रं वर्णाः षोडश चाऽधिकाः ग्रन्थाग्रम् ॥–३५६९ ॥ १६ अक्षराः॥

॥ इति प्रशस्तिः ॥

१ उत्तमचरित्रम् । २ आश्विने मासि इत्यर्थः ।